YOGATANTRA-GRANTHAMĀLĀ

[ Vol. VII ]

# RUDRAYĀMALAM

Edited by

**Yogatantra Department**

Sampurnanand Sanskrit Vishvavidyalaya.




Research Publication Supervisor

DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚAŚĀSTRĪ'

Director, Research Institute,

Sampurnanand Sanskrit Vishvavidyalaya,

VARANASI

1980

योगतन्त्र-ग्रन्थमाला
[ ७ ]

# रुद्रयामलम्

[ उत्तरतन्त्रम् ]

योगतन्त्रविभागद्वारा
सम्पादितम्




अनुसन्धानप्रकाशनपर्यवेक्षकः
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थाननिदेशकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणस्याम्
२०३७ तमे वैक्रमाब्दे १९०२ तमे शकाब्दे १९८० तमे खैस्ताब्दे

# प्रास्ताविकम्

यद्यपि विश्वस्मिन् संस्कृतवाङ्मयं निस्संशयं सर्वेभ्यो वाङ्मयेभ्यः पुरातनतमं चकास्ति, तथापि योरुपीया विद्वांसः प्रयतमाना दृश्यन्ते ग्रीकलैटिनाऽवेस्तादिभाषाणां संस्कृतसमकालिकत्वसाधनाय। किन्तु जनजीवनकल्याणदृग्भिर्भारतीयमनीषिभिः प्रतिक्षेत्रं यादृशं वाङ्मयं संदृब्धम्, अनितरसाधारणं तादृशं खलु पुरातनतमं सदपि नूतनतमं कस्यामपि भाषायां नाधिगम्यत इति व्याहृतौ नास्ति कश्चिदपि प्रौढिलेशः। एकैकस्मिन् शास्त्रेऽपारो वाङ्मयपारावारव्यापारप्रसारो भारतीयसंस्कृतिसुवासेन सार्धमेव पारेजम्बूद्वीपमपि क्षेत्राणि प्लावयामासेति साम्प्रतं तदीयं समग्रमाकलनं चिरकालिकं महान्तमध्यवसायं प्रतीक्षते।

शास्त्रेष्वन्यतमं शिवोक्तं तन्त्रशास्त्रं चतुष्षष्टिसंख्यकं वर्णितम्। तेषु चतुष्षष्टिसंख्याकेषु तन्त्रग्रन्थेषु 'राधाख्यं मालिनीतन्त्रं रुद्रयामलमुत्तमम्' इत्युक्त्या यद्यपि रुद्रयामलस्यापि समावेशो दृश्यते. तथापि 'सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च' इत्यादिलक्षणात् तन्त्राद् अष्टलक्षणात्मकं यामलं ततो विशिष्टमिवाभिहितम्—

सृष्टिश्च ज्योतिषाख्यानं नित्यकृत्यप्रदीपनम्।
क्रमसूत्रं वर्णभेदो जातिभेदस्तथैव च।
युगधर्मश्च संख्यातो यामलस्याष्टलक्षणम्॥ इति।

अष्टलक्षणात्मकमपि यामलं वाराहीतन्त्रे षड्विधमुक्तम्—१. आदियामलम्, २. ब्रह्मयामलम्, ३. विष्णुयामलम्, ४. रुद्रयामलम्, ५. गणेशयामलम्, ६ आदित्ययामलं चेति। विष्णुयामलब्रह्मयामलयोरनन्तरं रुद्रयामलस्योपदेशादुत्तरतन्त्रतया तत् प्रसिद्धिमुपगतम्। यथा रुद्रयामलस्यैवारम्भे—

परा – श्रीपरमेशानीवदनाम्भोजनिःसृतम्।
श्रीयामलं महातन्त्रं स्वतन्त्रं विष्णुयामलम्॥ १।
शक्तियामलमाख्यातं ब्रह्मणस्तुतिहेतुना।
ब्रह्मयामलवेदाङ्गं सर्वं च कथितं प्रिये॥ २।
इदानीमुत्तराकाण्डं वद श्रीरुद्रयामलम्।
यदि भाग्यवशाद् देवि तव श्रीमुखपङ्कजे॥ इति।

सर्वेषां यामलानां श्लोकसंख्या पृथक् पृथग् निर्धारिता वर्तते। यथा—

यामलाः षट् च संख्यातास्तत्रादावादियामले।
द्वाविंशच्च सहस्राणि त्रयस्त्रिंशच्छतानि च॥

द्वितीये ब्रह्मसंज्ञे ते द्वाविंशतिश्च संख्यया ।
सहस्राणि शतान्यत्र तान्येव कथितानि च ॥
तावत्संख्यासहस्राणि शतानि परिसंख्यया ।
विंशतिश्च तथा संख्या श्लोकाश्च विष्णुयामले ॥
कालसंख्यासहस्राणि वेदसंख्याशतानि च ।
पञ्चषष्टिस्तथा श्लोकाः कनिष्ठे रुद्रयामले ॥ इति ।

एवं तावद् यद्यपि रुद्रयामलमुक्तेषु यामलेषु कनिष्ठमाख्यातमिति तदीया श्लोकसंख्या ३४६५ इतीह प्रसिध्यति, तथापि महासिद्धिसारस्वततन्त्रानुसारेण—

न शक्यं विस्तराद् वक्तुमपि वर्षशतैरपि ।
संक्षेपाद् वै प्रवक्ष्यामि लोककल्पोक्तवर्त्मना ॥
दिवि देवे नवलक्षं पाताले ब्रह्मशासने ।
लक्षमात्रं भारते च क्षितौ तन्त्राणि यानि च ॥

श्लोकसंख्या निर्धारयितुं न पार्यते । यथा पुराणानि भारतीयसंस्कृतेर्विश्वकोशात्मकानि प्रतिज्ञायन्ते, तथा तन्त्रशास्त्रं साधनाव्यापारदिशि ततोऽपि समृद्धतरं नाम विलसति । महाविश्वेश्वरतन्त्रानुसारेण तल्लक्षणानि पुराणलक्षणेभ्योऽप्यधिकानि—

सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च ।
देवतानां च संस्थानं तीर्थानां चैव वर्णनम् ॥
तथैवाश्रमधर्मश्च विप्रसंस्थानमेव च ।
संस्थानं चैव भूतानां यन्त्राणां चैव निर्णयः ॥
उत्पत्तिर्विबुधानां च तरूणां कल्पसंज्ञितम् ।
संस्थानं ज्योतिषां चैव पुराणाख्यानमेव च ॥
कोषस्य कथनं चैव व्रतानां परिभाषणम् ।
शौचाशौचस्य चाख्यानं नरकाणां च वर्णनम् ॥
हरचक्रस्य चाख्यानं स्त्रीपुंसोश्चैव लक्षणम् ।
राजधर्मो दानधर्मो युगधर्मस्तथैव च ॥
व्यवहारः कथ्यते च तथा चाध्यात्मवर्णनम् ।
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते ॥ इति ।

वस्तुतस्तु तन्त्रशास्त्रमितोऽप्यधिकान् वर्णनकोणानधितिष्ठतीति साकल्येन तल्लक्षणनिर्धारणं नावाप्यते ।

रुद्रयामलतन्त्रस्य यद् द्वितीयं संस्करणं १८९२ खीस्ताब्दे श्रीजीवानन्दविद्यासागरभट्टाचार्येण कलिकातानगर्यां प्रकाशितम्, तस्य पटलेषु श्लोकसंख्यायां चास्य संपूर्णानन्दसंस्कृतविश्वविद्यालयीयसंस्करणस्य पटलश्लोकसंख्यातः पर्याप्तं भेदो भवति । विदुषां जिज्ञासूनां च ज्ञानार्थमुभयोस्तुलनात्मकविवरणसूचीह प्रस्तूयते—

| पटलाः | श्लोकाः | जीवा० | पटलाः | श्लोकाः | जीवा० |
|---|---|---|---|---|---|
| १ | २४४ | २४५ | ३५ | ४५ | ४५ |
| २ | १६२ | १६१ | ३६ | २१० | २०६ |
| ३ | १४५ | १४० | ३७ | ३५ | ३५ |
| ४ | १९२ | १८६ | ३८ | ५८ | ५७ |
| ५ | ४५ | ४४ | ३९ | ३४ | ३० |
| ६ | १०६ | १०२ | ४० | २३ | २२ |
| ७ | ९४ | ९३ | ४१ | ४६ | ४५ |
| ८ | ६७ | ६७ | ४२ | १४८ | १३८ |
| ९ | ४४ | ४४ | ४३ | ३७ | ४० |
| १० | १८५ | १९३ | ४४ | ८७ | ८६ |
| ११ | ७५ | ७६ | ४५ | ३८ | ३७ |
| १२ | ५३ | ४९ | ४६ | ५८ | ५६ |
| १३ | ९० | ९० | ४७ | ५७ | ५८ |
| १४ | ७४ | ७४ | ४८ | २८२ | २७४ |
| १५ | ६६ | ६६ | ४९ | ३२ | ३१ |
| १६ | ४६ | ४४ | ५० | ३३ | ३२ |
| १७ | १६३ | १६३ | ५१ | ७३ | ७१ |
| १८ | ८३ | ८३ | ५२ | २१२ | २०९ |
| १९ | ५० | ४९ | ५३ | २५ | २३ |
| २० | ४३ | ४२ | ५४ | ७७ | ७३ |
| २१ | ११४ | ११३ | ५५ | ३४ | ३३ |
| २२ | १०९ | १०८ | ५६ | १६ | १६ |
| २३ | ११४ | ११३ | ५७ | ७४ | ७० |
| २४ | १४४ | १४३ | ५८ | ४३ | ३८ |
| २५ | १२९ | १२९ | ५९ | ३९, २६ | ३८ |
| २६ | १४८ | १४५ | ६० (जीवा० ६३) | २३ | १०३ |
| २७ | १०५ | १०४ | ६१ (जीवा० ६४) | २४२ | ३५ |
| २८ | १०२ | ९९ | ६२ (जीवा० ६५) | २२ | १४० |
| २९ | ४३ | ४१ | ६३ (जीवा० ६६) | ८२ | २२ |
| ३० | ४१ | ३७ | ६४ | | १६६ |
| ३१ | ४६ | ४२ | ६५ | २२ | २२ |
| ३२ | ४३ | ३२ | ६६ (जीवा० ६१) | ३८ | ७४ |
| ३३ | ६५ | ६५ | ६७ (जीवा० ६२) | १२६ | २२ |
| ३४ | ५७ | ६१ | | | |

६८ तः ९० पटलान्तं यावद् या सामग्रीह विश्वविद्यालयीये संस्करणे लभ्यते, सा जीवानन्दीये संस्करणे न दृश्यते। इह संस्करणे पाठभेदात् पटलसंख्या द्विरावृत्तेति सा पञ्चविंशपटलादग्रे व्यत्यस्ता।

स्वनामधन्यानां म० म० गोपीनाथकविराजमहोदयानां निर्देशने चतुर्थभागस्यास्य तन्त्रसंग्रहस्य सम्पादनं पूर्ववर्तिभागवद् योगतन्त्रविभागेन समारब्धमासीत्। इह सम्पादनविधौ तेन क० ख० ग० इति संकेतैस्तिस्रो मातृका उपयोजिता अभूवन्, यासां विवरणं कविराजमहोदयैस्तदीये तन्त्रसूचीग्रन्थे समुपन्यस्तम्। द्विसप्ततितमपटलं यावदेव पाठभेदविवरणं दृश्यते। किन्त्विह मुद्रितस्य जीवानन्दविद्यासागरसम्पादितस्य रुद्रयामल-संस्करणस्य पाठभेदानां समुल्लेखो नास्ति। यद्यपि तत्र सन्ति भूयांसः पाठभेदाः, तथा-प्यत्रान्तिमपुष्पिकागतैः पाठभेदैः सार्धमस्य संस्करणस्य पाठभेदानां तुलना निदर्शनार्थं प्रस्तूयते—

| पटलम् | | प्रस्तुते संस्करणे पाठाः | जीवानन्दसंस्करणे पाठाः |
|---|---|---|---|
| २. | अन्तिमपुष्पिका | महायन्त्रोद्दीपने | महामन्त्रोद्दीपने |
| ३. | ,, ,, | मन्त्रो० | तन्त्रो० |
| ५. | ,, ,, | तन्त्रो० | मन्त्रो० |
| ८. | ,, ,, | सिद्धि० | सिद्ध० |
| ९. | ,, ,, | यन्त्रो० सिद्धि० | तन्त्रो० सिद्ध० |
| १२. | ,, ,, | वाशव० | पाशव० |
| १४. | ,, ,, | चक्र० | चक्रसार० |
| १६. | ,, ,, | × | वेदभाषापरिच्छेदे |
| ,, | ,, ,, | भैरवभैरवी० | भैरवीभैरव० |
| १७ | ,, ,, | ,, | ,, |
| १८. | ,, ,, | ,, | ,, |
| १९. | ,, ,, | अर्थ० | अर्थबोध० |
| २१. | ,, ,, | भावार्थ० | भावप्रश्नार्थ० |
| ३५. | ,, ,, | साधनं० | पञ्चस्वरयोगसाधनं० |
| ४८. | ,, ,, | मन्त्रप्रकाशो नाम | षट्चक्रप्रकाशे |
| ५८. | ,, ,, | काकिनीश्वरपर्णपार्श्वं० | काकिनीपार्श्वं० |

जीवानन्दसंस्करणे या सामग्री षष्टितमपटलस्य सप्तदशश्लोकादारभ्य द्विषष्टितमपटलं यावद् विद्योतते सेह विश्वविद्यालयीये संस्करणे नोपलभ्यते। अस्य विश्वविद्यालयीयस्य संस्करणस्य षष्टितमपटलस्यान्तिमपुष्पिकायां जीवानन्दसंस्करणस्य तु ६१–६३ पटलानामन्तिमपुष्पिकायां विषयभेदा विलोक्यन्ते।

## प्रस्तुतं संस्करणम्

जीवानन्दविद्यासागरीये संस्करण एकस्या एव मातृकाया आधारेण पाठालोचनमन्तरा यथोपलब्धं मुद्रितं प्रकाशितं च। प्रस्तुते संस्करणे त्वाधारत्वेन स्वीकृताया मातृकायास्तिसृभिर्मातृकाभिः पाठभेदपरामर्शोऽस्य संस्करणस्य सम्पादने प्रमुखं वैशिष्ट्यम्। जीवानन्दविद्यासागरीयं संस्करणं षट्षष्टिपटलान्तं विभ्राजते। प्रस्तुतं संस्करणं तु नवतितमपटलान्तं विद्योतते। एवं तावदिह तदपेक्षया त्रयोविंशतिसंख्याकाः पटला अधिकाश्चकासति। यद्यप्युभयत्र पटलभेदेऽपि विषयभेदानां प्राज्यता वर्तते, तथापि बहूनि वैशिष्ट्यानि दृष्टिपथं नातिक्रामन्ति। योगतन्त्रग्रन्थमालायाः सप्तमप्रसूनतया विकचितमिदं संस्करणं तन्त्रविद्याया मर्मज्ञानां विपश्चितां प्रीणनाय जिज्ञासूनां च ज्ञानसंवर्धनाय सेत्स्यतीति ध्रुवं विश्वसिति।

वाराणस्याम्<br>मातृनवम्याम् २०३७ वै०<br>( २-१०-८० ख्री० गुरौ ) } भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'<br>निदेशकः<br>अनुसन्धानसंस्थानस्य



# भूमिका

रुद्रयामलमुत्तरतन्त्रमित्यभिधानो ग्रन्थः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन भवतां पुरस्तादुपस्थापितः।

अत्र भगवतोर्भवानीविश्वनाथयोः परमानुग्रहोऽस्ति महान् हेतुः। यतो हि शिवशक्त्योरेवात्र ग्रन्थे, श्रोतृरूपेणाऽस्ति प्राधान्येनातिशयः। उक्तं च स्वच्छन्दतन्त्रे—

आगतं शिववक्त्रेभ्यो गतं च गिरिजानने।
मतं हि वासुदेवस्य तस्मादागम उच्यते॥

उक्त्याऽनया स्पष्टमायाति यद् वासुदेवाभिमतमागमशास्त्रं भगवतः शिवात् पार्वतीकर्णयोरागतम्। अत्रेदं मनागपि न भ्रमितव्यं यदयं तु तन्त्रग्रन्थः, शिवशक्त्योः प्राधान्यं त्वागमग्रन्थे इति द्वयोर्भेदे एतत्कथनं कथं संगच्छेत इति। यतो हि—तन्त्रागमयोः सकलशास्त्रे परस्परमभेदेनैव व्यवहारो दृश्यते।

## 'तन्त्र' शब्दार्थविचारः

तनादिगणपठिताद् 'तनु' विस्तारे इत्यस्माद्धातोः "सर्वधातुभ्यः ष्ट्रन्" इत्यौणादिकसूत्रात् करणेऽर्थे ष्ट्रन्-प्रत्यये सति तन्त्रशब्दो निष्पद्यते। विग्रहश्चास्य भवति तन्यन्ते विस्तीर्यन्ते ऐहलौकिकपारलौकिकोभयविधाभ्युदयसाधका अर्था अनेनेति। अथवा चौरादिकात् 'तत्रि' कुटुम्बधारणपोषणयोरित्यस्माद्धातोः कर्मकरणाधिकरणेषु घञ्प्रत्यये सति तन्त्रशब्दस्य निष्पत्तिः। तन्त्र्यते यद् येन यत्र वेति व्युत्पत्तिभिः समाजस्य धारकत्वं पोषकत्वं वा तन्त्रत्वमित्यायाति। उक्तं च—

तनोति विपुलानर्थान् तत्त्वमन्त्रसमन्वितान्।
त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते॥
व्यवहारः कथ्यते यत्र तथा चाध्यात्मवर्णनम्।
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते॥ इति।

शैव-शाक्त-वैष्णव-सौर-गाणपत्य-बौद्ध-जैन-भेदैर्बहुविधस्तन्त्रसम्प्रदायोऽधुना लोके प्रसिद्धोऽस्ति।

## यामलतत्त्वविचारः

शैव-शाक्त-यामलभेदात्तन्त्रस्य पुनस्त्रिविधा व्यवस्थाऽस्ति। शैवतन्त्रे शिवभट्टारकस्य, शाक्ततन्त्रे शिवाभट्टारिकायाः, यामलतन्त्रे च तयोरभेदस्य निरूपणं कृतमस्ति। तत्र शिवोऽर्थरूपः, शक्तिश्च शब्दरूपा। तयोर्भेदकल्पनाऽत्र तन्त्रे नैव सोढुं शक्या। योऽयं शब्दः

सोऽर्थः, योऽर्थः स शब्द इति रीत्या येयं शक्तिः सोऽयं शिवः, योऽयं शिवः सेयं शक्तिरित्येष सिद्धान्तो यामलतन्त्रेऽभिमतोऽस्ति। यत्र च सामान्यविशेषयोः सामरस्येनावस्थानम्, सूर्यसोमादिद्वन्द्वात्मकपदार्थानामविनाभावेन चावस्थानम्, तत्रैव यामलतत्त्वस्य स्वरूपं परिलक्ष्यते तत्त्वविद्भिः। युगलतत्त्वपदेनापि इदं संकीर्त्यते।

शिवशक्त्योरुपासकः 'उत्तमः पशुः' इत्युच्यते[१]। द्वयोः सामरस्यस्य यत्रोपासके समुदयः सोऽमृतमास्वदते—इति चोच्यते[२] तान्त्रिकाचार्यैः।

## यामलग्रन्थवैशिष्टयम्

यामलतन्त्रग्रन्थानां संख्यानिर्धारणं यद्यपि दुःशकम्, तथापि वाराहीतन्त्रेऽष्टलक्षणात्मकयामलस्य षड्विधत्वं निर्दिष्टमस्ति आदियामल-ब्रह्मयामल-विष्णुयामल-रुद्रयामल-गणेशयामलादित्ययामलभेदात्। तत्र संस्कृतविश्वविद्यालयीये सरस्वतीभवनेऽधुना कृष्णयामलाभिधस्यैकस्यैव यामलग्रन्थस्योपलब्धिर्वर्तते। एतदतिरिक्तमपि यामलं प्रसिद्धमस्ति। यथा जयद्रथयामलमित्यादि।

## अस्य ग्रन्थस्योत्तरतन्त्रत्वविचारः

अस्मिन्नेव ग्रन्थेऽस्योत्तरतन्त्रत्वविषये विचारः कृतोऽस्ति। तथा हि—

पराश्रीपरमेशानीवदनाम्भोजनिःसृतम्।
श्रीयामलं महातन्त्रं स्वतन्त्रं विष्णुयामलम्॥
शक्तियामलमाख्यातं ब्रह्मणः स्तुतिहेतुना।
ब्रह्मयामलवेदाङ्गं सर्वं च कथितं प्रिये॥
इदानीमुत्तरकाण्डं वद श्रीरुद्रयामलम्।
यदि भाग्यवशाद्देवि तव श्रीमुखपङ्कजे॥[३]
एतदुक्तं महादेवोत्तरतन्त्रनिरूपणम्।
मन्त्रसिद्धिलक्षणं तदुत्तमाधममध्यमम्॥[४]

---

१. दुर्गापूजां शिवपूजां यः करोति पशूत्तमः।
अवश्यं यः करोति स पशुरुत्तमः स्मृतः॥
(रु० या० ५ पटले श्लोकः ५)

२. चिच्चन्द्रः कुण्डली शक्तिः सामरस्यमहोदयः।
व्योमपङ्कजनिःष्यन्दसुधापानरतो नरः॥
(रु० या० २६ पटले श्लोकः १३७)

३. रु० या०—आदावेव।

४. रु० या०—२८ पटले श्लोकः १०, पृ० २९३।

## यामलतन्त्रस्योपासनायाः समयः फलं च

"या निशा सर्वभूतानां तस्यां जागर्ति संयमी" इति गीतोक्त्यनुसारं रात्रौ जागरणस्य, तत्र कठिनसाधनायाश्च महनीयं माहात्म्यं सर्वैर्ज्ञायत एव। अतो यत्र यामिनीविहितानि कर्माणि आश्रीयन्ते, तत्तन्त्रं यामलं नाम। एवं सति तान्त्रिक्याः साधनाया गोप्यत्वं सुरक्षितं भवति। शिवस्य गुप्तरहस्यं शक्तिः, शक्तेश्च गुप्तरहस्यं शिव एव विजानाति। अनयोश्च गोपनं यो जानाति स साधको यामलीय इति कथ्यते। उक्तं च तन्माहात्म्यवर्णनमुखेन—

ये जानन्ति महाकाल यामलं कलिपावनम्।
आब्रह्मस्तम्बपर्यन्तं करे तस्य न संशयः॥
यस्माद्रुद्रो भवेज्ज्ञानी नानातन्त्रार्थपारगः।
यामिनीविहितं कर्म कुलतन्त्राभिसाधनम्॥
महावीरहितं यस्मात् पञ्चतत्त्वस्वरूपकम्।
लङ्घनं नास्ति मे नाथ अस्मिन् तन्त्रे सुगोपनम्॥
ततो यामलमाख्यातं चन्द्रशेखर शङ्कर।
यदि न पठ्यते तन्त्रं यामलं सर्वशङ्करम्॥
तदा केन प्रकारेण साधकः सिद्धिभाग् भवेत्।

एवं च शिवशक्त्योरभेदभावनयाऽनुग्रहप्राप्तिर्भवति, ततश्च महतः सुखस्यावाप्तिर्भवति। उक्तं च—

भावादनुग्रहप्राप्तिरनुग्रहान्महासुखी।[1] इति।
भावेन ज्ञानमुत्पन्नं ज्ञानान्मोक्षमवाप्नुयात्।[2] इति च।

तथा च निरतिशयसुखमेव मोक्षपदवीमधिरोहति। तच्च तन्त्रशास्त्रप्रतिपाद्यज्ञानहेतुकमपि कृत्स्नस्य संसारस्याधिष्ठातुः परमशिवस्य प्राणशक्तिरूपायास्त्रिपुरसुन्दर्याः सायुज्यमन्तरा नैवास्वादयितुं शक्यते। उक्तं च सौन्दर्यलहर्याम्—"परानन्दाभिख्यं रसयति रसं त्वद्भजनवान्" इत्यादिना।

## यामलतन्त्रीयचक्राणां साध्यफलानि

अस्मिन् यामलतन्त्रेऽनेकानि चक्राणि तत्साध्यानि च वर्णितानि सन्ति। तथा हि—

ताराचक्रं राशिचक्रं कूर्मचक्रं तथा परम्।
शिवचक्रं विष्णुचक्रं ब्रह्मचक्रं विलक्षणम्॥

---

१. रु० या०—१।११८।
२. रु० या०—१।२२१।

देवचक्रम् ऋणिधनि उल्काचक्रं ततः परम् ।
पामाचक्रं चतुश्चक्रं सूक्ष्मचक्रं ततो वदेत् ॥
तथाऽकथहचक्रं च कथितं षोडशं प्रभो ।
एतदुत्तीर्णमन्त्रं च ये गृह्णन्ति नरोत्तमाः ॥
तेषामसाध्यं जगति न किमपि वर्तते ध्रुवम् ॥[१]

अधिकारिभेदेन चक्रस्योपयोगिता वर्तते । यथा वैष्णवानां कृते ताराशुद्धिःशैवानां, कोष्ठशुद्धिः, शाक्तानां राशिशुद्धिः, कृष्णसाधकानां कृतेऽकडमशुद्धिरपेक्ष्यते । उक्तं च[२]—

ताराशुद्धिं वैष्णवानां कोष्ठशुद्धिं शिवस्य च ।
राशिशुद्धिं त्रैपुरस्य गोपालेऽकडमः स्मृतः ॥

एवमेव बाला-भैरवी-कुमारी-ललिता-कुरुकुल्लादि साधने श्रीचक्रम् (श्रीयन्त्रम्) प्रयुज्यते। योगिन्यादिसाधने ताराचक्रम्, उन्मत्तभैरवीविद्यादिसाधने राशिचक्रम्, प्रत्यङ्गिरासाधने उल्का-विद्यादिसाधने च शिवचक्रम्, कालिका-चर्चिका-विमलासम्पत्तिप्रदादिसाधने विष्णुचक्रम्, छिन्नायाः श्रीविद्यायाः कृत्यायाः, नक्षत्रविद्यायाः, कामाख्यायाः ब्रह्माण्याश्च साधने ब्रह्म-चक्रम्, वज्रज्वाला-महाविद्या-गुह्यकाली-कुब्जिकादिसाधने देवचक्रम्, अट्टहासाकामेश्वरी-राकिणी-मन्दिरादिसाधने ऋणिधनिनाम महाचक्रम्, श्रीविद्या-भुवनेशानी-भैरवी-पृथ्वी-वीणा-वामनीप्रभृतीनां च साधनेषु उल्काचक्रादि प्रयोक्तव्यं भवति ।

## अकथहचक्रस्य वर्णनम्

प्रसङ्गादत्राकथहचक्रस्येषद्वर्णनं विधीयते । अस्य चक्रस्य निर्माता ज्ञाता साधकश्च कामरूपी भवति, इह लोके निखिलकामनासिद्धिरन्ते च मोक्षावाप्तिस्तस्य भवति । अस्य चक्रस्य निर्माणाय भूर्जपत्रमयम्, ताम्रमयम्, राजतम्, सौवर्णम्, मणिमयं वा चतुरस्रं सर्वतः समकोणमाधारपत्रं ग्राह्यम् । तत्र चत्वारि कोष्ठानि निर्मातव्यानि । पुनः प्रतिकोष्ठं चतुर्णां कोष्ठानां निर्माणेन षोडशकोष्ठानि निर्मितानि भवन्ति । तत्रापि प्रतिकोष्ठं कोष्ठचतुष्टयस्य निर्मित्या चतुष्षष्टिः कोष्ठानां जायते । तेषु दक्षिणतः क्रमेणाकारादारभ्य क्षकारान्ता वर्णा लेखनीयाः । तथा चोक्तम्[३]—

चतुरस्रं लिखेद् वर्णांश्चतुःकोष्ठसमन्विते ।
चतुःकोष्ठे चतुःकोष्ठे चतुश्चतुर्गृहान्वितम् ॥
मन्दिरं षोडशं प्रोक्तं सर्वकामार्थसिद्धिदम् ।
चतुरस्रं लिखेत् कोष्ठं चतुःकोष्ठसमन्वितम् ॥

---

१. रु० या०—२ पटले १२९-१३२ ।
२. रु० या०—२ पटले १३४-१/२ ।
३. रु० या० ५ पटले—श्लोकाः—२-३ ।

पुनश्चतुष्कं तत्राऽपि लिखेद् धीमान् क्रमेण तु ।
सर्वेषु गृहमध्येषु प्रादक्षिण्यक्रमेण तु ।।
अकारादिक्षकारान्तं लिखित्वा गणयेत् ततः ।।[१]

एवं चाकारादेः क्षकारान्तस्य वा 'अक्षम्' इति अहमिति वा संज्ञा शास्त्रेषु प्रसिद्धा । सृष्टेरादिरकारोऽन्त्यो हकारः कथ्यत एव । अकारहकारयोः सामरस्यमेव पराहन्तास्वरूपेण समुल्लसति । तथा चोक्तम्[२]—

अहमित्येकमद्वैतं यत्प्रकाशात्मविभ्रमः ।
अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।।

हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्त्तितः ।
अनयोः सामरस्यं यत् परस्मिन्नहमि स्फुटम् ।।

इदमेव तत्त्वमहन्तेदन्तेति पदाभ्यां सर्वत्र शास्त्रे व्यपदिश्यते । एषा वर्णमातृकाचक्रोक्तिः अक्षमालाक्रमेण रहस्यसम्पादयित्री सती नानाचक्रसम्पादिका भवतीति जानन्त्येव सर्वे आगमविदः । उक्तं च[३]—

अकारः प्रथमं देवि क्षकारोऽन्त्यस्ततः परम् ।
अक्षमालेति विख्याता मातृका वर्णरूपिणी ।।

इदमेव तत्त्वमक्षरपदेनापि व्यवह्रियते, भगवद्गीतायां ब्रह्मापरपर्यायतयेदमेवोक्तमस्ति । तथा हि[४]—

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ।। इति ।

एषा वर्णमातृका स्वान्तर्गतानन्ताक्षरराशिमहामन्त्रवीर्यपूर्णाहन्तारूपिणी, प्रकाशानन्दसाराबिन्दुमयसमष्टिरूपलिप्यक्षररूपिणी कामकला नाम महात्रिपुरसुन्दरी परमयोगिभिरनिशमनुक्षियते । यतश्च परमा शक्तिरेकविधैव सती बीजोच्छूनदशायां ज्ञानक्रियेच्छारूपत्रयविन्दुरूपेणोह्यमाना त्रैविध्यं गता त्रिपुरा । एवं त्रिचक्र-त्रिशक्ति-त्रिधाम-त्रिबीज-त्रितत्त्व-त्रिगुण-त्रिकोणादिभेदत्रयाविर्भावेण त्रिवृत्करणरचना-वैचित्रीचतुरा-त्रैविध्येन सर्वाध्वव्यापिनी त्रिपुरा महतो सुन्दरी इति महात्रिपुरसुन्दरी इति विख्याता ।[५]

सा चेयं सर्वचक्र-सर्वमन्त्र-सर्वशक्तीनां जनयित्री, वर्णसंघट्टशरीरा सती शब्दराशिभूता, त्रिपुरा, मोहिनी, कला, कालिकेत्यादिभिः परस्सहस्रैः शब्दैर्व्यपदिश्यमाना परावागा-

---

१. रु० या० ५ पटले, श्लोकाः ४-५ ।
२. वरिवस्यारहस्ये पृ० सं० ५२ ।
३. परात्रिंशिकाटीका पृ० १९४ ।
४. श्रीमद्भगवद्गीता ८।३ ।
५. नित्याषोडशिका० २।६-७ ।

त्मिका ज्येष्ठारौद्रयम्बिकाख्यशक्तिप्रसरसंभेदवैचित्र्येण सर्ववर्णोदयकारणभूता सप्तकोटिमहामन्त्राणामुत्पादयित्री, भट्टारकपरमशिवस्वरूपा षट्त्रिंशत्तत्त्वप्रसरणहेतुभूता संविदेव मातृकापदेन सर्वत्र प्रख्यातिं प्राप्ताऽस्ति। उक्तं च[1]—

सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये।
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका॥

काऽपि साधना, कोऽप्युपायो, मन्त्रतत्त्वरूपाया मातृकाया ज्ञानमन्तरा भवितुं नार्हति। अतो वर्णमातृकायाः स्वरूपज्ञानाय प्रयुक्तानि चक्राणि रुद्रयामलतन्त्रे पूर्वमेव निरूपितानि सन्ति। उक्तं च[2]—

अज्ञात्वा मन्त्रतत्त्वानि महाविद्यां जपेत्तु यः।
सर्वं तस्य वृथा देवि किं तस्य जपपूजनैः॥
ध्यानावधारणेनैव तथायोगसमाधिना।
वर्णज्ञानं यदा नास्ति किं तस्य जपपूजनैः॥ इति।

शिवस्य महाकाल्याश्च कण्ठे निबद्धा मुण्डमाला ज्ञानराशेः संकेतभूता, यतो हि सर्वाणि ज्ञानेन्द्रियाणि मुण्डे एव व्यवतिष्ठन्त इत्यपि तन्त्रशास्त्ररहस्यं विस्मृतिं न नेयम्। उक्तं च[3]—

मम कण्ठे स्थितं वीजं पञ्चाशद्वर्णमद्भुतम्।
नानावर्णयुतं शुद्धं तन्त्राणां सारमुत्तमम्॥

सा चेयं मातृका—पञ्चाशत्संख्याकान्, एकपञ्चाशत्संख्याकान्, द्विपञ्चाशत्संख्याकान्, चतुः–षष्टिसंख्याकान् वा वर्णान् स्वस्मिन् समावेशयन्ती अनन्तकोटिब्रह्माण्डाधीशानामनन्तब्रह्मविष्णु-रुद्रादीनां जननी, अकारादिक्षकारान्तवीजरूपा अस्य रुद्रयामलग्रन्थस्याप्युपजीव्यभूता संकीर्त्यते।

एवमेवात्र ग्रन्थे गुरुशिष्ययोग्यता, दीक्षाविधिः, पश्वादिभावविचारः, कुण्डलिनीजागरणम्, कुमारीपूजनम्, अकाराद्यक्षरक्रमेण कृते प्रश्ने फलानि षट्चक्रसाधनम्, अष्टाङ्गयोगस्य भेदोपभेदाः-नेती—दन्ती-धौती-नेवलीसाधनानि, राकिणी-लाकिनी-कामिनीप्रभृतिसाधनानि, नानाविधसिद्धीनां साधनानि चेत्येवं बहवो विषया निरूपिताः सन्ति। रुद्राणीस्तोत्रमत्रातीव ललितं पाठमात्रेणैवाकर्षणकरम्, महाकालस्य स्वरूपज्ञापकं मोक्षावाप्तिकरं चास्ति।

---

१. तन्त्रसद्भावे—।
२. कामधेनुतन्त्रे-१ पटले-श्लो० ४-५।
३. कामधेनुतन्त्रे १ पटले श्लोकः ६।

एकषष्ठितमे पटले काकिनीश्वरसहस्रनामस्तोत्रमतीव विस्तृतमपूर्वं माहात्म्यं बिभर्ति। मासेनैकेन विहितोऽस्य प्रयोगो वाञ्छितं फलं साधयति। एवमन्येऽपि सन्ति प्रयोगा अस्मिन् ग्रन्थरत्ने। ते च तत्र तत्र द्रष्टव्याः।

त्वरया प्रकाश्यमानेऽत्र ग्रन्थे काश्चन त्रुटयोऽवश्यं सञ्जाताः। यथा पञ्चविंश-पटलान्तर्गतं सप्तविंशपटलस्याङ्कनम्, अष्टाविंशपटले षड्विंश पटलस्य चेति पठलाङ्कनदोषेऽपि वर्णनीयविषयस्यादोषादुपेक्षणीयोऽयं सुधीभिः।

एवं ह्येकत्र चत्वारिंशपटलस्योल्लेखो द्विरावृत्त्या संजात इति तत्रापि पटलद्वयस्यावधारणं गुणैकपक्षपातिभिर्विद्वद्भिः स्वयं कर्तव्यमिति पाण्डुलिपिसंकलितमार्गानुसरणेनेमास्त्रुट्यः संवृत्ताः, तासां शोधनं विधास्यन्ति सचेतसो विद्वांस इति निवेदयन् विरमति—एतद्ग्रन्थसम्पादकः।

वाराणस्याम्
वसन्तपञ्चमी
२०३७ वै०
( ६-२-८१ खै० )



रामप्रसादत्रिपाठी
कार्यकार्यध्यक्षचरः
योगतन्त्रविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये,



# कृतज्ञताप्रकाशनम्

प्राप्तोऽयं परमप्रमोदस्यावसरो यद् 'रुद्रयामल' ग्रन्थस्य प्रकाशनं सम्पूर्णानन्द-संस्कृतविश्वविद्यालयेन कृतम्। इतः पूर्वम् १८९२ ईस्वीये वर्षे कलिकातानगर्यामेतस्य ग्रन्थस्य प्रकाशनं माननीयपण्डितप्रवरश्रीजीवानन्दविद्यासागरभट्टाचार्यमहोदयैः कृतमासीत्। संस्कृतविश्वविद्यालयीयसरस्वतीभवनस्थपाण्डुलिपिभ्यस्तत्र बहुषु स्थलेषु प्रचुरभेदात्, साम्प्रतं तस्यानुपलम्भाच्च माननीयानां म० म० विद्वद्वरश्रीगोपीनाथकविराजमहोदयानां मनसि ग्रन्थरत्नस्यास्य प्रकाशनयोजनाऽङ्कुरिता। मध्येकालं शिवसायुज्यमधिगतेषु तेषु सा योजनाऽवरुद्धाऽभूत्। तदनु यदा योगतन्त्रविभागस्य कार्यजातं माननीयश्रीकुलपतिमहोदयेन मदधीनीकृतम्, तदाऽस्य ग्रन्थस्य गौरवं विचिन्त्याचिरेणैवास्य प्रकाशनं मयाऽऽरब्धम्।

अस्मिन् प्रकाशनकार्ये योगतन्त्रविभागीयानुसन्धानकार्येऽधिकृतानां पण्डितवर-श्रीहीरालालमिश्र-श्रीराजनाथत्रिपाठि-श्रीपतिरामत्रिपाठि-श्रीचन्द्रशेखरस्वामिनां प्रचुरः सहयोगो जात इति तान् महानुभावान् शुभाशीर्वचोभिः संयोजयामि। विशेषतश्चायुष्मतः श्रीराजनाथत्रिपाठिनः सहयोगोऽविस्मरणीयोऽस्ति। येन विषयसूचीनिर्माणे भूमिकालेखनादौ च महान् परिश्रमो व्यधायि। तस्याभ्युदयं भगवतो विश्वनाथात् प्रार्थये। योगतन्त्रविभागे प्राध्यापकपदमध्यारूढानां श्रीव्रजवल्लभद्विवेदिनां साहाय्येनैतत् कार्यं समपद्यतेति तेऽपि धन्यवादार्हाः।

परमादरणीयानां कुलपतिपदमलङ्कुर्वाणानां श्रीबदरीनाथशुक्लमहोदयानामाधमर्ण्यं शिरसा वहामि, यदीयादेशेन भूमिकालेखने विगतोऽप्यवसरो लब्धः।

अन्ते च पण्डितवरं श्रीहरिश्चन्द्रमणित्रिपाठिनमभ्युदयाशीर्वादेन संयोजयन् विरमामि, यदीयप्रयासेन ग्रन्थस्यास्य प्रकाशनं निर्विघ्नं सम्पन्नतामभजदिति समेषां कृतज्ञतां भूयो भूयः प्रकाशयति—

**रामप्रसादत्रिपाठी**



व्रजवल्लभ द्विवेदी
३-५-८२

॥ ॐ कालिकायै नमः ॥

# अथ रुद्रयामलम्

## उत्तरतन्त्रम्

### प्रथमः पटलः

भैरव उवाच—

परा श्रीपरमेशानीवदनाम्भोजनिःसृतम् ।
श्रीयामलं महातन्त्रं स्वतन्त्रं विष्णुयामलम् ॥ १ ॥

शक्तियामलमाख्यातं ब्रह्मणस्तुतिहेतुना ।
ब्रह्मयामलवेदाङ्गं सर्वञ्च कथितं प्रिये ॥ २ ॥

इदानीमुत्तराकाण्डं वद श्रीरुद्रयामलम् ।
यदि भाग्यवशाद्देवि तव श्रीमुखपङ्कजे ॥ ३ ॥

यानि यानि स्वतन्त्राणि संदत्तानि महीतले ।
प्रकाशय महातन्त्रं नान्यतन्त्रेषु तृप्तिमान् ॥ ४ ॥

सर्ववेदान्तवेदेषु कथितव्यं ततः परम् ।
तदा ते भक्तवर्गाणां सिद्धिः सञ्चरते ध्रुवम् ॥ ५ ॥

यदि भक्ते दया भद्रे वद त्रिपुरसुन्दरि ।
महाभैरववाक्यञ्च [1]पङ्कजायतलोचना ॥ ६ ॥

---

१. श्रुत्वा पङ्कजलोचना—क० ।

श्रुत्वोवाच महाकाली कथयामास भैरवम् ।

भैरवी उवाच—

शम्भो महात्मदर्पघ्न कामहीन कुलाकुल ॥ ७ ॥
चन्द्रमण्डलशीर्षाक्ष हालाहलनिषेवक ।
अद्वितीयाघोरमूर्त्ते रक्तवर्णशिखोज्वल ॥ ८ ॥
[1]महाऋषिपते देव सर्वेषाञ्च नमोनमः ।
सर्वेषां प्राणमथन शृणु आनन्दभैरव ॥ ९ ॥
आदौ बालाभैरवीणां साधनं षट्कलात्मकम् ।
पश्चात् कुमारीललितासाधनं परमाद्भुतम् ॥ १० ॥
कुरुकुल्लाविप्रचित्तासाधनं शक्तिसाधनम् ।
योगिनीखेचरीयज्ञकन्यकासाधनं ततः ॥ ११ ॥
उन्मत्तभैरवीविद्याकालीविद्यादिसाधनम् ।
पञ्चमुद्रासाधनञ्च पञ्चबाणादिसाधनम् ॥ १२ ॥
प्रत्यङ्गिरासाधनञ्च कलौ साक्षात्करं परम् ।
हरितालिकास्वर्णविद्याधूम्रविद्यादिसाधनम् ॥ १३ ॥
आकाशगङ्गा विविधा[2] कन्यकासाधनं ततः ।
भूल[3]तासाधनं सिद्धसाधनं तदनन्तरम् ॥ १४ ॥
उल्काविद्यासाधनं च पञ्चतारादिसाधनम् ।
अपराजितापुरुहूताचामुण्डासाधनं ततः ॥ १५ ॥
कालिकासाधनं कौलसाधनं घनसाधनम् ।
चर्चिकासाधनं पश्चात् घर्घरासाधनं ततः ॥ १६ ॥

---

१. पतिः शिवः—ग० ।

२. विबुधा वालुकासाधनं ततः—क० विवधा – ख० ।

३. भूतबलिसाधनं ततः—क० ।

विमलासाधनं रौद्रीत्रिपुरासाधनं ततः ।
सम्पत्प्रदासप्तकूटासाधनं [1]चेटीसाधनम् ।
शक्तिकूटादिषट्कूटानवकूटादिसाधनम् ॥ १७ ॥

कनकाभाकाश्चनाभावह्न्याभासाधनं ततः ।
वज्रकूटापञ्चकूटासकलासाधनं ततः ॥ १८ ॥

तारिणीसाधनं पश्चात् षोडशीसाधनं स्मृतम् ।
छिन्नादि-उग्रप्रचण्ड्यादिसाधनं सुमनोहरम् ॥ १९ ॥

उल्कामुखीरक्तमुखीसाधनं वीरसाधनम् ।
नानाविधाननिर्माणशवसाधनमेव च ॥ २० ॥

कृत्वा देवीसाधनञ्च कृत्वाहिसाधनं ततः ।
नक्षत्रविद्यापटलं कालीपटलमेव च ॥ २१ ॥

श्मशानकालिकादेवीसाधनं भूतसाधनम् ।
रतिक्रीडासाधनञ्च सुन्दरीसाधनं तथा ॥ २२ ॥

महामालासाधनञ्च महामायादिसाधनम् ।
भद्रकालीसाधनञ्च नीलासाधनमेव च ॥ २३ ॥

[2]भुवनेशीसाधनञ्च दुर्गासाधनमेव च ।
वाराहीगारुडीचान्द्रीसाधनं परमाद्भुतम् ॥ २४ ॥

---

१. त्रिकुटासाधनं ततः—क० ।

२. कामाख्यासाधनं भद्रे भानुमत्याश्च साधनम् ।
महारात्रिसाधनञ्च सप्तमीसाधनं तथा ॥
पञ्चमीरोहिणीकुल्यासाधनं साभिचारकम् ।
अष्टमीविषमाषष्ठीकौशल्यासाधनं ततः ॥
विजयासाधनं मुद्रा देवीसाधनमेव च ।
अधिकः—क० ।

ब्रह्माणीसाधनं पश्चाद् हंसीसाधनमुत्तमम् ।
माहेश्वरीसाधनञ्च कौमारीसाधनं तथा ॥ २५ ॥
वैष्णवीसाधनं धात्रीधनदारतिसाधनम् ।
[1]पञ्चाभ्रावलिपूर्णास्यानारसिंहीसुसाधनम् ॥ २६ ॥
[2]कालिन्दीरुक्मिणीविद्याराधाविद्यादिसाधनम् ।
गोपीश्वरीपद्मनेत्रापद्ममालादिसाधनम् ॥ २७ ॥
मुण्डमालासाधनञ्च भृङ्गारीसाधनं ततः ।
सकलाकर्षणीविद्याकपालिन्यादिसाधनम् ॥ २८ ॥
गुह्यकालीसाधनञ्च बगलामुखीसाधनम् ।
[3]महाबालासाधनञ्च कलावत्यादिसाधनम् ॥ २९ ॥
कुलजाकलिकाकक्षाकुक्कुटीसाधनं महत् ।
विश्वादेवीसाधनञ्च शाङ्करीगूढसाधनम् ॥ ३० ॥
प्रफुल्लाब्जमुखीविद्याकाकिनीसाधनं ततः ।
कुब्जिकासाधनं नित्यासरस्वत्यादिसाधनम् ॥ ३१ ॥
भूर्लेखाशशिमुकुटा-उग्रकाल्यादिसाधनम् ।
[4]मणिद्वीपेश्वरीधात्रीसाधनं यज्ञसाधनम् ॥ ३२ ॥

---

१. पञ्चास्यवलिपूर्णास्या—क० ।

२. ऐन्द्रीघोरतराविद्यासाधनं रतिसाधनम् ।
वज्रज्वालासाधनञ्च चन्द्रदुर्गादिसाधनम् ॥
महाविद्यासाधनञ्च लक्ष्मीसाधनमेव च ।
शाकम्भरीसाधनञ्च भ्रामरीसाधनं तथा ॥
रक्तदण्डामहाविद्यापूर्वविद्यादिसाधनम् । अधिकः—ख० ।

३. महाबला—क० ।

४. धात्री—ख० ।

केतकीकमलाकान्ति[1]प्रदामेघादिसाधनम् ।
[2]वागीश्वरीमहाविद्या-अन्नपूर्णादिसाधनम् ॥ ३३ ॥
वज्रदण्डारक्तमयी[3]मन्वारीसाधनं तथा ।
हस्तिनीहस्तिकर्णाद्यामातङ्गीसाधनं ततः ॥ ३४ ॥
परानन्दानन्दमयीसाधनं गतिसाधनम् ।
कामेश्वरीमहालज्जाज्वालिनीसाधनं वसोः ॥ ३५ ॥
गौरीवेतालकङ्कालीवासवीसाधनं तथा ।
चन्द्रास्यासूर्यकिरणारटन्तीसाधनं ततः ॥ ३६ ॥
किङ्किनी पावनीविद्या अवधूतेश्वरीति च ।
एतासां सिद्धविद्यानां साधनाद्रुद्र एव सः ॥ ३७ ॥
अलकाकलियुगस्थाशक्तिटङ्का[4]रसाधनम् ।
हरिणीमोहिनीक्षिप्रातृष्यादिसाधनं तथा ॥ ३८ ॥
अट्टहासाघोरनादामहामेघादिसाधनम् ।
वलरीकौरविण्यादिसाधनं परमाद्भुतम् ॥ ३९ ॥
रङ्किणीसाधनं पश्चाद् नन्दकन्यादिसाधनम् ।
मन्दिरासाधनं कात्यायनीसाधनमेव च ॥ ४० ॥
रजनीराजतीघोनासाधनं तालसाधनम् ।
पादुकासाधनं चित्तासाधनं रविसाधनम् ॥ ४१ ॥
मुनिनाथेश्वरीशान्तिवल्लभासाधनं तथा ।
मदिरासाधनं [5]वीरभद्रासाधनमेव हि ॥ ४२ ॥

१. भैम्यादिसाधनम्—क० ।
२. शशीश्वरी—क० ।
३. मन्दारीसाधनं तथा—क० ।
४. कङ्कादिसाधनम्—क० ।
५. वीरमुद्रा—क० ।

मुण्डालीकालिनीदैत्यदंशिनीसाधनं ततः ।
प्रविष्टवर्णालघिमामीनादिसाधनं महत् ॥ ४३ ॥
फेत्कारीसाधनं[1] भल्लातकीसाधनमद्भुतम् ।
उड्डीयानेश्वरीपूर्णागिरिजासाधनं तथा ॥ ४४ ॥
सौकरी[2]राजवशिनीदीर्घजङ्घादिसाधनम् ।
अयोध्यापूजितादेवीद्राविणीसाधनाद्भुतम् ॥ ४५ ॥
ज्वालामुखीसाधनञ्च कृष्णजिह्वादिसाधनम् ।
पञ्चवक्त्रप्रियाविद्यानन्तविद्यादिसाधनम् ॥ ४६ ॥
श्रीविद्याभुवनेशानीसाधनं कायसाधनम् ।
रक्तमालामहाचण्डीमहाज्वालादिसाधनम् ॥ ४७ ॥
[3]प्रक्षिप्तामन्त्रिकाकामपूजिताभक्तिसाधनम् ।
श्वासस्थावायवीप्राप्तालेलिहानादिसाधनम् ॥ ४८ ॥
भैरवीलसितापृथ्वीवाटुकीसाधनं तथा ।
अगम्या-आकुलीमौलीन्द्राञ्जनमन्त्रसाधनम् ॥ ४९ ॥
कुलावतीकुलक्षिप्तारतिचीनादिसाधनम् ।
शिवाक्रोडादितरुणीनायिकामन्त्रसाधनम् ॥ ५० ॥
साधनं शैलवासिन्या अकस्मात् सिद्धिवर्धनम् ।
मन्त्रयन्त्रस्वतन्त्रादिपूज्यमानाः परात्पराः ॥ ५१ ॥
एताः सर्वाः कलियुगे कालिका हरकोमलाः ।
मन्त्राद्या येन सिद्ध्यन्ति सत्यं सत्यं न संशयः ॥ ५२ ॥

---

१. माकरीभल्लातकी—क० ।
२. कौमारीसाधनम्—क० ।
३. संपूजिता—क० ।

महाकालशिवानन्दपरमानन्दपारगः ।
भक्तानामनुरागेण विद्यारत्नं पुनः शृणु ॥ ५३ ॥
आदौ वैष्णवदेवस्य मन्त्राणां नित्यसाधनम् ।
ततस्ते मङ्गलं मन्त्रसाधनं परमाद्भुतम् ॥ ५४ ॥
अकस्माद्विहिता सिद्धिर्येन सिद्ध्यति भूतले ।
बालभैरवयोगेन्द्रसाधनं शिवसाधनम् ॥ ५५ ॥
महाकालसाधनञ्च तथा रामेश्वरस्य च ।
अघोरमूर्त्तेः रमणासाधनं शृणु यत्नतः ॥ ५६ ॥
क्रोधराजभूतराज-एकचक्रादिसाधनम् ।
गिरीन्द्रसाधनं पश्चात् कुलनाथस्य साधनम् ॥ ५७ ॥
वटुकेशादिश्रीकण्ठेशादिसाधनमेव च ।
मृत्युञ्जयस्य रौद्रस्य कालान्तकहरस्य च ॥ ५८ ॥
उन्मत्तभैरवस्यापि तथा [1]पञ्चास्यकस्य च ।
कैलासेशस्य शम्भोश्च तथा शूलिन एव च ॥ ५९ ॥
भार्गवेशस्य सर्वस्य महाकालस्य साधनम् ।
सुरान्तकस्य पूर्णस्य तथा देवस्य शङ्कर ॥ ६० ॥
हरिद्रागणनाथस्य वरदेश्वरमालिनः ।
ऊर्ध्वकेशस्य धूम्रस्य जटिलस्यापि साधनम् ॥ ६१ ॥
आनन्दभैरवस्यापि वाणनाथस्य साधनम् ।
करीन्द्रस्य शुभाङ्गस्य हिल्लोलमर्दकस्य च ॥ ६२ ॥
पुष्पनाथेश्वरस्यापि वृषनाथस्य साधनम् ।
[2]अष्टमूर्त्तेः कालमूर्त्तेश्चन्द्रशेखरसाधनम् ॥ ६३ ॥

---

१. पञ्चकालस्य च—क० ।

२. कपिलेशस्य रुद्रस्य तथा पिङ्गाक्षकस्य च ।
दिगम्बरस्य सूक्ष्मस्य उपेन्द्रपूजितस्य च ॥
अवधूतेश्वरस्यापि अष्टवसोश्च साधनम् । अधिकः—ख० ।

क्रमुकस्यापि घोरस्य कुबेराराधितस्य च ।
त्रिपुरान्तकमन्त्रस्य कमलाक्षस्य साधनम् ॥ ६४ ॥
ईत्यादिसिद्धमन्त्राणां मन्त्रार्थं विविधं मुदा ।
उदितं तद्विशेषेण सुविस्तार्यं शृणुष्व तत् ॥ ६५ ॥
इन्द्रादिदेवताः सर्वा येन सिद्ध्यन्ति भूतले ।
तत्प्रकारं महादेव सावधानोऽवधारय ॥ ६६ ॥
उपविद्यासाधनञ्च मन्त्राणि विविधानि च ।
नानाकर्माणि धर्माणि षट्कर्मसाधनानि च ॥ ६७ ॥
श्रीरामसाधनं यज्ञसाधनं योगसाधनम् ।
सर्वविद्यासाधनञ्च राजज्वालादिसाधनम् ॥ ६८ ॥
मन्त्रसिद्धिप्रकारश्च हनूमत्साधनादिकम् ।
विषज्वालासाधनञ्च पाताललोकसाधनम् ॥ ६९ ॥
भूतलिपिप्रकारश्च तत्तत्साधनमेव च ।
नवकन्यासाधनञ्च अष्टसिद्धिप्रकारकम् ॥ ७० ॥
आसनानि च अङ्गानि साधनानि बहूनि च ।
कात्यायनीसाधनानि चेटीसाधनमेव च ॥ ७१ ॥
कृष्णमार्जारसिद्धिश्च खड्गसिद्धिस्ततः परम् ।
पादुकाजङ्घसिद्धिश्च निजजिह्वादिसाधनम् ॥ ७२ ॥
संस्कारगुटिकासिद्धिः खेचरीसिद्धिरेव च ।
भूप्रवेशप्रकारस्त्वं नित्यतुङ्गादिसाधनम् ॥ ७३ ॥
स्तम्भनं दारुणं पश्चादाकर्षणं मुनेरपि ।
नानाविधानि देवेश औषधादीनि यानि च ॥ ७४ ॥
हरितालादिसिद्धिश्च रसपारदसाधनम् ।
नानारससमुद्भूतं रसभस्मादिसाधनम् ॥ ७५ ॥

वृद्धस्य तरुणाकारं साधनं परमाद्भुतम् ।
वैजयन्तीसाधनञ्च चरित्रं वासकस्य च ॥ ७६ ॥
शिवाचरित्रमश्वस्य चरित्रं वायसस्य च ।
कुमारीणां प्रकारन्तु वज्राणां वारणं तथा ॥ ७७ ॥
सम्पत्तिसाधनं देशसाधनं कामसाधनम् ।
गुरुपूजाविधानञ्च गुरुसन्तोषसाधनम् ॥ ७८ ॥
निजदेवाराधनञ्च निजसाधनमेव च ।
वारुणीपैष्टिकीगौडीकैतकीमाध्विसाधनम् ॥ ७९ ॥
स्वदेहगमनं स्वर्गे मर्त्ये मर्त्यैश्च दुर्लभम् ।
शरीरवर्धनञ्चैव कृष्णभावस्य साधनम् ॥ ८० ॥
नयनाकर्षणञ्चैव कालसर्पस्य दर्शनम् ।
रणक्षोभप्रकारञ्च पञ्चेन्द्रियनिवारणम् ॥ ८१ ॥
योगविद्यासाधनञ्च भक्ष्यप्रस्थनिरूपणम् ।
चान्द्रायणव्रतञ्चैव शृणु तद्योगसिद्धये ॥ ८२ ॥
यामलाग्रेण शंसन्ति यानि सर्वाणि कानि च ।
ब्रह्माण्डे यानि वस्तूनि सर्वत्र दुर्लभं शिवम् ॥ ८३ ॥
येऽभ्यस्यन्ति महातन्त्रं बालाद्वा मन्त्रतोऽपि वा ।
यामलं मम वक्त्राम्भोरुहसुन्दरसंभवम् ॥ ८४ ॥
अतिगुह्यं महागुह्यं शब्दगुह्यं निराकुलम् ।
नानासिद्धिसमुद्राणां गृहं [1]योगमयं शुभम् ॥ ८५ ॥
शास्त्रजालस्य सारं हि नानामन्त्रमयं प्रियम्[2] ।
वाराणसीपुरपतेः सदामोदं सुखास्पदम् ॥ ८६ ॥

---

१. योगालयम्—क० ।
२. प्रिये—क० ।

सरस्वतीदैवतं यत्[1] कालीषु शिखरे वृतम् ।
महामोक्षं द्वारमोक्षं सर्वसंकेतशोभितम् ॥ ८७ ॥
वाञ्छाकल्पद्रुमं तन्त्रं शिवसंस्कारसंस्कृतम् ।
अप्रकाश्यं क्रियासारं सहस्रस्तुतिराजितम् ॥ ८८ ॥
अष्टोत्तरशतं नाम सहस्रनाममङ्गलम् ।
नानाद्रव्यसाधनादिविधृताञ्जनरञ्जितम् ॥ ८९ ॥
कालीप्रत्यक्षकथनं कालीषोढादिसंपुटम् ।
महाचमत्कारकरं स्थितिसंहारपालकम् ॥ ९० ॥
अष्टादशप्रकारश्च षोढायाः सौख्यमुक्तये ।
ये जानन्ति महाकाल यामलं कलिपावनम् ॥ ९१ ॥
आब्रह्मस्तम्बपर्यन्तं करे तस्य न संशयः ।
तत्प्रकारमहं वक्ष्ये निगमागममङ्गलम्[2] ॥ ९२ ॥
यस्माद्रुद्रो भवेज्ज्ञानी नानातन्त्रार्थपारगः ।
यामिनीविहितं कर्म कुलतन्त्राभिसाधनम् ॥ ९३ ॥
[3]महावीरहितं यस्मात् पञ्चतत्त्वस्वरूपकम् ।
लङ्घनं नास्ति मे नाथ [4]अस्मिन् तन्त्रे सुगोपनम् ॥ ९४ ॥
ततो यामलमाख्यातं चन्द्रशेखर शङ्कर ।
रुद्राक्षं साधनोत्कृष्टं शतयागफलप्रदम् ॥ ९५ ॥
मनःसन्तोषविपुलं यामलं परिकीर्तितम् ।
रुरुकादिभैरवाणां ब्राह्मीदेव्याश्च साधनम् ॥ ९६ ॥

---

१. तत् कालीस्व शिखावृतम्—क० ।
२. सङ्कुलम्—क० ।
३. मकारविहितं—क० ।
४. यस्मिन् तन्त्रे सुगोपेन—क० ।

[1]जाम्बूनदलताकोटिहेमदासाधनं यतः ।
मनसासाधनं यत्र लङ्कालक्ष्मीप्रसाधनम् ॥ ९७ ॥
देवतानाश्च कवचं नानाध्यानव्रतं महत् ।
अन्तर्यागविधानानि कलिकालफलानि च ॥ ९८ ॥
भाति यत्नप्रभाकारं प्रायश्चित्तविमर्षणम् ।
पटलं त्रिंशता व्याप्तं ये पठन्ति निरन्तरम् ॥ ९९ ॥
अवश्यं सिद्धिमाप्नोति यद्यदिच्छति भूतले ।
कर्मणा मनसा वाचा महातन्त्रस्य साधनम् ॥ १०० ॥
करोति कमलानाथकरपद्मनिषेवितम् ।
ज्ञात्वा [2]सर्वधरं तन्त्रं [3]सम्पूर्णं लोकमण्डले ॥ १०१ ॥
प्राप्नोति साधकः सिद्धिं मासादेव न संशयः ।
नानाचक्रस्यं माहात्म्यं नानाङ्कमण्डलावृतम् ॥ १०२ ॥
सर्वज्ञसिद्धिशतकं खण्डकालीकुलालयम् ।
तरुणादित्यसंकाशं वनमालाविभूषितम् ॥ १०३ ॥
दैवतं परमं हंसं कालकूटाशिनं प्रभुम् ।
आदौ ध्यात्वा पूजयित्वा नमस्कुर्याद् [4]महेश्वरम् ॥
प्रथमारुणसंकाशं रत्नालङ्कारभूषितम् ।
वरदं वारुणीमत्तं परमहंसं नमाम्यहम् ॥ १०४ ॥

भैरव उवाच—

यदि न पठ्यते तन्त्रं यामलं सर्वशङ्करम् ।
तदा केन प्रकारेण साधकः सिद्धिभाग्भवेत् ॥ १०५ ॥

---

१. जाम्बूनदतुलाकोटि—क० ।
२. सर्वेश्वरम्—क० ।
३. संपूर्णं—क० ।
४. कलेश्वरम्—क० ख० ।

केचिच्च बुद्धिहीनाश्च मेधाहीनाश्च ये जनाः ।
मन्दभाग्याश्च धूर्ताश्च मूढाः सर्वापदावृताः ॥ १०६ ॥
प्राप्नुवन्ति कथं सिद्धिं दया जाता कथं वद ।
तेषु मूर्खेषु हीनेषु शास्त्रार्थवर्जितेषु च ॥ १०७ ॥
ज्ञानं भवति केनैव निर्मलं द्वैतवर्जितम् ।
तत्प्रकारं वद स्नेहाद् लोकानां [1]पुण्यवृद्धये ॥ १०८ ॥

भैरवी उवाच—

कर्मसूत्रं यश्छिनत्ति प्रत्यहं तनुसंस्थितः ।
स पश्यति जगन्नाथ मम श्रीचरणाम्बुजम् ॥ १०९ ॥
विश्वमावेशसंस्कारभिन्नबुद्धिक्रियान्विताः ।
अतो मां नहि जानन्ति नानाकार्योत्कटावृताः ॥ ११० ॥
तेषां शरीरं गृह्णाति कालदूतो भयानकः ।
यः करोति महायोगं त्यागसन्न्यासधर्मवान् ॥ १११ ॥
मन्दभाग्यः पशोर्योनिं प्राप्नोति मां विहाय सः ।
मयि भावं यः करोति दुर्लभो जनवल्लभः ॥ ११२ ॥
भावेन लभ्यते सर्वं भावेन देवदर्शनम् ।
भावेन परमं ज्ञानं तस्माद् भावावलम्बनम् ॥ ११३ ॥
भावश्च सर्वशास्त्राणां गूढं सर्वेन्द्रियस्थितम् ।
सर्वेषां मूलभूतश्च देवीभावं यदा लभेत् ॥ ११४ ॥
तदैव सर्वसिद्धिश्च तदा ध्यानदृढो भवेत् ।
अकलङ्की निराहारी निवासधृत[2]मानसः ॥ ११५ ॥
नित्यस्नानाभिपूजाङ्गो भावी भावं यदा लभेत् ।
क्रियादक्षो महाशिक्षानिपुणोऽपि जितेन्द्रियः ॥ ११६ ॥

---

१. सुखवृद्धये—क० ।
२. निराज्ञावृतमानसः—क० ।

सर्वशास्त्रनिगूढार्थवेत्ता न्यासविवर्जितः ।
तेषां हस्तगतं भावं वद भावं यथा तनौ ॥ ११७ ॥
भावात् परतरं नास्ति येनानुग्रहवान् भवेत् ।
भावादनुग्रहप्राप्तिरनुग्रहान्महासुखी ॥ ११८ ॥
सुखात् पुण्यप्रभावः स्यात् पुण्यादच्युतदर्शनम् ।
यदा [1]कृतस्य दर्शनाम्भोजदर्शनमङ्गलम् ॥ ११९ ॥
योगी भूत्वा सूक्ष्मपदं योगिनामप्यदर्शनम् ।
पश्यत्येव महाविद्यापादाम्भोरुहपावनम् ॥ १२० ॥
गुरूणां परमहंसानां वाक्यं त्रैलोक्यपावनम् ।
श्रुत्वा साधकसिद्ध्यर्थं योगी योगमवाप्नुयात् ॥ १२१ ॥
पञ्जरे शुकसारी च पतगाः पक्षियोनयः ।
गृह्णाति साधकः स्वर्गान् मन्नामविमलं महत् ॥ १२२ ॥
यावद् ज्ञानस्य सञ्चारं तावत् कालं कुलेश्वर ।
साधकानाञ्च साधूनां निकटस्थो भवेन्नरः ॥ १२३ ॥
विद्याभ्यासी न पतति यदि बुद्धिपरो भवेत् ।
नहि चेज्जन्मव्याख्यार्थं नानाशास्त्रार्थभाषणम् ॥ १२४ ॥
सुरज्ञानं विना किञ्चिन्नहि सिद्ध्यति भूतले ।
मन्त्रं श्रीकायसिद्धिश्च कथं भवति भैरव ॥ १२५ ॥
सांख्यज्ञानं वेदभाषाविधिज्ञानं तथा समम् ।
शक्तिं विना यथा शाक्तं सुरज्ञानं विना हि सः ॥ १२६ ॥
अहिताचारसम्पत्तिर्दरिद्रस्य गृहे यथा ।
साधकस्य गृहे शक्तिर्ज्ञानाचारविवेचना ॥ १२७ ॥

---

१. कृतस्य चरणदर्शनाह्लादमानसः—क० ।

जायते यदि सायुज्यपदनाशाय केवलम् ।
यद्यज्ञानविशिष्टा सा स्वशक्तिः शिवकामिनी ॥ १२८ ॥
तदा न कुर्याद्ग्रहणा शक्तिसाधनमेव च ।
यदि कुर्यादसंस्कारात् संसर्गं साधकोत्तमः ॥ १२९ ॥
असंस्कृत्यादिदोषेण सिद्धिहानिः प्रजायते ।
शक्तिप्रधानं भावानां त्रयाणां साधकस्य च ॥ १३० ॥
दिव्यवीरपशूनाञ्च भावत्रयमुदाहृतम् ।
पशुभावे क्रियासिद्धिः पश्चाचारानिरूपणम् ॥ १३१ ॥
वीरभावे क्रियासिद्धिः साक्षाद्रुद्रो न संशयः ।
दिव्यभावे वीरभावे विभिन्नमेकभावतः ॥ १३२ ॥
अण्डः[1] पूर्वः सर्वगतं दिव्यभावस्य लक्षणम् ।
दिव्यभावे देवताया दर्शनं परिकीर्तितम् ॥ १३३ ॥
वीरभावे मन्त्रसिद्धिरद्वैताचारलक्षणम् ।
आदौ भावं पशोः प्राप्य रात्रिकर्म विवर्जयेत् ॥ १३४ ॥
दिवसे दिवसे स्नानं पूजानित्यक्रियान्वितः ।
पुरश्चरणवत् कार्यं शुचिभावेन सिद्ध्यति ॥ १३५ ॥
पशुभावं विना वीरः को वशी भवति ध्रुवम् ।
इन्द्रियाणाञ्च दमनं दमनं शमनस्य च ॥ १३६ ॥
योगशिक्षानिविष्टाङ्गो यतिर्योगपरायणः ।
सर्वक्षणादभ्यसतः प्रभातावधि रात्रिषु ॥ १३७ ॥
सर्वकालं च कर्तव्यो योगः सर्वसुखप्रदः ।
वाञ्छाकल्पतरुं नित्यं तरुणं पातकापहम् ॥ १३८ ॥

---

१. अन्तः पूर्णं सर्वगतम्—क० ।

साधयेदवहितं मन्त्री पशुभावस्थितो यदि ।
योगभाषाविधिज्ञानं सर्वभावेषु दुर्लभम् ॥ १३९ ॥
तथापि पशुभावेन शीघ्रं सिद्ध्यति निश्चितम् ।
गुरूणां श्रीपदाम्भोजे यस्य भक्तिर्दृढा भवेत् ॥ १४० ॥
स भवेत् कामनात्यागी भावमात्रोपलक्षणम् ।
वीरभावो महाभावो न भावं दुष्टचेतसाम् ॥ १४१ ॥
भावं मन्दगतं सूक्ष्मं रुद्रमूर्त्याः प्रसिद्ध्यति ।
भ्रष्टाचारं महागूढं त्रैलोक्यमङ्गलं शुभम् ॥ १४२ ॥
पञ्चतत्त्वादिसिद्ध्यर्थं महामोहमदोद्भवम् ।
सर्वपीठकुलाचारं हठादानन्दसागरम् ॥ १४३ ॥
कारुण्यवारिधिं वीरसाधने भक्तिकेवलम् ।
ज्ञानी भूत्वा पशोर्भावे वीरचारं ततः परम् ॥ १४४ ॥
वीराचाराद्भवेद्रुद्रोऽन्यथा नैव च नैव च ।
भावद्वयस्थितो मन्त्री दिव्यभावं विचारयेत् ॥ १४५ ॥
सदा शुचिर्दिव्यभावमाचरेत् सुसमाहितः ।
देवतायाः प्रियार्थश्च सर्वकर्मकुलेश्वर ॥ १४६ ॥
यद्यत्तत् सकलं [1]सिद्ध्यत्यस्माद् धर्मोदयं शुभम् ।
देवतातुल्यभावश्च देवतायाः क्रियापरः ॥ १४७ ॥
तद्विद्धि देवताभावं सुदिव्यभाक्प्रकीर्तितम् ।
सर्वेषां भाववर्गाणां शक्तिमूलं न संशयः ॥ १४८ ॥
भक्तिं केन प्रकारेण प्राप्नोति साधकोत्तमः ।
ज्ञात्वा देवशरीरस्य निजकार्यानुशासनात् ॥ १४९ ॥

---

१. विद्धि—क. ।

ज्ञानञ्च त्रिविधं प्रोक्तमागमाचारसम्भवम् ।
शब्दब्रह्ममयं तद्धि ज्ञानमार्गेण पश्यति ॥ १५० ॥
पठित्वा सर्वशास्त्राणि स्वकर्मगायनानि च ।
कुशे विवेकमालम्ब्य नित्यं ज्ञानी च साधकः ॥ १५१ ॥
विवेकसंभवं ज्ञानं शिवज्ञानप्रकाशकम् ।
लोचनद्वयहीनञ्च [1]बाह्यभावविवर्जितम् ॥ १५२ ॥
लोकानां परिनिर्मुक्तं कालाकालविलोडनम् ।
नित्यज्ञानं परं ज्ञानं तं विद्धि प्राणगोचरम् ॥ १५३ ॥
मानुषं सफलं जन्म सर्वशास्त्रेषु गोचरम् ।
चतुरशीतिलक्षेषु शरीरेषु शरीरिणाम् ॥ १५४ ॥
न मानुष्यं विनान्यत्र तत्त्वज्ञानन्तु विद्यते ।
कदाचिल्लभ्यते जन्म मानुष्यं पुण्यसञ्चयात् ॥ १५५ ॥
सोपानीभूतमोक्षस्य[2] मानुष्यं जन्मदुर्लभम् ।
मानुषेषु च शंसन्ति सिद्धयः स्युः प्रधानिकाः ॥ १५६ ॥
अणिमादिगुणोपेतास्तस्माद् देवो नरोत्तमः ।
विना देहेन कस्यापि पुरुषार्थो न लभ्यते ॥ १५७ ॥
तस्माच्छरीरं संरक्ष्य नित्यं ज्ञानं प्रसाधय ।
मानुषं ज्ञाननिकरं ज्ञानात्मानं परं विदुः ॥ १५८ ॥
मुनयो मौनशीलाश्च मुनितन्त्रादिगोचरम् ।
मानुषः सर्वगामी च नित्यस्थाननिराकुलः ॥ १५९ ॥
मित्रजापं योगजापं कृत्वा पापनिवारणम् ।
परं मोक्षमवाप्नोति मानुषो नात्र संशयः ॥ १६० ॥

---

१. बाह्यवागदृष्टिवर्जितम्—क० ।
२. सोपानभूतं मानुष्यं मोक्षस्य जन्मदुर्लभम्—क० ।

मयोक्तानि च तन्त्राणि मद्भक्ता ये पठन्ति च ।
पठित्वा कुरुते कर्म कृत्वा मत्सन्निधिं व्रजेत् ॥ १६१ ॥
मदुक्तानि च शास्त्राणि न ज्ञात्वा साधको यदि ।
अन्यशास्त्राणि सम्बोध्य कोटिवर्षेण सिद्ध्यति ॥ १६२ ॥
शुक्तौ रजतविभ्रान्तिर्यथा भवति भैरव ।
तथान्यदर्शनेभ्यश्च भुक्तिं मुक्तिश्च काङ्क्षति ॥ १६३ ॥
यत्र भोगस्तत्र मोक्षो द्वयं कुत्र न सिद्ध्यति ।
मम श्रीपादुकाम्भोजे सेवको मोक्षभोगगः ॥ १६४ ॥
बाह्यद्रष्टा प्रगृह्णाति आकाशस्थिततेजसम् ।
ब्रह्माण्डज्ञानद्रष्टा च देशाण्डस्थं प्रपश्यति ॥ १६५ ॥
घटप्रत्यक्षसमये आलोको व्यञ्जको यथा ।
विना घटत्त्वयोगेन न प्रत्यक्षो यथा घटः ॥ १६६ ॥
इतराद्भिद्यमानोऽपि न भेदमुपगच्छति ।
पुरुषे नैव भेदोऽस्ति विना शक्तिं कथञ्चन ॥ १६७ ॥
शक्तिहीनो यथा देही निर्बलो योगविवर्जितः ।
ज्ञानहीनस्तथात्मानं न पश्यति पदद्वयम् ॥ १६८ ॥
स्वभावं नाधिगच्छन्ति संसारज्ञानमोहिताः ।
अभिपश्यति सश्लोको यद्भावं परिभाव्यते ॥ १६९ ॥
ईश्वरस्यापि दूतस्य यमराजस्य बन्धनम् ।
निधनं चानुगच्छन्ति दृष्ट्वा च तनुजं धनम्[1] ॥ १७० ॥
लोको मोहसुरां पीत्वा न वेत्ति हितमात्मनः ।
सम्पदः स्वप्नमेव स्याद् यौवनं कुसुमोपमम् ॥ १७१ ॥

---

१. धनम्—क० ।

तडिच्चपलमायुष्यं कस्याप्यज्ञानतो धृतिः ।
शतं जीवति मर्त्यश्च निद्रा स्यादर्धहारिणी ॥ १७२ ॥
अर्धं हरति कामिन्याः शक्तिर्बुद्धिप्रतापिनी ।
असद्वृत्तिश्च मूढानां हन्त्यायुषमहर्निशम् ॥ १७३ ॥
बाल्यरोगजरादुःखैः सर्वं[1] तदपि निष्फलम् ।
स्त्रीपुत्रपितृमात्रादिसम्बन्धः केन हेतुना ॥ १७४ ॥
दुःखमूलो हि संसारः स यस्यास्ति स दुःखितः ।
अस्य त्यागः कृतो येन स सुखी नात्र संशयः ॥ १७५ ॥
सुखदुःखपरित्यागी[2] कर्मणा किं न लभ्यते ।
लोकाचारभयार्थं हि यः करोति क्रियाविधिम् ॥ १७६ ॥
ब्रह्मज्ञाताहमखिले[3] ये जपन्ति निरादराः ।
सांसारिकसुखासक्तं ब्रह्मज्ञोऽस्मीति वादिनम् ॥ १७७ ॥
त्यजेत् तं सततं धीरश्चाण्डालमिव दूरतः ।
गृहारण्यसमालोके गतव्रीडा दिगम्बराः ॥ १७८ ॥
चरन्ति गर्दभाद्याश्च व्रतिनस्ते भवन्ति किम् ।
तृणपर्णोदकाहाराः सततं वनवासिनः ॥ १७९ ॥
हरिणादिमृगाश्चैव तापसास्ते भवन्ति किम् ।
शीतवातातपसहा भक्ष्याभक्ष्यसमा अपि ॥ १८० ॥
चरन्ति शूकराद्याश्च व्रतिनस्ते भवन्ति किम् ।
आकाशे पक्षिणः सर्वे भूतप्रेतादयोऽपि च ॥ १८१ ॥

---

१. वर्जम्—क० ।

२. सुखदुःखपरित्यागः कर्मणा केन लभ्यते—क० ।

३. ब्रह्मज्ञाताहमात्मानं ये वदन्ति निरादरा—क० ।

चरन्ति रात्रिगाः सर्वे खेचराः किं महेश्वराः ।
आजन्ममरणान्तश्च गङ्गादितटनोऽस्थिताः ॥ १८२ ॥
मण्डूकमत्स्यप्रमुखा व्रतिनस्ते भवन्ति किम् ।
एतज्ज्ञाननिविष्टाङ्गाः यदि गच्छन्ति पण्डिताः ॥ १८३ ॥
तथापि कर्मदोषेण नरकस्था भवन्ति हि ।
कौटिल्यालससंसर्गवर्जिता ये भवन्ति हि ॥ १८४ ॥
प्राप्नुवन्ति मम स्थानं मम भक्तिपरायणाः ।
ऊद्ध्वं व्रजन्ति भूतानि शरीरमातिवाहिकम् ॥ १८५ ॥
निजदेहाभिशापेन नानारूपी भवेन्नरः ।
शरीरजैः कर्मदोषैर्याति स्थावरतां[1] नरः ॥ १८६ ॥
इह दुश्चरितैः केचित् केचित् पूर्वकृतैस्तथा ।
प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम् ॥ १८७ ॥
गुरुपादविहीना ये ते नश्यन्ति ममाज्ञया ।
[2]गुरुर्मूलं हि मन्त्राणां गुरुर्मूलं परन्तपः ॥ १८८ ॥
गुरोः प्रसादमात्रेण सिद्धिरेव न संशयः ।
अहं गुरुरहं देवो मन्त्रार्थोऽस्मि न संशयः ॥ १८९ ॥
भेदका नरकं यान्ति नानाशास्त्रार्थवर्जिताः ।
सर्वासामेव विद्यानां दीक्षा मूलं यथा प्रभो ॥ १९० ॥
गुरुमूलस्वतन्त्रस्य गुरुरात्मा न संशयः ।
आत्मैवह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ १९१ ॥
आत्मना क्रियते कर्म भावसिद्धिस्तदा भवेत् ।
हीनाङ्गी कपटी रोगी बह्वाशी शीलवर्जितः ॥ १९२ ॥

---

१. याति दुष्टाङ्गतिं नरः—ख. ।
२. गुरूस्थलीहतत्राणां गुरुमूंलं परन्तपः—क. ।

[1]मय्युपासनमास्थाय उपविद्यां सदाभ्यसेत् ।
धनं धान्यं सुतं वित्तं राज्यं ब्राह्मणभोजनम् ॥ १९३ ॥

शुभार्थं सम्प्रयोक्तव्यं नान्यचिन्ता वृथाफलम् ।
नित्यश्राद्धरतो मर्त्यो धर्मशीलो नरोत्तमः ॥ १९४ ॥

महीपालः प्रियाचारः पीठभ्रमणतत्परः ।
पीठे पीठे महाविद्यादर्शनं यदि लभ्यते ॥ १९५ ॥

तदा तस्य करे सर्वाः सिद्धयोऽव्यक्तमण्डलाः ।
अकस्माज्जायते सिद्धिर्महामायाप्रसादतः ॥ १९६ ॥

महावीरो महाधीरो दिव्यभावस्थितोऽपि वा ।
अथवा पशुभावस्थो मन्त्री पीठं विवासयेत् ॥ १९७ ॥

क्रियायाः फलदं प्रोक्तं भावत्रयमनोरमम् ।
तथा च युगभावेन दिव्यवीरेण भैरव ॥ १९८ ॥

प्रपश्यन्ति महावीराः पशवो हीनजातयः ।
न पश्यन्ति कलियुगे शास्त्राभिभूतचेतसः ॥ १९९ ॥

अपि वर्षसहस्रेण शास्त्रान्तं नैव गच्छति ।
तर्काद्यनेकशास्त्राणि अल्पायुर्विघ्नकोटयः ॥ २०० ॥

तस्मात् सारं विजानीयात् क्षीरं हंस इवाम्भसि ।
कलौ च दिव्यवीराभ्यां नित्यं तद्गतचेतसः ॥ २०१ ॥

महाभक्ताः प्रपश्यन्ति महाविद्यापरं पदम् ।
साधवो मौनशीलाश्च सदा साधनतत्पराः ॥ २०२ ॥

दिव्यवीरस्वभावेन पश्यन्ति मत्पदाम्बुजम् ।
भावद्वयं ब्राह्मणानां [2]महासत्फलकाङ्क्षिणाम् ॥ २०३ ॥

---

१. ममोपासनम्—क० ।

२. मोक्षसत्फलकांक्षिणाम्—क० ।

अथवा चावधूतानां भावद्वयमुदाहृतम् ।
भावद्वयप्रभावेण महायोगी भवेन्नरः ॥ २०४ ॥
मूर्खोऽपि वाक्पतिः श्रेष्ठो भावद्वयप्रसादतः ।
ये जानन्ति महादेव मम तन्त्रार्थसाधनम् ॥ २०५ ॥
भावद्वयं हि वर्णानां ते रुद्रा नात्र संशयः ।
भावुको भक्तियोगेन्द्रः सर्वभावज्ञसाधनः ॥ २०६ ॥
उन्मत्तजडवन्नित्यं निजतन्त्रार्थपारगः ।
वृक्षो वहति पुष्पाणि गन्धं जानाति नासिका ॥ २०७ ॥
पठन्ति सर्वशास्त्राणि दुर्लभा भावबोधकाः ।
प्रज्ञाहीनस्य पठनमन्धस्यादर्शदर्शनम् ॥ २०८ ॥
प्रज्ञावतो धर्मशास्त्रं बन्धनायोपकल्पते ।
तत्त्वमीदृगिति भवेदिति शास्त्रार्थनिश्चयः ॥ २०९ ॥
अहं कर्ताऽहमात्मा च सर्वव्यापी निराकुलः ।
मनसेति स्वभावश्च चिन्तयत्यपि वाक्पतिः ॥ २१० ॥
सौदामिनीतेजसो वा सहस्रवर्षकं[1] यदा ।
प्रपश्यति महाज्ञानी एकचन्द्रं सहस्रकम् ॥ २११ ॥
कोटिवर्षशतेनापि यत्फलं लभते नरः ।
एकक्षणमङ्घ्रि[2]रजो ध्यात्वा तत्फलमश्नुते ॥ २१२ ॥
विचरेद्यदि सर्वत्र केवलानन्दवर्धनम् ।
कामरूपं महापीठं त्रिकोणाधारतैजसम् ॥ २१३ ॥
जलबुद्बुदशब्दान्तमनन्तमङ्गलात्मकम् ।
स भवेन्मम दासेन्द्रो गणेशगुहवत्प्रियः[3] ॥ २१४ ॥

---

१. सौदामिनी तेजसा वा सहस्तचषकं यथा—क० ।
२. एकक्षणमदङ्घ्रिरजो—क० ।
३. सूतवत्प्रियः—क० ।

कङ्कालाख्या साट्टहासा विकटाक्षोपपीठकम् ।
विचरेत् साधकश्रेष्ठो मत्पादाब्जं यदीच्छति ॥ २१५ ॥
ज्वालामुखीमहापीठं मम प्रियमतर्कवित् ।
यो भ्रमेन्मम तुष्ट्यर्थं स योगी भवति ध्रुवम् ॥ २१६ ॥
भावद्वयादिनिकरं ज्वालामुख्यादिपीठकम् ।
भ्रमन्ति ये साधकेन्द्रास्ते सिद्धा नात्र संशयः ॥ २१७ ॥
भावात् परतरं नास्ति त्रैलोक्यसिद्धिमिच्छताम् ।
भावो हि परमं ज्ञानं ब्रह्मज्ञानमनुत्तमम् ॥ २१८ ॥
कोटिकन्याप्रदानेन वाराणस्यां शताटनैः ।
किं कुरुक्षेत्रगमने यदि भावो न लभ्यते ॥ २१९ ॥
गयायां श्राद्धदानेन नानापीठाटनेन किम् ।
नानाहोमैः क्रियाभिः किं यदि भावो न लभ्यते ॥ २२० ॥
भावेन ज्ञानमुत्पन्नं ज्ञानान्मोक्षमवाप्नुयात् ।
आत्मनो[1] मनसा देव्या गुरोरीश्वरमुच्यते[2] ॥ २२१ ॥
ध्यानं संयोजनं प्रोक्तं मोक्षमात्ममनोलयम् ।
गुरोः प्रसादमात्रेण शक्तितोषो महान् भवेत् ॥ २२२ ॥
शक्तिसन्तोषमात्रेण मोक्षमाप्नोति साधकः ।
गुरुमूलं जगत्सर्वं गुरुमूलं परन्तपः ॥ २२३ ॥
गुरोः प्रसादमात्रेण मोक्षमाप्नोति सद्वशी ।
न लङ्घयेद् गुरोराज्ञामुत्तरं न वदेत् तथा ॥ २२४ ॥
दिवारात्रौ गुरोराज्ञां दासवत् परिपालयेत् ।
उक्तानुक्तेषु कार्येषु नोपेक्षां कारयेद् बुधः ॥ २२५ ॥

---

१. आत्मना मनसा वाचा गुरावीश्वर उच्यते—ख० ।
२. सन्मते—क० ।

गच्छतः प्रयतो गच्छेद् गुरोराज्ञां न लङ्घयेत् ।
न शृणोति गुरोर्वाक्यं शृणुयाद् वा पराङ्मुखः ॥ २२६ ॥
अहितं वा हितं वापि रौरवं नरकं व्रजेत् ।
आज्ञाभङ्गं गुरोर्दैवाद् यः करोति विबुद्धिमान् ॥ २२७ ॥
प्रयाति नरकं घोरं शूकरत्वमवाप्नुयात् ।
आज्ञाभङ्गं तथा निन्दां गुरोरप्रियवर्तनम् ॥ २२८ ॥
गुरुद्रोहश्च यः कुर्यात् तत्संसर्गं न कारयेत् ।
गुरुद्रव्याभिलाषी च गुरुस्त्रीगमनानि च ॥ २२९ ॥
पातकञ्च भवेत् तस्य प्रायश्चित्तं न कारयेत् ।
गुरुं दुष्कृत्य[1] रिपुवन्निर्हरेत् परिवादतः ॥ २३० ॥
अरण्ये निर्जने देशे स भवेद् ब्रह्मराक्षसः ।
पादुकाम् आसनं वस्त्रं शयनं भूषणानि च ॥ २३१ ॥
दृष्ट्वा गुरुं नमस्कृत्य आत्मभोगं न कारयेत् ।
सदा च पादुकामन्त्रं जिह्वाग्रे यस्य वर्तते ॥ २३२ ॥
अनायासेन धर्मार्थकाममोक्षं लभेन्नरः ।
श्रीगुरोश्चरणाम्भोजं ध्यायेच्चैव सदैव तम् ॥ २३३ ॥
भक्तये मुक्तये वीरं नान्यभक्तं ततोऽधिकम् ।
एकग्रामे स्थितः शिष्यो गत्वा तत्सन्निधिं[2] सदा ॥ २३४ ॥
एकदेशे स्थितः शिष्यो गत्वा तत्सन्निधिं[3] सदा ।
सप्तयोजनविस्तीर्णं मासैकं प्रणमेद् गुरुम् ॥ २३५ ॥

---

१. गुरुं हुँकृत्य रिपुवन्निर्गत्य परिवादतः—क० ।
२. त्रिसन्धि प्रणमेत् गुरुम्—क० ।
३. सन्निधिं मुदा—क० ।

श्रीगुरोश्चरणाम्भोजं यस्यां दिशि विराजते ।
तस्यां दिशि नमस्कुर्यात् कायेन मनसा धिया ॥ २३६ ॥
विद्याङ्गमासनं मन्त्रं मुद्रां तन्त्रादिकं प्रभो ।
सर्वं गुरुमुखाल्लब्ध्वा सफलं नान्यथा भवेत् ॥ २३७ ॥
कम्बले कोमले वापि प्रासादे संस्थिते तथा ।
दीर्घकाष्ठेऽथवा पृष्ठे गुरुश्चैकासनं त्यजेत् ॥ २३८ ॥
श्रीगुरोः पादुकामन्त्रं मूलमन्त्रं स्वपादुकाम् ।
शिष्याय नैव देवेश प्रवदेद् यस्य कस्यचित् ॥ २३९ ॥
यद् यदात्महितं वस्तु तद्द्रव्यं नैव वञ्चयेत् ।
गुरोर्लब्ध्वा एकवर्णं तस्य तस्यापि सुव्रत ॥ २४० ॥
भक्ष्यं वित्तानुसारेण गुरुमुद्दिश्य यत्कृतम् ।
स्वल्पैरपि महत्तुल्यं भुवनाद्यं दरिद्रताम् ॥ २४१ ॥
सर्वस्वमपि यो दद्याद् गुरुभक्तिविवर्जितः ।
नरकान्तमवाप्नोति भक्तिरेव हि कारणम् ॥ २४२ ॥
गुरुभक्त्या च शक्रत्वमभक्त्या शूकरो भवेत् ।
गुरुभक्तः[1] परं नास्ति भक्तिशास्त्रेषु सर्वतः ॥ २४३ ॥
गुरुपूजां विना नाथ कोटिपुण्यं वृथा[2] भवेत् ॥ २४४ ॥

इति [3]श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सर्वविद्यानुष्ठाने सिद्धिमन्त्रप्रकरणे भैरवीभैरवसंवादे प्रथमः पटलः ॥

---

१. विद्याङ्ग शासनम्—क. ।
२. कोटिपुण्यं वृथाचयम्—क. ।
३. अतः सर्वजने ख्यातं गुरुणा सिद्धिमाप्नुयात् ।
गुरुस्त्रीपुत्रबन्धूनां दोषं नैव प्रकाशयेत् ॥
भक्षयेन्नैव तद्द्रव्यं दत्तं नैव परित्यजेत् ।—क० अधिकः पाठः ।

# द्वितीयः पटलः

देवी उवाच—

अथातः सम्प्रवक्ष्यामि सर्वदर्शनविद्यया ।
सवज्ञ परमानन्दो दयाबीज भयङ्कर ॥ १ ॥
शृणुष्वैकमनाः शम्भो कुलाचारविधिं शृणु ।
पशूनां व्रतभङ्गादौ विधिं प्रथमतः प्रभो ॥ २ ॥
व्रतभङ्गे नित्यभङ्गे नित्यपूजादिकर्मणि ।
सहस्रं प्रजपेन्मन्त्री व्रतदोषोपशान्तये ॥ ३ ॥
नित्यश्राद्धं तथा सन्ध्यावन्दनं पितृतर्पणम् ।
देवतादर्शनं पीठदर्शनं तीर्थदर्शनम् ॥ ४ ॥
गुरोराज्ञापालनञ्च देवतानित्यपूजनम् ।
पशुभावस्थितो मर्त्यो महासिद्धिं लभेद् ध्रुवम् ॥ ५ ॥
पशूनां प्रथमो भावो वीरस्य वीरभावनम् ।
दिव्यानां दिव्यभावस्तु तेषां भावास्त्रयः स्मृताः ॥ ६ ॥
स्वकुलाचारहीनो यः साधकः स्थिरमानसः ।
निष्फलार्थी भवेत् क्षिप्रं कुलाचारप्रभावतः ॥ ७ ॥

भैरव उवाच—

केनोपायेन भगवतीचरणाम्भोजदर्शनम् ।
प्राप्नोति पद्मवदने पशुभावस्थितो नरः ॥ ८ ॥
तत्प्रकारं सुविस्तार्य कथ्यतां कुलकामिनि ।
यदि भक्तिर्दृढा मेऽस्ति यदि स्नेहोऽस्ति मां प्रति ॥ ९ ॥

महाभैरवी उवाच—

प्रभाते च समुत्थाय अरुणोदयकालतः ।
निशाष्टदण्डपर्यन्तं पशूनां भाव ईरितः ॥ १० ॥

---

१. कामबीज—क० ।

प्रातः [1]शय्यादिकं कृत्वा पुनः शय्यास्थितः पशुः ।
गुरुं सञ्चिन्तयेच्छीर्षाम्भोजे साहस्रके दले ॥ ११ ॥
तरुणादित्यसंकाशं तेजोबिम्बं महागुरुम् ।
अनन्तानन्तमहिमासागरं शशिशेखरम् ॥ १२ ॥
महाशुभ्रं भासुराङ्गं द्विनेत्रं द्विभुजं विभुम् ।
आत्मोपलब्धिविषमं तेजसा शुक्लवाससम् ॥ १३ ॥
आज्ञाचक्रोदूर्ध्वनिकरं कारणं जगतां सुखम् ।
धर्मार्थकाममोक्षाङ्गं वराभयकरं विभुम् ॥ १४ ॥
प्रफुल्लकमलारूढं सर्वज्ञं जगदीश्वरम् ।
अन्तःप्रकाशचपलं वनमालाविभूषितम् ॥ १५ ॥
रत्नालङ्कारभूषाढ्यं देवदेवं सदा भजेत् ।
अन्तर्यागक्रमेणैव पद्मपुष्पैः समर्चयेत् ॥ १६ ॥
एकान्तभक्त्या प्रणमेदायुरारोग्यवृद्धये ।
अथ मध्ये जपेन्मन्त्रमाद्यन्तप्रणवेन च ॥ १७ ॥
मध्ये वाग्भवमायोज्य गुरुनाम ततः परम् ।
आनन्दनाथशब्दान्ते गुरुं ङेऽन्तं समुद्धरेत् ॥ १८ ॥
नमःशब्दं ततो ब्रूयात् प्रणवं सर्वसिद्धिदम् ।
महागुरोर्मनुं जप्त्वा सर्वसिद्धीश्वरो भवेत् ॥ १९ ॥
वाक्सिद्धिर्वदनाम्भोजे गुरुमन्त्रप्रभावतः ।
शतमष्टोत्तरं नित्यं सहस्रं वा तथाष्टकम् ॥ २० ॥
प्रजप्यार्पणमाकृत्य प्राणायामत्रयञ्चरेत् ।
वाग्भवेन ततः कुर्यात् प्राणायामविधिं मुदा ॥ २१ ॥

---

१. प्रातः क्रियादिकं कृत्वा—क० ।

अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः॥ २२॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥ २३॥

देवतायाः दर्शनस्य कारणं करुणानिधिम्।
सर्वसिद्धिप्रदातारं श्रीगुरुं प्रणमाम्यहम्॥ २४॥

वराभयकरं नित्यं श्वेतपद्मनिवासिनम्।
महाभयनिहन्तारं गुरुदेवं नमाम्यहम्॥ २५॥

महाज्ञानाच्छापिताङ्गं नराकारं वरप्रदम्।
चतुर्वर्गप्रदातारं स्थूलसूक्ष्मद्वयान्वितम्॥ २६॥

सदानन्दमयं देवं नित्यानन्दं निरञ्जनम्।
शुद्धसत्त्वमयं सर्वं नित्यकालं कुलेश्वरम्॥ २७॥

ब्रह्मरन्ध्रे महापद्मे तेजोबिम्बे निराकुले।
योगिभिर्ध्यानगम्ये च चक्रे शुक्ले विराजिते॥ २८॥

सहस्रदलसङ्काशे कर्णिकामध्यमध्यके।
महाशुक्लभासुरार्ककोटिकोटिमहौजसम् ॥ २९॥

सर्वपीठस्थममलं परं हंसं परात्परम्।
वेदोद्धारकरं नित्यं काम्यकर्मफलप्रदम्॥ ३०॥

सदा मनःशक्तिमायालयस्थानं पदद्वयम्।
शरज्ज्योत्स्नाजालमालाभिरिन्दुकोटिवन्मुखम्[1] ॥ ३१॥

वाञ्छातिरिक्तदातारं सर्वसिद्धीश्वरं गुरुम्।
भजामि तन्मयो भूत्वा तं हंसमण्डलोपरि॥ ३२॥

---

१. शोभेन्दुकोटिवन्मुखम्—क०।

आत्मानं च निराकारं साकारं ब्रह्मरूपिणम् ।
महाविद्यामहामन्त्रदातारं परमेश्वरम् ॥ ३३ ॥
सर्वसिद्धिप्रदातारं गुरुदेवं नमाम्यहम् ।
कायेन मनसा वाचा ये नमन्ति निरन्तरम् ॥ ३४ ॥
अवश्यं श्रीगुरोः पादाम्भोरुहे ते वसन्ति हि ।
प्रभाते कोटिपुण्यश्च प्राप्नोति साधकोत्तमः ॥ ३५ ॥
मध्याह्ने दशलक्षश्च सायाह्ने कोटिपुण्यदम् ।
प्रातःकाले पठेद् स्तोत्रं ध्यानं वा[1] सुसमाहितः ॥ ३६ ॥
तदा सिद्धिमवाप्नोति नात्र कार्या विचारणा ॥ ३७ ॥
शिरसि[2] सितपङ्कजे तरुणकोटिचन्द्रप्रभं
वराभयकराम्बुजं सकलदेवतारूपिणम् ।
भजामि वरदं गुरुं किरणचारुशोभाकुलं
प्रकाशितपदद्वयाम्बुजमलक्तकोटिप्रभम् ॥ ३८ ॥
जगद्भयनिवारणं भुवनभोगमोक्षप्रदं
गुरोः पादयुगाम्बुजं जयति यत्र योगे जयम् ।
भजामि परमं गुरुं नयनपद्ममध्यस्थितं
भवाब्धिभयनाशनं [3]शमनरोगकायक्षयम् ॥ ३९ ॥
प्रकाशितसुपङ्कजे मृदुलषोडशाख्ये प्रभुं
परापरगुरुं भजे सकलबाह्यभोगप्रदम् ।
विशालनयनाम्बुजद्वयतडित्प्रभामण्डलं
कडारमणिपाटलेन्दुबिन्दुबिन्दुकम् ॥ ४० ॥

---

१. ध्यानन्याससमन्वितः—क० ।
२. ओं शिवः स्थितसुपङ्कजे—क० ।
३. शमनयोगकामक्षयम्—क० ।

चलाचलकलेवरं प्रचपलदले द्वादशे
महौजसमुमापतेर्विगतदक्षभागे हृदि ।
प्रभाकरशतोज्ज्वलं सुविमलेन्दुकोट्याननं
भजामि परमेष्ठिनं गुरुमतीव वारोज्ज्वलम्[1] ॥ ४१ ॥

गुर्वाद्यश्च शुभं मदननिदहनं हेममञ्जरीसारं
नानाशब्दाद्भुताह्लादितपरिजनाच्चारुचक्रत्रिभङ्गम्[2] ।
नित्यं ध्यायेत् प्रभाते अरुणशतघटाशोभनं योगगम्यं
नाभौ पद्मेऽतिकान्ते दशदलमणिभे भाव्यते योगिभिर्यत् ॥ ४२ ॥

या माता मयदानवादि स्वभुजा निर्वाणसीमापुरे
स्वाधिष्ठाननिकेतने रसदले वैकुण्ठमूले मया ।
जन्मोद्धारविकारसुप्रहरिणी[3] वेदप्रभा भाव्यते
कन्दर्पार्पितशान्तियोनिजननी विष्णुप्रिया शाङ्करी ॥ ४३ ॥

या भाषाननकुण्डली कुलपथाच्छामाभशोभाकरी
मूले पद्मचतुर्दले कुलवती निश्वासदेशाश्रिता ।
साक्षात्काङ्क्षितकल्पवृक्षलतिका [5]सूद्भाषयन्ती प्रिया
नित्या योगिभयापहा विषहरा गुर्वम्बिका भाव्यते ॥ ४४ ॥

उद्‌र्ध्वाम्भोरुहनिःसृतामृतघटी मोदोद्वलाप्लाविता
गुर्वास्या परिपातु सूक्ष्मपथगा तेजोमयी भास्वती ।
सूक्ष्मा साधनगोचरामृतमयी मूलादिशीर्षाम्बुजे
पूर्णा चेतसि भाव्यते भुवि कदा माता सदोर्द्ध्वामगा[6] ॥ ४५ ॥

---

१. गुरुगतिवरालोम्बनम्—सु० ।

२, चक्रादिभङ्गम्—क० ।

३. घोरहरिणी—क० ।

४. ताम्रानन—क० ।

५. सुसा स्वयम्भू प्रिया—क० ।

६. सदोर्ध्वाङ्गमा—क० , सदावामगा—ख० ।

स्थितिपालनयोगेन ध्यानेन पूजनेन वा ।
यः पठेत् प्रत्यहं न्याप्य[1] स देवो न तु मानुषः ॥ ४६ ॥
कल्याणं धनधान्यं च कीर्तिमायुर्यशःश्रियम् ।
सायाह्ने च प्रभाते च पठेद्यदि सुबुद्धिमान् ॥ ४७ ॥
स भवेत् साधकश्रेष्ठः कल्पद्रुमकलेवरः ।
स्तवस्यास्य [2]प्रसादेन वागीशत्वमवाप्नुयात् ॥ ४८ ॥
पशुभावस्थिता ये तु तेऽपि सिद्धाः न संशयः ।
आदौ साधकदेवश्च सदाचारमतिः सदा ॥ ४९ ॥
पशुभावस्ततो वीरः सायाह्ने दिव्यभाववान् ।
एतेषां भाववर्गाणां गुरुर्वेदान्तपारगः ॥ ५० ॥
शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेषवान् ।
शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान् ॥ ५१ ॥
आश्रमी [3]ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः ।
निग्रहानुग्रहे शक्तो वशी मन्त्रार्थजापकः ॥ ५२ ॥
निरोगी निरहङ्कारो विकाररहितो महान् ।
पण्डितो वाक्पतिः श्रीमान् सदा यज्ञविधानकृत् ॥ ५३ ॥
पुरश्चरणकृत् सिद्धो हिताहितविवर्जितः ।
सर्वलक्षणसंयुक्तो [4]महाजनगणादृतः ॥ ५४ ॥
प्राणायामादिसिद्धान्तो ज्ञानी मौनी विरागवान् ।
तपस्वी सत्यवादी च सदा ध्यानपरायणः ॥ ५५ ॥

---

१. प्राप्य—क० ।
२. प्रभावेन—क० ।
३. ज्ञाननिष्ठश्च—क० ।
४. महाज्ञान—क० ।

आगमार्थविशिष्टज्ञो निजधर्मपरायणः ।
अव्यक्तलिङ्गचिह्नस्थो भावको भद्रवान् ॥ ५६ ॥

लक्ष्मीवान् धृतिमान्नाथो गुरुरित्यभिधीयते ।
शिष्यस्तु तादृशो भूत्वा सद्गुरुं पर्युपाश्रयेत् ॥ ५७ ॥

वर्जयेच्च परानन्दरहितं रूपवर्जितम् ।
कुष्ठिनं क्रूरकर्माणं निन्दितं रोगिणं गुरुम् ॥ ५८ ॥

अष्टप्रकारकुष्ठेन गलत्कुष्ठिनमेव ।
श्वित्रिणं जनहिंसार्थं सदार्थग्राहिणं तथा ॥ ५९ ॥

स्वर्णविक्रयिणं चौरं बुद्धिहीनं सुखर्वकम् ।
श्यावदन्तं कुलाचाररहितं शान्तिवर्जितम् ॥ ६० ॥

सकलङ्कं नेत्ररोगैः पीडितं परदारगम् ।
असंस्कारं प्रवक्तारं स्त्रीजितं चाधिकाङ्क्षकम् ॥ ६१ ॥

कपटात्मानकं हिंसाविशिष्टं बहुजल्पकम् ।
बह्वाशिनं हि कृपणं मिथ्यावादिनमेव च ॥ ६२ ॥

[1]अशान्तं भावहीनं च पश्चाचारविवर्जितम् ।
दोषजालैः पूरिताङ्गं पूजयेन्न गुरुं विना ॥ ६३ ॥

गुरौ मानुषबुद्धिन्तु मन्त्रेषु लिपिभावनम् ।
प्रतिमासु शिलारूपं विभाव्य नरकं व्रजेत् ॥ ६४ ॥

जन्महेतू हि पितरौ पूजनीयौ प्रयत्नतः ।
गुरुर्विशेषतः पूज्यो धर्माधर्मप्रदर्शकः ॥ ६५ ॥

गुरुः पिता गुरुर्माता गुरुर्देवो गुरुर्गतिः ।
शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ ६६ ॥

गुरोर्हितं प्रकर्तव्यं वाङ्मनःकायकर्मभिः ।
अहिताचरणाद् देव विष्ठायां जायते कृमिः ॥ ६७ ॥

---

१. असाधुम्—क० ।

मन्त्रत्यागात् भवेन्मृत्युर्गुरुत्यागाद् दरिद्रता ।
गुरुमन्त्रपरित्यागाद्रौरवं नरकं व्रजेत् ॥ ६८ ॥
गुरौ सन्निहिते यस्तु पूजयेदन्यदेवताम् ।
प्रयाति नरकं घोरं सा पूजा विफला भवेत् ॥ ६९ ॥
गुरुवद् गुरुपुत्रेषु गुरुवत् तत्सुतादिषु ।
अविद्यो वा सविद्यो वा गुरुरेव तु दैवतम् ॥ ७० ॥
अमार्गस्थोऽपि मार्गस्थो गुरुरेव तु दैवतम् ।
उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदो गुरुः ॥ ७१ ॥
तस्मान्मन्येत सततं पितुरप्यधिकं गुरुम् ।
[1]गुरुदेवाधीनश्चास्मि शास्त्रे मन्त्रे कुलाकुले ॥ ७२ ॥
नाधिकारी भवेन्नाथ श्रीगुरोः पदभावकः ।
गुरुर्माता पिता स्वामी बान्धवः सुहृत् शिवः ॥ ७३ ॥
इत्याधाय मनो नित्यं भजेत् सर्वात्मना गुरुम् ।
एकमेव परं ब्रह्म स्थूलशुक्लमणिप्रभम् ॥ ७४ ॥
सर्वकर्मनियन्तारं गुरुमात्मानमाश्रयेत् ।
गुरुश्च सर्वभावानां भावमेकं न संशयः ॥ ७५ ॥
निःसन्दिग्धं गुरोर्वाक्यं संशयात्मा विनश्यति ।
निःसंशयी गुरुपदे सर्वत्यागी पदं व्रजेत् ॥ ७६ ॥
खेचरत्वमवाप्नोति मासादेव न संशयः ।
सद्गुरुमाश्रितं शिष्टं वर्षमेकं प्रतीक्षयेत् ॥ ७७ ॥

---

१. गुरुदेवं विना चास्मिन् शास्त्रे मन्त्रे कुलाकुले ।
सोऽधिकारी भवेन्नाथ श्रीगुरोः पादसेवकः ॥
—क० ।

सगुणं निर्गुणं वापि ज्ञात्वा मन्त्रं प्रदापयेत् ।
शिष्यस्य लक्षणं सर्वं शुभाशुभविवेचनम् ॥ ७८ ॥
अन्यथा विप्रदोषेण सिद्धिपूजाफलं दहेत् ।
कामुकं कुटिलं लोकनिन्दितं सत्यवर्जितम् ॥ ७९ ॥
अविनीतमसमर्थं प्रज्ञाहीनं रिपुप्रियम्[1] ।
सदापापक्रियायुक्तं विद्याशून्यं जडात्मकम् ॥ ८० ॥
कलिदोषसमूहाङ्गं वेदक्रियाविवर्जितम् ।
आश्रमाचारहीनञ्चाशुद्धान्तःकरणोद्यतम् ॥ ८१ ॥
सदा श्रद्धाविरहितमधैर्यं क्रोधिनं भ्रमम् ।
असच्चरित्रं विगुणं परदारातुरं सदा ॥ ८२ ॥
असद्बुद्धिसमूहोत्थमभक्तं द्वैतचेतसम् ।
नानानिन्दावृताङ्गं च तं शिष्यं वर्जयेद् गुरुः ॥ ८३ ॥
यदि न त्यज्यते वीर धनादिदानहेतुना ।
नारकी शिष्यवत् पापी तद्विशिष्टमवाप्नुयात् ॥ ८४ ॥
क्षणादसिद्धः स भवेत् शिष्यासादितपातकैः[2] ।
अकस्मान्नरकं प्राप्य कार्यनाशाय केवलम् ॥ ८५ ॥
विचार्य यत्नात् विधिवत् शिष्यसंग्रहमाचरेत् ।
अन्यथा शिष्यदोषेण नरकस्थो भवेद् गुरुः ॥ ८६ ॥
न पत्नीं दीक्षयेद्भर्ता न पिता दीक्षयेत् सुताम् ।
न पुत्रञ्च तथा भ्राता भ्रातरं नैव दीक्षयेत् ॥ ८७ ॥
सिद्धमन्त्रो यदि पतिस्तदा पत्नीं स दीक्षयेत् ।
शक्तित्वेन भैरवस्तु न च सा पुत्रिका भवेत् ।
मन्त्राणां देवता ज्ञेया देवता गुरुरूपिणी ॥ ८८ ॥

---

१. यत् तच्छिष्यम्—क०।
२. शिष्यदोषादिपातकैः—क० ।

तेषां भेदो न कर्तव्यो यदीच्छेच्छुभमात्मनः ।
एकग्रामे स्थितः शिष्यस्त्रिसन्ध्यं प्रणमेद् गुरुम् ॥ ८९ ॥

क्रोशमात्रस्थितो भक्त्या गुरुं प्रतिदिनं नमेत् ।
अर्धयोजनतः शिष्यः प्रणमेत् पञ्चपर्वसु ॥ ९० ॥

एकयोजनमारभ्य योजनद्वादशावधिः ।
दूरदेशस्थितः शिष्यो भक्त्या तत्सन्निधिं गतः ॥ ९१ ॥

तन्त्रयोजनसंख्योक्तमासेन प्रणमेद् गुरुम् ।
वर्षैकेण भवेद् योग्यो विप्रो हि गुरुभावतः[1] ॥ ९२ ॥

वर्षद्वयेन राजन्यो वैश्यस्तु वत्सरैस्त्रिभिः ।
चतुर्भिर्वत्सरैः शूद्रः कथिता शिष्ययोग्यता ॥ ९३ ॥

यदि भाग्यवशेनैव सिद्धमन्त्रं लभेत् प्रभो ।
महाविद्या त्रिशक्त्याश्च गृह्णीयात् तत्कुलाद् ध्रुवम् ॥ ९४ ॥

गुरोर्विचारं सर्वत्र तातमातामहं विना ।
प्रमादाच्च तथाज्ञानात् एभ्यो मन्त्रं समाचरन् ॥ ९५ ॥

प्रायश्चित्तं ततः कृत्वा पुनर्दीक्षां समाचरेत् ।
सावित्रीमन्त्रजापश्च लक्ष्यं जाप्यं जगत्पतेः ॥ ९६ ॥

विष्णोर्वा प्रणवं लक्ष्यं प्रायश्चित्तमिति स्मृतम् ।
अशक्तश्चेन्महादेव चायुतं प्रजपेन्मनुम् ॥ ९७ ॥

दशसाहस्रजाप्येन सर्वकल्मषनाशिनी ।
गायत्रीच्छन्दसां माता पापराशितुलानला ॥ ९८ ॥

मम मूर्त्तिप्रकाशा च पशुभावविवर्जिता ।
फलोद्भवप्रकरणे ब्रह्मणापद्यते निशि ॥ ९९ ॥

यदि भाग्यवशाद् देव सिद्धमन्त्रं गुरुं तथा ।
तदैव तान्तु दीक्षेत अष्टैश्वर्याय केवलम् ॥ १०० ॥

---

१. गुणसमन्वितः—क० ।

निर्बीजश्च पितुर्मन्त्रं शैवे शाक्ते न दुष्यति ।
ज्येष्ठपुत्राय दातव्यं कुलीनैः कुलपण्डितैः ॥ १०१ ॥

कुलयुक्ताय[1] दान्ताय महामन्त्रं कुलेश्वरम् ।
तदैव मुक्तिमाप्नोति सत्यं सत्यं न संशयः ॥ १०२ ॥

कनिष्ठञ्च रिपुं चापि सोदरं वैरिपक्षगम् ।
मातामहञ्च पितरं यतिञ्च वनवासिनम् ॥ १०३ ॥

अनाश्रमं[2] कुसंसर्गं स्वकुलत्यागिनन्तथा ।
वर्जयित्वा च शिष्यांस्तान् दीक्षाविधिमुपाचरेत् ॥ १०४ ॥

अन्यथा[3] तद्विरोधेन कामनाभोगनाशनम् ।
सिद्धमन्त्रञ्च गृह्णीयाद् दुष्कुलादपि भैरव ॥ १०५ ॥

सद्गुरो[4] भावनेच्छन्नरूपे रूपे घरे शुभे ।
तत्र दीक्षां समाकुर्वन् अष्टैश्वर्यजयं लभेत् ॥ १०६ ॥

स्वप्ने तु नियमो नास्ति दीक्षासु गुरुशिष्ययोः ।
स्वप्नलब्धे स्त्रिया दत्ते संस्कारेणैव शुद्धयति ॥ १०७ ॥

साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया ।
सर्वमन्त्रार्थतत्त्वज्ञा सुशीला पूजने रता ॥ १०८ ॥

सर्वलक्षणसम्पन्ना जापिका पद्मलोचना ।
रत्नालङ्कारसंयुक्ता वर्णाभूवनभूषिता ॥ १०९ ॥

शान्ता कुलीना कुलजा चन्द्रास्या सर्ववृद्धिगा ।
अनन्तगुणसम्पन्ना रुद्रत्वदायिनी प्रिया ॥ ११० ॥

---

१. गुणयुक्ताय—क० ।

२. नानाश्रमम्—क० ।

३. अन्यथा तद्विरोधेन कायनाशो भवेद्ध्रुवम्—क० ।

४. यद्भवौ—ग० ।

गुरुरूपा मुक्तिदात्री शिवज्ञाननिरूपिणी ।
गुरुयोग्या भवेत् सा हि विधवा परिवर्जिता ॥ १११ ॥
स्त्रिया दीक्षा शुभा प्रोक्ता मन्त्रश्चाष्टगुणा स्मृता ।
पुत्रिणी विधवा ग्राह्या केवला ऋणकारिणी[१] ॥ ११२ ॥
सिद्धमन्त्रो यदि भवेद् गृह्णीयाद्विधवामुखात् ।
केवलं सुफलं[२] तत्र मातुरष्टगुणं ध्रुवम् ॥ ११३ ॥
सधवा[३] स्वप्रकृत्या च ददाति यदि तन्मनुम् ।
ततोऽष्टगुणमाप्नोति यदि सा पुत्रिणी सती ॥ ११४ ॥
यदि माता स्वकं मन्त्रं ददाति स्वसुताय च ।
तदाष्टसिद्धिमाप्नोति भक्तिमार्गे न संशयः ॥ ११५ ॥
तदैव दुर्लभं देव यदि मात्रा प्रदीयते ।
आदौ भक्तिं ततो मुक्तिं सम्प्राप्य कालरूपधृक् ॥ ११६ ॥
सहस्रकोटिविद्यार्थं जानाति नात्र संशयः ।
स्वप्ने तु माता यदि वा ददाति शुद्धमन्त्रकम् ॥ ११७ ॥
पुनर्दीक्षां सोऽपि कृत्वा दानवत्त्वमवाप्नुयात् ।
यदि भाग्यवशेनैव जननी दानवर्तिनी[४] ॥ ११८ ॥
तदा सिद्धिमवाप्नोति तत्र मन्त्रं विचारयेत् ।
स्वीयमन्त्रोपदेशेन[५] न कुर्याद् गुरुचिन्तनम् ॥ ११९ ॥

---

१. आनन्दकारिणी—क० ।
२. सफलं तन्त्रे—क० ।
३. सधवा स्वप्नविषये ददाति यदि सन्मनुम् ।
तत्राष्ट … … … … … … ॥—क० ।
४. चानुवर्तिनी—क० ।
५. तु—क० ।

तथा श्रीललिता काली महाविद्या महामनोः[1] ।
सर्वसिद्धियुतो भूत्वा वत्सरात् तां प्रपश्यति ॥ १२० ॥

कालीकल्पलता देवी महाविद्यादिसाधने ।
गुरुचिन्ता न कर्तव्या ये जानन्ति गुरोर्वचः ॥ १२१ ॥

यदि मन्त्रं विचार्याशु गृह्णाति साधकोत्तमः ।
अनन्तकोटिपुण्यस्य द्विगुणं भवति ध्रुवम् ॥ १२२ ॥

विचार्य चक्रसारञ्च मन्त्रं गृह्णाति यो नरः ।
वैकुण्ठनगरे वासस्तेषां जन्मशतैरपि ॥ १२३ ॥

इति श्रुत्वा महादेवो महादेव्याः सरस्वतीम् ।
उवाच पुनरानन्दपुलकोल्लासविग्रहः ॥ १२४ ॥

ज्ञातुं चक्रं षोडशञ्च चक्रहस्तवर[2]प्रदम् ।
अत्यद्भुतफलोपेतं धर्मार्थकाममोक्षदम् ॥ १२५ ॥

श्रीभैरव उवाच—

कथयस्व महादेवि कुलसद्भावप्राप्तये[3] ।
यदि मे सुकृपादृष्टिः[4]वर्तते स्नेहसागरे ॥ १२६ ॥

त्वत्प्रसादाद्भैरवोऽहं कालोऽहं जगदीश्वरः ।
भुक्तिमुक्तिप्रदाता च योगयोग्यो दिगम्बरः[5] ॥ १२७ ॥

इदानीं सर्वविद्यानां दीक्षाद्यं चक्रमण्डलम् ।
अकालकुलहीनञ्चाकडमञ्च[6] कुलाकुलम् ॥ १२८ ॥

---

१. महामनोः—क० ।
२. पुर प्रदम्—ख० ग० ।
३. पण्डिते—ख० ग० ।
४. स्वकृपादृष्टि इति ग० ख० ।
५. यागयोगो—ख० ग० ।
६. कालीकुलकुलान्तरे—क० ।

[1]श्रीभैरवी उवाच—

ताराचक्रं राशिचक्रं कूर्मचक्रं तथापरम् ।
शिवचक्रं विष्णुचक्रं ब्रह्मचक्रं विलक्षणम् ॥ १२९ ॥
देवचक्रं ऋणिधनि उल्काचक्रं ततः परम् ।
वामाचक्रं चतुश्चक्रं सूक्ष्मचक्रं ततो वदेत् ॥ १३० ॥
तथा क-थ-ह-चक्रञ्च कथितं षोडशं प्रभो[2] ।
एतदुत्तीर्णमन्त्रञ्च ये गृह्णन्ति नरोत्तमाः ॥ १३१ ॥
तेषामसाध्यं जगति न किमपि वर्तते ध्रुवम् ।
किमन्यत् कथयामीह देवतादर्शनं लभेत् ॥ १३२ ॥
सर्वत्रगामी स भवेत् चक्रराजप्रसादतः ।
सर्वचक्रविचारञ्च न जानाति द्विजोत्तमः ॥ १३३ ॥
यज्ञानाति तद्विचार्यं देवताप्रीतिकारकम् ।
ताराशुद्धिं[3] वैष्णवानां कोष्ठशुद्धिं शिवस्य च ॥ १३४ ॥
राशिशुद्धिं त्रैपुरस्य गोपालेऽकडमः स्मृतः ।
अकडमो वामने च गणेशे हरचक्रतः ॥ १३५ ॥
कोष्ठचक्रं वराहस्य महालक्ष्म्याः कुलाकुलम् ।
नामादिचक्रे सर्वेषां भूतचक्रे तथैव च ॥ १३६ ॥
त्रैपुरं तारचक्रे च शुद्धं मन्त्रं भजेद् बुधः ।
वैष्णवं राशिसंशुद्धं शैवश्चाकडमं स्मृतम् ॥ १३७ ॥

---

१. श्रृणु नाथ प्रवक्ष्यामि त्वं योग्योऽसि सुरद्रुमः ।
नानाविशेषणे सक्तः सावधानोऽवधारय ॥
आदावकडमं प्रोक्तं श्रीचक्रञ्च कुलाकुलम् ॥ अधिकः—क० ।

२. कथय त्वं मयि प्रभो—ख० ग० ।

३. ताराशुद्धि—क० ।

कालिकायाश्च तारायाः हरचक्रं शुभं भवेत् ।
चण्डिकाया भवेत् कोष्ठे गोपाले ऋक्षचक्रकम्[1] ॥ १३८ ॥
हरचक्रे सर्वमन्त्रान् ऋणाधिक्येन चाश्रयेत् ।
ऋणाधिक्ये शुभं विद्याद् धनाधिक्ये च नो विधिः ॥ १३९ ॥
दोषान् संशोध्य गृह्णीयान्मध्यदेशे तु साधकः ।
पितृमातृकृतं नाम त्यक्त्वा शर्मादिदेवकान् ॥ १४० ॥
श्रीवर्णश्च ततो विद्याचक्रेषु योजयेत् क्रमात् ।
क्रमेण शृणु तत्सर्वं शुभाशुभफलप्रदम् ॥ १४१ ॥
जापकानां भावुकानां शुद्धं सिद्ध्यति तत्क्षणात् ।
मन्त्रमात्रं प्रसिद्ध्येत भक्तानामिति निश्चयः ॥ १४२ ॥
कुलीनकुलजातानां ध्यानमार्गार्थगामिनाम् ।
महाविद्या महाज्ञानं[2] संशुद्धमपि सिध्यति ॥ १४३ ॥
सिद्धमन्त्रप्रकरणे यदुक्तञ्च महेश्वर ।
अष्टसिद्धिकरे तस्य सायुज्यपदमाप्नुयात् ॥ १४४ ॥
चक्रं षोडशसारञ्च सर्वेषां मन्त्रसिद्धये ॥ १४५ ॥
विचार्य सर्वमन्त्रञ्च यन्मया गदितं हितम् ।
आदौ बालाभैरवीणामकडमान्मतं मया ॥ १४६ ॥
कुमारीललितादेव्याः कुरुकुल्लादिसाधने ।
श्रीचक्रं फलदं प्रोक्तं सर्वचक्रफलप्रदम् ॥ १४७ ॥
योगिन्यादिसाधने च ताराचक्रं महत्फलम् ।
उन्मत्तभैरवीविद्याद्यादिसाधननिर्मले ॥ १४८ ॥

---

१. गोपाले सूक्ष्मचक्रकम्—क० ।
२. महामन्त्रम्—क० ।
३. प्रकारः स्यात्—ग० ।

राशिचक्रं कोटिफलं नानारत्नप्रदं शुभम् ।
प्रत्यङ्गिरासाधने च उल्काविद्यादिसाधने ॥ १४९ ॥

शिवचक्रं महापुण्यं सर्वचक्रफलप्रदम् ।
कालिकाचर्चिकामन्त्रे विमलाद्यादिसाधने ॥ १५० ॥

सम्पत्प्रदाभैरवीणां मन्त्रग्रहणकर्मणि ।
विष्णुचक्रे कोटिशतं पुण्यं प्राप्नोति मानवः ॥ १५१ ॥

छिन्नादिश्रीविद्यायाः[1] कृत्यादेव्याश्च साधने ।
नक्षत्रविद्याकामाख्या ब्रह्माण्यादि सुसाधने ॥ १५२ ॥

ब्रह्मचक्रं महापुण्यं सर्वविद्याफलं लभेत् ।
कोटिजाप्येन यत्पुण्यं ग्रहणात् तत्फलं लभेत् ॥ १५३ ॥

वज्रज्वालामहाविद्यासाधने मन्त्रजापने ।
गुह्यकालीसाधने च कुब्जिकामन्त्रसाधने ॥ १५४ ॥

देवचक्रं शुभं प्रोक्तं वाक्यसिद्धिप्रदायकम् ।
कामेश्वरी-अट्टहासामन्त्रसाधनकर्मणि ॥ १५५ ॥

राकिणीसन्दिरादेवी[2]मन्दिरामन्त्रसाधने ।
ऋणिधनिमहाचक्रं विचार्य सर्वसिद्धिदम् ॥ १५६ ॥

श्रीविद्याभुवनेशानीभैरवीसाधने तथा ।
पृथ्वीकुलावतीवीणासाधने[3] वामनीमनोः ॥ १५७ ॥

उल्काचक्रं महापुण्यं राजत्वफलदं शुभम् ।
शिवादिनायिकामन्त्रे बालाचक्रं[4] सुखप्रदम् ॥ १५८ ॥

---

१. उग्रविद्यायः—क० ।

२. दक्षिणी—क० ।

३. चीना साधने वासनी मनो—क० ।

४. वामाचक्रं—क० ।

फेत्कारी मन्त्रजाप्ये च उड्डीयानेश्वरी मनोः ।
चतुश्चक्रं शतफलं महामन्त्रफलप्रदम् ॥ १५९ ॥
द्राविणीदीर्घजङ्घादि ज्वालामुख्यादिसाधने ।
नारसिंहीसाधने च सूक्ष्मचक्रं फलोद्भवम् ॥ १६० ॥
हरिणी मोहिनी कात्यायनीसाधनकर्मणि ।
वैष्णवे च तथा शैवे देवीमन्त्रे च भैरव ॥ १६१ ॥
अकथहं महाचक्रं विचार्य यत्नपूर्वकम् ।
यो गृह्णाति महामन्त्रं स शिवो नात्र संशयः ॥ १६२ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महायन्त्रोद्दीपने सर्वचक्रानुष्ठाने
महागुरुप्रकरणे भावनिर्णये भैरवीभैरवसंवादे
द्वितीयः पटलः ॥



# तृतीयः पटलः

भैरवी उवाच—

अथ चक्रं प्रवक्ष्यामि कालाकालविचारकम् ।
यदाश्रितो महावीरो[1] दीव्यो वा पशुभाववान् ॥ १ ॥
चक्रराजं प्रविचार्य सिद्धमन्त्रं न चालयेत् ।
प्रबलस्य प्रचण्डस्य प्रासादस्य महामनोः ॥ २ ॥
शक्तिकूटादिमन्त्राणां[2] सिद्धादीन्नैव शोधयेत् ।
वराहार्कनृसिंहस्य तथा[3] पञ्चाक्षरस्य च ॥ ३ ॥
महामन्त्रस्य* कालस्य चन्द्रचूडस्य सन्मनोः ।
नपुंसकस्य मन्त्रस्य सिद्धादीन्नैव शोधयेत् ॥ ४ ॥
विंशत्यर्णाधिका मन्त्रा मालामन्त्राः प्रकीर्तिताः ।
सूर्यमन्त्रस्य योगस्य कृत्यामन्त्रस्य शङ्कर ॥ ५ ॥
शंभुबीजस्य देवस्य सिद्धादीन्नैव शोधयेत् ।
चक्रेश्वरस्य चन्द्रस्य वरुणस्य महामनोः ॥ ६ ॥
कालीतारादिमन्त्रस्य सिद्धादीन्नैव शोधयेत् ।
तथापि शोधयेन्मन्त्रं प्रशंसापरमेव तत् ॥ ७ ॥

---

१. यदाश्रित्य महादेवो इति क.

२. शक्तिहृदादि इति क.

३. सिद्धादीन्नैव शोधयेत् का.

* श्रीदत्तस्य तथा सुसलब्धस्य च महामनोः ।
एकाक्षरस्य मन्त्रस्य सिद्धादीन्नैव शोधयेत् ॥
एकद्वित्र्यादिबीजस्य सिद्धमन्त्रस्य वैदिके ।
इत्यष्टाक्षरमन्त्रस्य सिद्धादीन्नैव शोधयेत् ॥

इति अधिकः पाठः क.

यत्र प्रशंसापरमं तत्कार्यं दैवतं स्मृतम् ।
प्रशंसा यत्र नास्त्येव तत्कार्यं नापि कारयेत् ॥ ८ ॥
अत्यन्तफलदं मन्त्रं गृह्णीयात् [1]कुलरक्षणात् ।
धनिमन्त्रं नगृह्णीयात् अकूलश्च तथैव च ॥ ९ ॥
[2]गृहीत्वा निधनं याति कोटिजाप्येन सिद्ध्यति ।
मननं विश्वविज्ञानं त्राणं संसारबन्धनात् ॥ १० ॥
यतः करोति संसिद्धौ मन्त्र इत्यभिधीयते ।
प्रणवाद्यं न दातव्यं मन्त्रं शूद्राय सर्वथा ॥ ११ ॥
आत्ममन्त्रं गुरोर्मन्त्रं मन्त्रं चानपसंज्ञकम् ।
पितुर्मन्त्रं तथा मातुर्मन्त्रसिद्धिप्रदं शुभम् ॥ १२ ॥
शूद्रो निरयमाप्नोति ब्राह्मणो यात्यधोगतिम् ।
अदीक्षिता ये कुर्वन्ति जपपूजादिकाः क्रियाः ॥ १३ ॥
न भवन्ति श्रिये तेषां शिलायामुप्तबीजवत् ।
देवीदीक्षा विहीनस्य न सिद्धिर्न च सद्गतिः ॥ १४ ॥
तस्मात्सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ।
[3]विचारं चक्रसारस्य करणीयमवश्यकम् ॥ १५ ॥
अदीक्षितोऽपि मरणे रौरवं नरकं व्रजेत् ।
तस्माद्दीक्षा प्रयत्नेन सदा कार्या च तान्त्रिकात् ॥ १६ ॥
दीक्षा पूर्वदिने कुर्यात् सुविचारं प्रयत्नतः ।
तत्प्रकारं प्रयत्नेन कार्यं पर्वतपूजित ॥ १७ ॥
आदावकडमे सिद्धिर्मन्त्रं सञ्चारयेद् बुधः ।
रेखाद्वयं पूर्वपरे मध्ये रेखाद्वयं लिखेत् ॥ १८ ॥

---

१. कुलवर्त्मना इति क.
२. विघ्नविज्ञानम् इति का.
३. विचार्यक्रमारभ्यं करणीयमवश्यकम् । इति क.

चतुष्कोणे चतूरेखा कडमं चक्रमण्डलम् ।
भ्रामयित्वा [1]महावृत्तं निर्माय वर्णमालिखेत् ॥ १९ ॥
अकारादिक्षकारान्तान् क्लीबहीनान् लिखेत्ततः ।
एकैकमतो लेख्यान् मेषादिषु वृषान्तकान् ॥ २० ॥
वामावर्त्तेन गणयेत् क्रमशो वीरवल्लभ ।
तन्त्रमार्गेण गणयेन्नामादिवर्णकादिमान् ॥ २१ ॥
मेषादितोऽपि मीनान्तं क्रमशः शास्त्रपण्डितः ।
सिद्धसाध्यसुसिद्धादीन् पुनः सिद्धादयः पुनः ॥ २२ ॥
नवैकपञ्चमे सिद्धः साध्यः षड्दशयुग्मके ।
सुसिद्धस्त्रिसप्तके रुद्रे वेदाष्टद्वादशे रिपुः ॥ २३ ॥
एतत्ते कथितं नाथ अकडमादिकमुत्तमम् ।
पद्माकारं महाचक्रं दलाष्टकसमन्वितम् ॥ २४ ॥
अ आ वर्णद्वयं पूर्वे द्वितीये च द्वितीयकम् ।
तृतीये कर्णयुग्मश्च चतुर्थे नासिकाद्वयम् ॥ २५ ॥
पञ्चमे नयनं प्रोक्तं षष्ठे ओष्ठाधरं तथा ।
सप्तमे दन्तयुग्मश्च अष्टमे षोडशस्वरम् ॥ २६ ॥
कवर्गश्च पूर्वदले द्वितीये च चवर्गकम् ।
तृतीये च टवर्गश्च चतुर्थे च तवर्गकम् ॥ २७ ॥
पवर्गं पञ्चमे प्रोक्तं यवान्तं षष्ठपत्रके ।
सप्तमे शषसान् लिख्य लक्षमष्टमके पदे ॥ २८ ॥
सुखं राज्यं धनं विद्यां यौवनायुषमेव च ।
विचार्य चक्रमाप्नोति पुत्रत्वञ्च स्वजीवनम् ॥ २९ ॥
स्वीयनामाक्षरं तत्र देवनामाक्षरं तथा ।
एकस्थानं युगस्थानं विरोधं द्विविधं स्मृतम् ॥ ३० ॥

---

१. महाचित्तम् इति क,

जीवनं मरणं तत्र आकारादिसुपत्रके ।
लिखित्वा गणयेन्मन्त्री मरणं वर्जयेत् सदा ॥ ३१ ॥
यत्रास्ति मरणं तत्र जीवनं नास्ति निश्चितम् ।
परस्परविरोधेन सिद्धमन्त्रश्च [1]मूलदम् ॥ ३२ ॥
जीवने जीवनं ग्राह्यं सर्वत्र मरणं त्यजेत् ।
कुलाकुलस्य भेदं हि वक्ष्यामि मन्त्रिणामिह ॥ ३३ ॥
वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात् ।
पञ्चह्रस्वाः पञ्चदीर्घाः विन्द्वन्ताः सन्धिसम्भवाः ॥ ३४ ॥
कादयः पञ्चशः षक्षलसहान्ताः प्रकीर्तिताः ।
साधकस्याक्षरं पूर्वं मन्त्रस्यापि तदक्षरम् ॥ ३५ ॥
यद्येकभूतदैवत्यं [2]जानीयात्सकुलं हितम् ।
भौमस्य वारुणं मित्रमाग्नेयस्यापि मारुतम् ॥ ३६ ॥
पार्थिवाणाञ्च सर्वेषां शत्रुराग्नेयमम्भसाम् ।
ऐन्द्रवारुणयोः शत्रुर्मारुतः परिकीर्तितः ॥ ३७ ॥
पार्थिवे वारुणं मित्रं तैजसं शत्रुरीरितः ।
नाभसं सर्वमित्रं स्याद्विरुद्धं नैवशीलयेत् ॥ ३८ ॥
रेखाष्टकं हि पूर्वाग्रं रेखैकादशमध्यतः ।
दक्षिणोत्तरभागेन दक्षिणावधिमालिखेत् ॥ ३९ ॥
कुलाकुलञ्च कथितं ताराचक्रं पुनः शृणु ।
दक्षिणोत्तरदेशे तु रेखाचतुष्टयं लिखेत् ॥ ४० ॥
दशरेखाः पश्चिमाग्राः कर्त्तव्याः वीरवन्दित ।
अश्विन्यादिक्रमेणैव विलिखेत्तारकाः पुनः ॥ ४१ ॥

---

१. मृत्युदम् इति—क० ।
२. मङ्गलं हि तत् इति—क० ।

वक्ष्यमाणक्रमेणैव तन्मध्ये वर्णकान् लिखेत् ।
युग्ममेकं तृतीयञ्च[1] वेदमेकैकयुग्मकम् ॥ ४२ ॥
एकयुग्मं तथैकञ्च युगलं युगलं युगम् ।
एकं युग्मं तृतीयञ्च चन्द्रनेत्रं[2] विविधं विधुम् ॥ ४३ ॥
चन्द्रयुग्मं चन्द्रयुग्मं रामवेदं गृहे शुभे ।
वर्णाः क्रमाः स्वराण्येव रेवत्यश्विगतावुभौ ॥ ४४ ॥
अकारद्वयमश्विन्यां देवतागणसम्भवाः ।
इकारं भरणी सत्यां कृत्स्नमुस्वरकृत्तिका ॥ ४५ ॥
राक्षसी कृत्तिका भूमौ सर्वविघ्नविनाशिनी ।
नासिकागण्डमन्त्रश्च रोहिणीशवरूपिणी ॥ ४६ ॥
ओष्ठमध्ये मृगशिरा देवता परिकीर्तिता ।
अधरान्तमार्द्रया च मानुषं सर्वलक्षणम् ॥ ४७ ॥
दन्तयुग्मं पुनर्वस्वाच्छादितं मानुषं प्रियम् ।
कः पुष्या देवता ज्ञेया खगाश्लेषा च राक्षसी ॥ ४८ ॥
मघावक्षे घङान्ता च तथा च पूर्वफाल्गुनी ।
छजोत्तरा फल्गुनी च मनुष्याः परिवर्तिताः ॥ ४९ ॥
झञहस्ता देवगणा टठचित्रा च राक्षसी ।
डस्वाती देवरमणी विशाखा ढणराक्षसी ॥ ५० ॥
तण्यदानुराधया च शोभितादेवनायिका ।
ध ज्येष्ठा राक्षसी ज्ञेया मूलानपफराक्षसी ॥ ५१ ॥
पूर्वाषाढ़ा मानुसानी बकाराक्षयमालिनी ।
भोत्तराषाढ़यामर्त्यो मकारः श्रवणा मता ॥ ५२ ॥
धनिष्ठा यरवक्षः स्त्रीलस्था शतभिषा तथा ।
वशपूर्वभाद्रपदा मनुजाः परिकीर्तिताः ॥ ५३ ॥

---

१ तुरीयञ्च इति—क० ।
२. चन्द्रानलविधुम् विधुम् इति—क० ।

तथोत्तराभाद्रपदा मानुषीमङ्गलोद्भवा ।
अं अः लक्षरेवती च देवकन्याः प्रकीर्तिताः ॥ ५४ ॥

स्वजातौ परमा प्रीतिर्मध्यमा भिन्नजातिषु ।
रक्षोमानुषयोर्नाशो वैरं दानवदेवयोः ॥ ५५ ॥

जन्मसम्पत् विपत् क्षेमप्रत्यरिः साधको वधः ।
मित्रं परममित्रश्च गणयेच्च पुनः पुनः ॥ ५६ ॥

वर्जयेज्जन्मनक्षत्रं तृतीयं पञ्चसप्तकम् ।
षडष्टनवभद्राणि युगश्च युग्मकं तथा ॥ ५७ ॥

यदीह निजनक्षत्रं न जानाति द्विजोत्तमः ।
नामाद्यक्षरसम्भूतं स्वतारमविरोधकम् ॥ ५८ ॥

विनीय गणयेन्मन्त्री शुभाशुभविचारवान् ।
प्रादक्षिण्येन गणयेत् साधकाद्यक्षरात् सुधीः ॥ ५९ ॥

इत्येतत् कथितं नाथ ममात्मा पुरुषेश्वर ।
कुलाकुलमनन्ताख्यं ताराचक्रं मनोर्गुणम् ॥ ६० ॥

तारामन्त्रं प्रदीपाभं रत्नभाण्डस्थितामृतम् ।
एतद्विचारे महतीं सिद्धिमाप्नोति मानवः ॥ ६१ ॥

राशिचक्रं प्रवक्ष्यामि सिद्धिलक्षणमुत्तमम् ।
क्रमेण देया युगला रेखा पूर्वापरोद्गमा ॥ ६२ ॥

तन्मध्यतो द्वयं दद्याद्रेखाग्निदक्षिणे ततः ।
अग्निनैर्ऋतिवायवीशक्रमेण रेखयेत् तथा ॥ ६३ ॥

विलिखेन्मेषराश्यादि मीनान्तं सर्ववर्णकान् ।
कन्यागृहगतान्* शादिवर्णानालिख्य यत्नतः ॥ ६४ ॥

---

* क्रमेण विलिखेद् वीर राशिचक्रे च साधक ।
वेदरामं रामहस्तं भज लोचनमेव च ॥
पञ्चभूत पञ्चभूतं पञ्चवेदादिवर्णकान् ।

गणयेत्साधकश्रेष्ठो लग्नाद्यासव्ययान्तकान् ।
स्वराशिदेवकोष्ठानामनुकूलान्भजेन्मनून् ॥ ६५ ॥
राशीनां शुद्धता ज्ञेया त्यजेत् शत्रुमृतिं व्ययम् ।
स्वराशेर्मन्त्रराश्यन्तं गणनीयं विचक्षणैः ॥ ६६ ॥
साध्याद्यक्षरराश्यन्तं गणयेत् साधकाक्षरात् ।
एकं वा पञ्च नवमं बान्धवं परिकीर्तितम् ॥ ६७ ॥
द्विषडदशमसंस्थाश्च सेवकाः परिकीर्तिताः ।
रामरुद्राश्च मुनयः पोषकाः परिकीर्तिताः ॥ ६८ ॥
सूर्याष्टवेदयुक्तास्तु घातकाः सर्वदोषदाः ।
शक्त्यादौ तु महादेव कुलचूडामणिर्यतिः ॥ ६९ ॥
वर्जयेत् षष्ठगेहञ्च अष्टमं द्वादशं तथा ।
लग्नं धनं भ्रातृबन्धुपुत्रशत्रुकलत्रकाः ॥ ७० ॥
मरणं धर्मकर्मायव्यया द्वादशराशयः ।
नामानुरूपमेतेषां शुभाशुभफलं दिशेत् ॥ ७१ ॥
वैष्णवे तु महाशत्रोः स्थाने बन्धुः प्रकीर्तितः ।
कूर्मचक्रं प्रवक्ष्यामि शुभाशुभफलात्मकम् ॥ ७२ ॥
यज्ज्ञात्वा सर्वशास्त्राणि जानाति पण्डितोत्तमः ।
अभेद्यभेदकं चक्रं शृणुष्वादरपूर्वकम् ॥ ७३ ॥
कूर्माकारं महाचक्रं चतुष्पादसमावृतम् ।
मुण्डे स्वरादक्षपादे कवर्गं वामपादके ॥ ७४ ॥
चवर्गं कीर्तितं पश्चाद् अधःपादे टवर्गकम् ।
तदधस्तु तवर्गं स्यादुदरे च पवर्गकम् ॥ ७५ ॥
यवान्तं हृदये प्रोक्तं सहान्तं पृष्ठमध्यके ।
लाङ्गूले शत्रुबीजञ्च क्षकारं लिङ्गमध्यके ॥ ७६ ॥
लिखित्वा गणयेन्मन्त्री चक्रं कलिमलापहम् ।
स्वरे लाभं कवर्गे श्रीश्चवर्गे च विवेकदम् ॥ ७७ ॥

टवर्गे राजपदवीं तवर्गे धनवान् भवेत् ।
उदरे सर्वनाशः स्याद् हृदये बहुदुःखदम् ॥ ७८ ॥
पृष्ठे च सर्वसन्तोषं लाङ्गूले मरणं ध्रुवम् ।
वैभवं पृष्ठदेशे तु दुःखञ्च वामपादके ॥ ७९ ॥
विरुद्धद्वयलाभे तु न कुर्याच्चक्रचिन्तनम् ।
विरुद्धैके धर्मनाशो युग्मदोषे च मारणम् ॥ ८० ॥
यत्र देवाक्षरञ्चास्ति तत्र चेन्निजवर्णकम् ।
विरुद्धञ्चेत्त्यजेत् शत्रुमन्यमन्त्रं विचारयेत् ॥ ८१ ॥
पृथक्स्थाने यदि भवेद्वर्णमाला महेश्वर ।
यदि तत् सौख्यभावः स्यात् सौख्यं नापि विवर्जयेत् ॥८२॥
विभिन्नगेहे दोषश्चेत् शुभमन्त्रञ्च सन्त्यजेत् ।
इति ते कथितं देवि दृष्टादृष्टफलप्रदम् ॥ ८३ ॥
यः शोधयेच्चरेद् वर्णं मन्त्रमालामहेश्वरः ।
यदि शुध्यति चक्रेन्द्रं मन्त्रसिद्धिप्रदं शुभम् ॥ ८४ ॥
शिवचक्रं प्रवक्ष्यामि महाकालकुलेश्वर ।
अवश्यं सिद्धिमाप्नोति शिवचक्रप्रभावतः ॥ ८५ ॥
षट्कोणमध्यदेशे तु चतुरस्रं लिखेद् बुधः ।
तन्मध्ये विलिखेच्चारु चतुरस्रं सवर्णकम् ॥ ८६ ॥
मस्तकस्थत्रिकोणे तु शिवसंस्थानमन्त्रकम् ।
दक्षिणावर्तमानेन गणयेत् सर्वमन्त्रकम् ॥ ८७ ॥
विष्णुस्थाने स्वमन्त्रञ्च द्वितीये च त्रिकोणके ।
त्रिकोणे च तृतीये च ब्रह्मसंस्थानमन्त्रकम् ॥ ८८ ॥
शक्तिमन्त्रादिसंस्थानं त्रिकोणाधो मुखे तथा ।
नायिकामन्त्रसंस्थानं त्रिकोणाधो मुखे तथा ॥ ८९ ॥
नायिकामन्त्रसंस्थानं तद्वामे दुर्लभं शुभम् ।
तदूर्ध्वं च त्रिकोणे च भूतसंस्थानमन्त्रकम् ॥ ९० ॥

शिवाधो यक्षमन्त्रस्य संस्थानमतिदुर्लभम् ।
विष्णुब्रह्मसन्धिदेशे [1]महाविद्यापदं ध्रुवम् ॥ ९१ ॥

*स्वरस्थानं तथा वर्णस्थानं शृणु महाप्रभो ।
अआवर्णद्वयं शैवे कवर्गश्च सविन्दुकम् ॥ ९२ ॥

विष्णौ नेत्रं चवर्गश्च टवर्गं ब्रह्मणि श्रुतम् ।
तवर्गं नासिकाशक्तौ सर्वमन्त्रार्थचेतनम् ॥ ९३ ॥

नायिकायां पवर्गश्च न युगं परिकीर्तितम् ।
भूते यवान्तं विलिखेदोष्ठाधरसमन्वितम् ॥ ९४ ॥

प्रणवं यक्षमन्त्रे च शकारं परिकीर्तितम् ।
अधोदन्तं पिशाचे च षयुक्तं विन्दुभूषितम् ॥ ४५ ॥

शिवो बीजं देवमन्त्रे सकारश्च सविन्दुकम् ।
महाविद्यादिसंस्थाने लक्षवर्णं प्रकीर्तितम् ॥ ९६ ॥

इति ते कथितं शम्भो शृणु वर्णाङ्कवर्णनम् ।
शिवे एकविंशतिश्च द्वात्रिंद्विष्णुकोणके ॥ ९७ ॥

ब्रह्मणे षोडशाद्यश्च शक्तिकूटे युगाष्टकम् ।
नायिकायां वह्निवाणं भूते सप्ताङ्कमेव च ॥ ९८ ॥

यक्षे च चन्द्रवेदश्च पिशाचेऽष्टवसुः स्मृतः ।
सर्वदेवे वाणवेदं कृत्यायां षष्ठषष्ठकम् ॥ ९९ ॥

मध्ये षष्ठे हुताशश्च महाविद्यागृहे शुभे ।
साधकस्य च साध्यस्यैकाङ्कं साध्यमन्दिरे ॥ १०० ॥

---

१. पिशाचपदमन्त्रकम् इति—क० ।

* त्रिकोणं परिसर्वेषां मन्त्रसंस्थानमेव च ।
नायिकाभूतशक्तौ च कृत्यसंस्थानमन्त्रकम् ॥
चतुष्कोणमध्यदेशे महाविद्यापदं ध्रुवम् ।

इति अ० क० प्र० पो०

साधकाङ्कमूर्ध्वदेशे साध्याङ्कं गणयेदधः ।
भुजयुग्मं शिवे प्रोक्तं विष्णौ रामाष्टकं तथा ॥ १०१ ॥
ऋषिचन्द्रं विधौ प्रोक्तं शक्तौ रामाष्टकं तथा ।
नायिकायां वेदवाणं भूतेऽष्टनवमन्तथा ॥ १०२ ॥
यक्षे युग्मं चतुर्थं च पिशाचे वज्रकाष्टकम् ।
शक्तौ वशकृतौ ज्ञेयौ कृत्वा यां [1]मुनिषष्ठकम् ॥ १०३ ॥

यस्मिन् यस्मिन् गृहस्था ये देवतास्तु महाफलाः । क०

अनामाक्षरदेहस्थमक्षरं द्विगुणं स्मृतम् ।
साध्याङ्केन योजयित्वा पूरयेत्षष्ठपञ्चमैः ॥ १०४ ॥
तद्गेहं ग्राहयेद् यत्नात् देवताद्यक्षरं यथा ।
एकशेषस्थितं[2] वर्णं कुर्यान्नापि[3] विवेचनम् ॥ १०५ ॥
शुद्धं तद्धि विजानीयाद्विचारमन्यतोऽपि च ।
षष्ठाङ्केन च वेदाङ्कं तथा च [4]देववर्णकम् ॥ १०६ ॥

शशाङ्कं मिश्रितं चाङ्कं द्विगुणं देवतार्णकम् । क०

पश्चात् कृत्वा तदङ्कश्च हरेद्रामेण वल्लभ ।
यदि साध्याङ्कं विस्तीर्णं तदा नैव शुभं भवेत् ॥ १०७ ॥
साधकाङ्कश्च विस्तीर्णं यदि स्याज्जायते गृहे ।
तदा सर्वकुलेशः स्याद्गुरुश्रवणसंशयः ॥ १०८ ॥
द्विगुणं देवतावर्णं साधकाङ्केन योजयेत् ।
वर्णसंख्याङ्कमालिख्य गणयेत् साधकोत्तमः ॥ १०९ ॥
रसबाणेन सम्पूर्य संहरेत् रससंख्यया ।
आत्माङ्कमिश्रितं पश्चाद् यदि किंचिन्न तिष्ठति[5] ॥ ११० ॥

---

१. मणि इति—क० । पु. पा.
२. गेहे स्थितं वर्णम्—क० ।
३. वापि इति—क० ।
४. 'यदि किञ्चिन्न तिष्ठति'—क० ।
५.

स्वीयाभिधानकाङ्कस्य द्विगुणश्चापि योजयेत् ।
पश्चादनलसंख्याभिर्हरेत् सौख्यार्थिमुक्तये ॥१११॥
अङ्कं बहुतरं ग्राह्यं साधकस्य सुखावहम् ।
न ग्राह्यं साध्यविस्तीर्णमतिशास्त्रार्थनिश्चयम् ॥११२॥
विचारादस्य चक्रस्य राजत्वं लभते ध्रुवम् ।
समानाङ्केन गृह्णीयाद् [1]गुण्याङ्कं वर्जयेदिह ॥११३॥
अवश्यं[2] चक्रमेवं हि गोपनीयं सुरासुरैः ।
विष्णुचक्रं प्रवक्ष्यामि चक्राकारं सुगोपनम् ॥११४॥
सर्वसिद्धिप्रदं शुद्धं चक्रं कृत्वा फलप्रदम् ।
शृणु नाथ महाविष्णोः स्थानमङ्गलदायकम् ॥११५॥
लक्ष्मीप्रियमङ्कमयं नवकोणं महाप्रभम् ।
तदूर्ध्वे च तमालिख्य तदूर्ध्वेऽष्टग्रहं शुभम् ॥११६॥
चतुष्कोणाकारगेहं सन्धौ शून्याष्टकं[3] लिखेत् ।
तदूर्ध्वे च तमालिख्य चक्रमेतद्धनेश्वर[4] ॥११७॥
[5]पूर्वे महेन्द्राभरणमूर्ध्वदेशोल्लसत्करम् ।
मुनिरामखचन्द्राद्यमङ्कं सर्वसमृद्धिदम् ॥११८॥
दक्षिणे वह्निभरणं रसवेदे खयुग्मकम्[6] ।
तदधो रामचक्रञ्च[7] सप्तषट्सु च रामकम् ॥११९॥
तदधो निर्ऋते स्वर्गे युगाङ्कशून्यवेदकम् ।
केवलाधो जलेशस्य मन्दिरं सुमनोहरम् ॥१२०॥

---

१. शून्याङ्कम् इति क०
२. अवश्यं भावयेत् चक्रम् इति क०
३. शूलाष्टकं लिखेत् इति क०
४. कुलेश्वर इति क०
५. महेन्द्रभवनम् इति क०
६. त्रियुग्मकम् क०
७. यमचक्रञ्च क०

रामेषु शून्यबाणाढ्यं तस्यामेवायुमन्दिरम् ।
भुजहस्तखरसाढ्यं चक्रेदमीश्वरात्मकम्[1] ॥१२१॥
नवकोणं मध्यदेशे पञ्चाङ्गभागमालिखेत्[2] ।
तन्मध्ये रचयेद्वर्णं पञ्चकोणे[3] त्रिकोणके ॥१२२॥
इन्द्राधो विलिखेद्धीरो वर्णमाद्यञ्च सप्तकम् ।
भागे दक्षिणकोणेषु ऋकारादङ्ककं[4] लिखेत् ॥१२३॥
ककारादिटकारान्तं तदधो विलिखेद् बुधः ।
तद्वामे ठादिमान्तञ्च वर्णलक्षणकारणम् ॥१२४॥
तदूर्ध्वेमादिवर्णञ्च चक्रञ्च गणयेत्ततः ।
पूर्वकोणपतिः शक्रो द्वितीयेशौ यमानलौ ॥१२५॥
निर्ऋतिर्वरुणश्चैव तृतीयमन्दिरेश्वरः ।
चतुर्थाधिपतिर्वायुः कुवेरो नाथ इत्यपि ॥१२६॥
पञ्चगेहस्याधिपतिरीशो विश्वविदाम्वरः ।
पञ्चकोणे प्रतिष्ठन्ति पञ्चभूताशयस्थिताः ॥१२७॥

---

१. प्राणवायुगतं हि तम् इति क०
तदूर्ध्वे प्रीतिदं नाम गुह्यकेश्वरमंदिरम् । इति क०
पञ्चपञ्च खसप्ताढ्यं देवता दर्शनप्रदम् ॥
तदूर्ध्वे शेषगेहे च महेशस्यापि मन्दिरम् ।
नवमाष्टमथाष्टाढ्यं चक्रगोपीश्वरात्मकम् ॥ इति क० पु० अधिकः पाठः ।

२. पञ्चाङ्कभागतो लिखेत् क०

३. पञ्चगेहेषु कोणके इति क०

४. ऋकारादि त्रयं लिखेत् इति क०

* एक गेहे स्थितं रत्नं देवता निजवर्णयोः ।
तदा सिद्धिमवाप्नोति विष्णौ भक्तिः दृढा भवेत् ॥
तदा तु गणयेन्मन्त्री विष्णुचक्रमनोरमम् ।
प्राणोपानः समानश्चोदानो व्यानश्च वायवः ॥ क० अ० पाठः

प्राणे सिद्धिमवाप्नोति चापाने व्याधिपीडनम् ।
समाने सर्वसम्पत्तिरुदाने निर्धनं भवेत् ॥१२८॥
व्याने च ईश्वरप्राप्तिरेतस्मिन् लक्षणं शुभम् ।
पूर्वगेहे महामन्त्रं मन्त्रत्यागं करोति यः ॥१२९॥
स तावत् साधकश्रेष्ठो विष्णुमार्गेण शंकर ।
विशेषं शृणु यत्नेन सावधानावधारय ॥१३०॥
सप्ताक्षरं त्र्यक्षरं च दशमाक्षरमेव च ।
पूर्वगेहे यदि भवेदाद्याक्षरसमन्वितम् ॥१३१॥
तदा भवति सिद्धिश्च सर्वमेवंप्रकारकम् ।
षष्ठाक्षरं वेदवर्णं विंशत्यर्णं महामनुम् ॥१३२॥
आम्नायाद्यक्षरं व्याप्तं सफलं गणयेद् बुधः ।
तथास्मिन् मम गेहे च मन्त्रं सप्ताक्षरं शुभम् ॥१३३॥
षष्ठाक्षरञ्च गणयेत्त्रिंशदक्षरमेव च ।
आद्याक्षरसमायुक्तं साध्यसाधकयोरपि ॥१३४॥
एकस्यापि च लाभे च मन्त्रसिद्धिरखण्डिता ।
मन्त्राक्षरादिलाभश्च अवश्यं गणयेदिह ॥१३५॥
नैरृते च जलेशस्य द्वयक्षरञ्च नवाक्षरम् ।
शून्यदेवाक्षरं[1] नाथ गणनीयं विचक्षणैः ॥१३६॥
तथात्र अक्षरं मन्त्रं पञ्चाक्षरमनुं तथा ।
पञ्चाशदक्षरं मन्त्रं मन्दिरे गणयेत् शुभम् ॥१३७॥
वायुकोणे कुबेरस्य मन्दिरे गणयेत्तथा ।
द्वाविंशत्यक्षरं मन्त्रं शून्यषष्ठमनुन्तथा ॥१३८॥
पञ्चाक्षरं तारिकायाः शिवे पञ्चाक्षरं तथा ।
सुसप्तमन्त्रग्रहणे सफलं परिकीर्तितम् ॥१३९॥

---

१. वेदाक्षरं इति क०

ईशानपञ्चकोणे च सफलञ्च नवाक्षरम् ।
अष्टाक्षरं हि विद्याया गणयेत् सहितं सुधीः ॥१४०॥

एतदुक्तञ्च गणयेद्विरुद्धं नैव शीलयेत् ।
प्राणमित्रं समानञ्च समानो व्यानवान्धवः ॥१४१॥

एतत्स्थितञ्च गृह्णीयाद्दोषभाक् स[1] भवेत् क्वचित् ।
एकदैव[2] प्रिये प्रीतिरेकगेहे तथा प्रियम् ॥१४२॥

गृहीत्वा विष्णुपदवीं प्राप्नोति मानवः क्षणात् ।
यदि चक्रं न विचार्य रिपुमन्त्रं सदा न्यसेत् ॥१४३॥

निजायुषं छिनत्त्येव मूको भवति निश्चितम् ।
विचार्य यदि यत्नेन सर्वचक्रे प्रियं हितम् ॥१४४॥

महामन्त्रं महादेव लघु सिद्ध्यति भूतले ॥१४५॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सर्वचक्रानुष्ठाने-
सिद्धमन्त्रप्रकरणे भावनिर्णये भैरवभैरवीसंवादे
तृतीयः पटलः ॥



१. न इति क०

२. एकदैव पतौ इति क०

# चतुर्थः पटलः

श्रीभैरवी उवाच—

अथ वक्ष्यामि चक्रान्यत्[1] शृणु भैरव सादरम् ।
येन हीना[2] न सिद्ध्यन्ति महाविद्यावरप्रदाः ॥ १ ॥

तव चक्रं[3] ब्रह्मणा व्यक्तं ब्रह्मचक्रमुदाहृतम् ।
यस्य ज्ञानात् स्वयं ब्रह्मा स्वबलेन भवं सृजेत् ॥ २ ॥

अकालमृत्युहरणं परं ब्रह्मपदं व्रजेत्[4] ।
चतुष्कोणे चतुष्कोणं तन्मध्ये च चतुश्चतुः ॥ ३ ॥

मध्यगेहं वेष्टयित्वा इष्टं[5] मन्दिरमुत्तमम् ।
अष्टकोणे महादेव षोडशस्वरमालिखेत् ॥ ४ ॥

अष्टकोणं वेष्टयित्वा वृत्तयुग्मं लिखेत् सुधीः ।
मध्यगेहे चतुष्कोणे कादिक्षान्तञ्च वर्णकम् ॥ ५ ॥

दक्षिणावर्त्तयोगेन विलिखेत् साधकोत्तमः ।
तदूद्ध्वें स्वगृहे चाङ्कं विलिख्य गणयेत् सुधीः ॥ ६ ॥

चतुर्गेहस्योद्ध्र्वदेशे युग्मगेहे क्रमाल्लिखेत् ।
साध्यस्य साधकस्यापि मेषादिकन्यकान्तकम् ॥ ७ ॥

अधोलिखेत्तुलाद्यान्तमिति राश्यादिकं शुभम् ।
ततो लिखेद्गेहदक्षे युग्मगेहे महेश्वर ॥ ८ ॥

---

१. चक्रेन्द्रं इति क०
२. विना इति क०
३. तच्चक्रं ब्रह्मणा प्रोक्तम् इति क०
   तव चक्रं ब्रह्मणा च इति ख०
४. ब्रह्मपदप्रदम् इति क०
५. अष्ट इति क०

तारकानाशिनी ताराद्यन्तान् दक्षिणतो लिखेत् ।
वर्णक्रमेण विलिखेद् वेदमन्दिरमण्डले ॥ ९ ॥

ऊर्द्ध्वाधः क्रमशो लेरुयमङ्गतारं सुरेश्वर ।
ततो हि गणयेन्मन्त्री योजयित्वा क्रमेण तु ॥ १० ॥

सुखं राज्यं धनं वृद्धिं कलहं कालदर्शनम् ।
सिद्धिमृद्धिमष्टकोणे विदित्वा च शुभाशुभम् ॥ ११ ॥

गणयेद्राशिनक्षत्रं मनुचाहं[1] विवर्जयेत् ।
सुखे सुखमवाप्नोति राज्ये राज्यमवाप्नुयात् ॥ १२ ॥

धने* धनमवाप्नोति वृद्धौ वृद्धिमवाप्नुयात् ।
मेषो वृषमिथुनश्च कर्कटः सिंह एव च ।
कन्यका देवता ज्ञेया नक्षत्राणि पुनः शृणु ॥ १३ ॥

ऊर्द्ध्वं युग्मगृहस्यापि दक्षवामे च भागके ।
नक्षत्राणि सन्ति यानि तानि शृणु महाप्रभो ॥ १४ ॥

अश्विनी मृगशिराश्लेषा हस्तानुराधिका तथा ।
उत्तराषाढिकार्द्रा वा पूर्वभाद्रपदा तथा ॥ १५ ॥

दक्षाग्रहस्तितास्ताराः[2] स्पष्टीभूताश्च देवताः ।
एतासामधिपा एते राशयो ग्रहरूपिणः ॥ १६ ॥

कर्कटकेशरी कन्यादेवताः परिकीर्तिताः ।
एतेषाञ्चापि वर्णानामधिपाश्चेति राशयः ॥ १७ ॥

---

१. मृत्युगेहं इति क०

* कलहे सर्वनाशः स्यात् मरणं कालदर्शनम् ।
सिद्धौ सिद्धिमवाप्नोति ऋद्धौ ऋद्धिं न संशयः ॥
आद्यस्वरयुगस्यापि देवता इति राशयः । इति क०

२. दक्षगेहस्थितास्तारा इति क०

ककारस्य[1] खकारस्य ञकारस्य ढकारपः ।
दकारस्य फकारस्य यकारस्य सकारपः ॥ १८ ॥
नकारस्यापि पतयो ज्ञेयाश्च क्रमशः प्रभो ।
संशृणु रोहिणीपुष्या तथा चोत्तरफल्गुनी ॥ १९ ॥
विशाखा च तथा ज्ञेया पूर्वाषाढा च तारका ।
तथा शतभिषातारा वाममन्दिरपर्वगाः ॥ २० ॥
एतासामधिपा एते राशयो ग्रहरूपिणः ।
मेषो वृषो मिथुनश्च ईश्वराः परिकीर्तिताः ॥ २१ ॥
एतद्‌गेहस्थितं वर्णमेते रक्षन्त्यनित्यशः ।
ककारस्य नकारस्य ऋकारस्य उकारपः ॥ २२ ॥
अकारस्य पकारस्य मकारस्य वकारपः ।
हकारस्याधिपा एते ऋद्धिमोक्षफलप्रदाः ॥ २३ ॥
दक्षिणाधो गृहस्यापि देवता इति राशयः ।
तुला च वृश्चिकश्चैव धनुश्चैव ग्रहेश्वरः ॥ २४ ॥
एतासां तारकाणाञ्च पतयो गदिता मया ।
भरण्यार्द्रमघाचित्राज्येष्ठा श्रवणवल्लभाः ॥ २५ ॥
तथोत्तरभाद्रपदा वल्लभाः राशयो मताः ।
अथ गेहस्थितं[2] वर्णं शृणु नाथ भयापह ॥ २६ ॥
यकारस्य[3] दकारस्य टकारस्य नकारपः ।
धकारस्य वकारस्य चकारस्य यकारपः ॥ २७ ॥

---

१. ककारस्य ङकारस्य सकारस्य डकारपः ।
अकारस्य पकारस्य मकारस्य ठकारपः ॥ इति क०

२. अधो गेहस्थितं इति क०

३. गकारस्य अकारस्य टकारस्य शकारपः ।
धकारस्य यकारस्य रकारस्य पकारपः ॥ इति क०

क्षकारपणका[1] एते राशयः परिकीर्तिताः ।
धनवृत्तिप्रदा नित्या नित्यस्थाननिवासिनः ॥ २८ ॥
वामाधोमन्दिरस्यापि वल्लभा इति राशयः ।
मकराधस्तु[2] कोष्ठेषु मीनो राशिफलस्थिताः ॥ २९ ॥
एतानि भानि रक्षन्ति शूलपाशासिधारकाः ।
पुनर्वसुः कृत्तिका च तथाभंपूर्वफल्गुनी ॥ ३० ॥
स्वाती मूला धनिष्ठा च रेवती वामगेहगाः ।
एतासामधिपा एते जलस्था ग्रहदेवताः ॥ ३१ ॥
एतान् वर्णान्[3] प्ररचन्ति गृहस्था नव राशयः ।
धकारस्य जकारस्य टकारस्य तकारपः ॥ ३२ ॥
नकारस्य भकारस्य लकारस्य तकारपः ।
कलहादिमहादोष कालदर्शनकारकाः ॥ ३३ ॥
राशयो लोकहा नाथ तन्मन्त्रं परिवर्जयेत् ।
यद्येकदेवतागेहं विभिन्नञ्च सुशोभनम् ॥ ३४ ॥
चतुःस्थानं युगस्थानं सर्वत्रापि निषेधकम् ।
एकगेहस्थितं मन्त्रं बहुसौख्यप्रदायकम् ॥ ३५ ॥
नाम्न आद्यक्षरं नीत्वा राशिनक्षत्रविस्मृतौ ।
[4]सभावं साधकश्रेष्ठः कलहे कलहं भवेत् ॥ ३६ ॥
[5]रिपुश्चेन्मूलनाशः स्यात् कलहोऽपि सुरेश्वर ।
नेत्रयुग्मं स्वरं पाति सिंहो हि कन्यकां तथा ॥ ३७ ॥

---

१. क्षकारपालका इति क०
२. मकरःकुम्भदश्चैक मीनो राशिकुलस्थिताः इति क०
३. एतान् वर्णान् प्रक्षरन्ति गृहस्थान् राशयस्त्रयः ॥ इति क०
४. गणयेत् साधक श्रेष्ठः इति क०
५. रिपुश्चेन्मृत्युलाभः स्यात् कलहेऽपि सुरेश्वर ।
कलहं कालगेहश्च वर्जयेत् प्रयतः सुधीः ॥
चक्रोद्धारञ्च कथितं फलं श्रृणु मुदा हितम् ।
दीक्षा दिवसे नाथ चक्रराजं यजन्ति ये ॥
ऐहिके धननाथः स्यात् परे याति परं पदम् ॥ इति क०

कर्णयुग्मं तुला पाति संयुगं वृश्चिको धनुः ।
चयुगं मकरः पाति कुम्भो मीनश्च पाति हि ॥ ३८ ॥
ओष्ठञ्च पाति च तथा अधरं मेष एव च ।
दन्तयुग्मं[1] वृषः पाति मिथुनः शेषगोऽक्षरः ॥ ३९ ॥
यस्य ये ये राशयः स्युस्तस्य तत्तच्छुभं स्मृतम् ।
एकराशिः शुभं नित्यं ददाति च मनोरथम् ॥ ४० ॥
अस्यालं सुखदं साधकः सिद्धिभाग् भवेत् ।
भिन्नराशौ वर्जनीयम् कलहं कालदर्शनम् ॥ ४१ ॥
श्रूयतां शैलजानाथ चक्रं श्रीत्रिदशात्मकम् ।
पूर्वपश्चिमभेदेन षट् च रेखाः समालिखेत् ॥ ४२ ॥
वामादि दक्षिणान्तश्च रेखा दश समालिखेत् ।
पञ्चगेहे पूरकाङ्कं सर्वाघोहारकङ्ककम् ॥ ४३ ॥
तन्मध्ये रचयेदक्षं देवताग्रहसंयुतम् ।
पूरकाङ्कं [2]मध्यगेहे सप्तर्षियुक्तमालिखेत् ॥ ४४ ॥
तद्दक्षिणे द्वादशञ्च तद्दक्षेण रसं तथा ।
तद्दक्षे अष्टदशकं तद्दक्षे षोडशस्मृतम् ॥ ४५ ॥
पूरकाङ्कं ततो लेख्यं इन्द्राद्यङ्काश्च दक्षतः ।
इन्द्रगेहे च शतकं विधिविद्याफलप्रदम् ॥ ४६ ॥
धर्मगेहे शून्यसप्त युगलं विलिखेद् बुधः ।
अनन्तमन्दिरे नाथ शून्याष्टवसुरेव च ॥ ४७ ॥
कालीगृहे शून्यवेदवामाद्याङ्कं विलिखेत्ततः ।
धूमावतीमन्दिरे च शून्यखेषुनिशार्पातम् ॥ ४८ ॥
इन्द्राद्या दक्षतो लेख्या अङ्काश्चन्द्राधिदेवताः ।
[3]शून्याष्टचन्द्रयुक्तश्च सवत्र देवता लिखेत् ॥ ४९ ॥

---

१. दन्तयुग्मं वृषश्चैव मिथुनमेषगौ स्वरौ ॥ इति क०
२. आद्यगेहे इति क.
३. शून्यषष्ठचन्द्रयुक्तं सर्वत्र दक्षतो लिखेत् । इति क.

तथाश्विनीकुमारौ च शून्यानलयुगायुगौ[1] ।
तत्पश्चात् पूर्वगेहश्च सहस्रार्कसमन्वितम् ॥ ५० ॥
तारिणीमन्दिरस्थांङ्कं शून्यवेदं तथैव[2] च ।
वगलामुखीगेहस्थं शून्याष्टचन्द्रसंयुतम् ॥ ५१ ॥
ततश्चन्द्रगृहस्याधो वायुर्गेहं मनोरमम् ।
रन्ध्रवेदात्मकं गेहं सर्वसिद्धिप्रदायकम् ॥ ५२ ॥
राहुगेहं महापापं शून्यशून्यमुनिप्रियम् ।
पश्चादेकत्र[3] हस्तश्च खशून्ययुगलात्मकम् ॥ ५३ ॥
षोडशीमन्दिरे शून्यमष्ट[4]चन्द्रसमन्वितम् ।
मातङ्गीमन्दिरे शून्यरुद्रचन्द्रसमन्वितम् ॥ ५४ ॥
वायोरधोवरुणस्य गृहं सप्तशशिप्रियम् ।
तरुणी गेहमध्ये च शून्याष्टकसमन्वितम् ॥ ५५ ॥
बुधगेहस्थिताङ्कश्च शून्यचन्द्रयुगात्मकम् ।
भुवनेशीमन्दिरस्थं शून्याष्टकशशिप्रियम् ॥ ५६ ॥
वरुणाधः कुबेरस्य गृहस्थं षट् च युग्मकम् ।
आनन्दभैरवी गेहे दशकं परिकीर्तितम् ॥ ५७ ॥
धरणी गृहमध्ये च शून्ययुग्मेन्दुसंयुतम् ।
भैरवी गृहमध्यस्थं शून्ययुगलचन्द्रकम् ॥ ५८ ॥
[5]शशिगृहस्थितं शून्यर्षिचन्द्रमण्डलसंयुतम् ।
कुबेराधः [6]स्वकं चक्रस्थिताङ्कं सर्वसिद्धिदम् ॥ ५९ ॥

---

१. शून्यानलयुगात्मकौ इति क.
२. शून्यवेदषडात्मकम् इति क.
३. पश्चादर्कगृहस्थश्च खशून्ययुगलात्मकम् इति क.
४. षष्ठ इति क.
५. वाणिगृहस्थितम् इति क.
६. सुखम् इति क.

ईश्वरस्य गृहस्थश्च सप्तशून्ययुगात्मकम् ।
तिरस्करिण्या गेहस्थं सहस्राङ्कसमन्वितम् ॥ ६० ॥
किङ्किणीमन्दिरं पश्चादष्टचन्द्रसमन्वितम् ।
छिन्नमस्तागृहं पश्चाच्छून्याष्टचन्द्रमण्डलम् ॥ ६१ ॥
वागीश्वरीगृहं पश्चात् सप्तमं चन्द्रमण्डलम् ।
महाफलप्रदातारं [1]धर्मो रक्षति तं पुनः ॥ ६२ ॥
ईश्वरस्य अधोगेहे वटुकस्य गृहं ततः ।
शून्याष्टमाद्यं स्वगृहं धर्मार्थकाममोक्षदम् ॥ ६३ ॥
तत्पश्चात् डाकिनीगेहं खशून्यमुनिसंयुतम् ।
हन्ति साधकसौ[2]ख्यं हि क्षणादेव न संशयः ॥ ६४ ॥
स्वगृहे स्वीयमन्त्रस्य फलदं परिकीर्तितम् ।
भीमादेवीगृहं पश्चात् खसप्तचन्द्रमण्डलम् ॥ ६५ ॥
भयदं सर्वदेशे तु वर्जयेत गृहान्तरम् ।
लक्षवर्णं लिखेत् शेषगृहे द्वे पण्डितोत्तमः ॥ ६६ ॥
इन्द्रगेहावधिं धीरो [3]वकारादिकवर्णकम् ।
क्षकारान्तं लिखेत्तत्र गणयेत् साधकस्ततः ॥ ६७ ॥
पूरकाङ्कमूर्द्ध्वदेशे हारकाङ्कमधो लिखेत् ।
निजनामाक्षरं यत्र तत्कोष्ठाङ्कं महेश्वर ॥ ६८ ॥
नीत्वा च पूजयेद्विद्वान् स्वस्वगेहोर्ध्वदेशगैः ।
[4]अङ्कैस्ततो हरेर्नाथ अधोऽङ्के हार्यशेषकम् ॥ ६९ ॥
विस्तारञ्चेद्देवताङ्गस्तदङ्गः शुभदः स्मृतः ।
अल्पाङ्गः शुभदः प्रोक्तः साधकस्य सुखावहः ॥ ७० ॥

---

१. धर्मः क्षरति तस्य च इति क०
२. मुख्यम् इति क०
३. ककारादि इति क० ।
४. आज्ञास्ततो हरेर्नाथ अधोर्द्धेऽङ्के द्वाष्टशोधकम् इति का० ।

एकाक्षरे महासौख्यं तत्रापि गणयेद् [1]वचः ।
धीराङ्कः शून्यगामी च देवताङ्कस्तथा विभो ॥ ७१ ॥
तदा नैव शुभं विद्यादशुभाय प्रकल्प्यते ।
एकै धनमवाप्नोति द्वितीये राजवल्लभः ॥ ७२ ॥
तृतीये जाप्यसिद्धिः स्याच्चतुर्थे मरणं ध्रुवम् ।
पञ्चमे पञ्चमानः स्यात् षष्ठे दुःखोत्कटानि च ॥ ७३ ॥
शैवानां शाक्त[2]वर्णानामित्यङ्कः परिगृह्यते ।
वैष्णवानां निषेधे[3] च पञ्चमाङ्को निषेधकः ॥ ७४ ॥
यासां यासां देवतानां हिंसा तिष्ठति चेतसि ।
तन्मन्त्रग्रहणादेवाष्टैश्वर्य[4]युतो भवेत् ॥ ७५ ॥
यद्देवस्याश्रिता ये तु तद्गृहाङ्कं हरन्ति ते ।
ऊर्द्ध्वाङ्केन पूरयित्वा अधोऽङ्केन हरेत्सदा ॥ ७६ ॥
ऋणिधनिमहाचक्रं वक्ष्यामि शृणु तत्त्वतः ।
दर्शनादेव कोष्ठस्य जानाति पूर्वजन्मगम् ॥ ७७ ॥
देवं बहुतराङ्गेषु ज्ञात्वा सिद्धीश्वरो भवेत् ।
निजसेव्यां महाविद्यां गृहीत्वा मुक्तिमाप्नुयात् ॥ ७८ ॥
कोष्ठशुद्धश्च मन्त्रश्च ये गृह्णन्ति द्विजोत्तमाः ।
तेषां दुःखानि नश्यन्ति ममाज्ञा बलवत्तरा ॥ ७९ ॥
कोष्ठशुद्धं महामन्त्रं फलदं रुद्रभैरव ।
न हातव्यं महामन्त्रं सद्गुरुप्रियदर्शनात् ॥ ८० ॥
तत्र कोष्ठं न विचार्यं चेज्जानाति विचार्यकम् ।
महाविद्या महामन्त्रे विचार्यकोटिपुण्यभाक् ॥ ८१ ॥

---

१. न च इति क० ।
२. शाक्तवर्गाणाम् इति क० ।
३. निषेध्याङ्कः इति क० ।
४. तुच्छतो भवेत् इति ग० ।

अविचारे चोक्तफलं ददाति कामसुन्दरी ।
कोष्ठान्येकादशान्येव देवेन[1]पूरितानि च ॥ ८२ ॥
अकारादि हकारान्तं लिखेत् कोष्ठेषु तत्त्ववित् ।
प्रथमं पञ्चकोष्ठेषु ह्रस्वदीर्घक्रमेण तु ॥ ८३ ॥
द्वयं द्वयं लिखेत्तत्र विचारे खलु साधकः ।
शेषेष्वेकैकशो वर्णान् क्रमतस्तु लिखेत्सुधीः ॥ ८४ ॥
[2]अमावर्णद्वयस्याद्वविधिस्तु क्रमशोऽङ्ककम् ।
आद्यमन्दिरमध्ये तु षष्ठाङ्कं विलिखेद्बुधः ॥ ८५ ॥
द्वितीये षष्ठचिह्नञ्च तृतीये च गृहे तथा ।
चतुर्थे गगनाङ्कञ्च पञ्चमे चक्रत्रयं तथा ॥ ८६ ॥
षष्ठचापे[3] चतुर्थञ्च सप्तमे च चतुर्थकम् ।
अष्टमे गगनाङ्कञ्च नवमे दशमं तथा ॥ ८७ ॥
शेषमन्दिरमध्ये तु त्रयाङ्कं विलिखेत्ततः ।
एते नाथ साध्यवर्णाः कथिताः क्रमशो ध्रुवम् ॥ ८८ ॥
कथयामि साधकार्णं सकलार्थनिरूपणम् ।
आद्यगेहे द्वितीयञ्च द्वितीये च तृतीयकम् ॥ ८९ ॥
तृतीये पञ्चमं प्रोक्तं गगनं वेदपञ्चके ।
षष्ठे युगलमेवंहि सप्तमे [4]चन्द्रमण्डलम् ॥ ९० ॥
अष्टमे गगनं प्रोक्तं नवमे च चतुर्थकम् ।
वेदञ्च दशमे प्रोक्तं चन्द्रमेकादशे तथा ॥ ९१ ॥
साधकार्णाःस्मृताः त्वेते वर्णमण्डलमध्यगाः ।
साध्यवर्णान् महादेव स्वरव्यञ्जनभेदकान् ॥ ९२ ॥

---

१. वेदेन इति ग० ।
२ अ आवर्णद्वयस्य इति क० ।
३. षष्ठगेहे इति क० ।
४. चक्रमण्डलम् इति क० ।

एवं हि सर्वमन्त्राणांनभष्टाद्यङ्कैः[1] प्रपूरयेत् ।
एकीकृत्य हरेदष्टसंख्याभिः[2] क्षणवल्लभे ॥ ९३ ॥
[3]यस्यापहस्थितं वर्णं तन्नेभव्यं मनौ शुभे ।
साधकाभिधानवर्णान् स्वरव्यञ्जनभेदकान् ॥ ९४ ॥
पृथक् पृथक् संस्थितांश्च व्यक्तं शृणु पुनः पुनः ।
द्वितीयाद्यङ्कचन्द्रान्ते संपूर्वाष्टभिराहरेत्[4] ॥ ९५ ॥
मन्त्रो यस्त्वधिकाङ्कः स्यात्तदा मन्त्रं जपेत् सुधीः ।
समेऽपि च जपेन्मन्त्रं न जपेत्तु ऋणाधिके ॥ ९६ ॥
शून्ये मृत्युं विजानीयात्तस्माच्छून्यं विवर्जयेत् ।
द्वितीयाद्यङ्कजालञ्च वैष्णवे सुखदं स्मृतम् ॥ ९७ ॥
द्वितीयाद्यङ्कजालश्च वैष्णवे सुखदं स्मृतम् ।
द्वितीयाद्यङ्कजालश्च तथा वै परिकीर्तितम् ॥ ९८ ॥
इन्द्राद्यङ्कं तथा नाथ सौरे[5] शाक्ते शुभप्रदम् ।
तथा दिक्संख्यकाङ्कश्च साधकस्य शुभप्रदम् ॥ ९९ ॥
तदङ्कं शृणु यत्नेन पूर्ववत् सकलं स्मृतम् ।
[6]स्थलश्चैव विभिन्नाङ्कमूर्द्ध्वाधश्च क्रमेण तु ॥ १०० ॥
साध्याङ्कान् साधकाङ्कांश्च पूरयेद् गृहसंख्यया ।
गुणिते तु हृते चापि यच्छेषं जायते स्फुटम् ॥ १०१ ॥
तदङ्कं कथयाम्यत्र एकादशगृहे स्थितम् ।
इन्द्रतारास्वर्गरवितिथिषड्वेददाहनाः ॥ १०२ ॥

---

१. अष्टाद्यङ्कैः इति ख ग.

२. कुलवल्लभ इति क.

३. यद्यत् गेहस्थितं वर्णं तन्त्रे तस्य मनौ शुभे । क. साधकस्याभिधान—क.

४. सम्पूर्वास्वभिवाहरेत् इति ख ग.

५ शैवे इति क.

६. स्थानञ्चैकं इति क.

अष्टवसु नवाङ्कस्थाः साध्यार्णगुणिता इति ।
दिग्भूगिरिश्रुतिगजवह्निपर्वतपञ्चमाः ॥ १०३ ॥
वेदषष्ठानलाङ्कञ्च गणयेत् साधकाक्षरान् ।
नामाद्यक्षरमारभ्य यावन्मन्त्राक्षरं भवेत् ॥ १०४ ॥
तत्संख्याञ्च त्रिधाकृत्वा सप्तभिः संहरेद् बुधः ।
अधिकंच ऋणं प्रोक्तं तच्छेषं धनमुच्यते ॥ १०५ ॥
अथवान्यप्रकारञ्च कृत्वा मन्त्रं समाश्रयेत् ।
नामाद्यक्षरमारभ्य यावत् साधकवर्णकम् ॥ १०६ ॥
तावत्संख्यां सप्तगुणं कृत्वा वार्मेर्हरेद् बुधः ।
श्रीविद्येतरविद्यायां गणना परिकीर्तिता ॥ १०७ ॥
अथवान्यप्रकारञ्च सकलान् साधकाक्षरान् ।
स्वरव्यञ्जनभेदेन द्विगुणीकृत्यसाधकः ॥ १०८ ॥
साध्ययुक्तं ततः कृत्वा स्वरव्यञ्जनभेदकम् ।
अष्टाभिः संहरेदङ्कं शृणु संहारविग्रहम् ॥ १०९ ॥
पूर्वचारक्रमं सम्यक् सर्वत्रापि शुभाशुभम् ।
अस्य विचारमात्रेण सिद्धिः सर्वार्थसाधिका ॥ ११० ॥
पूर्वजन्माराधितायां तां प्राप्नोति हि देवताम् ।
अथान्यत् सम्प्रवक्ष्यामि सावधानावधारय ॥ १११ ॥
उल्काचक्रं सर्वसारं मन्त्रदोषादिनिर्णयम् ।
मत्स्याकारमूर्ध्वमुखं सर्वमन्त्रादिविग्रहम् ॥ ११२ ॥
स्कन्धदेशावधिर्नाथ पुच्छपर्यन्तमेव च ।
एकाक्षरादिमन्त्रादिद्वादशान्ताक्षरात्मकम् ॥ ११३ ॥
विलिखेत् पृष्ठदेशे तु शुभाशुभविशुद्धये ।
त्रयोदशाक्षरान् वाथ एकविंशाक्षरान्तकम् ॥ ११४ ॥
नेतव्यं साधकैर्मन्त्रं पृष्ठस्थमुदरस्थकम् ।
तथा श्रीशुभदं प्रोक्तं कण्ठादिपुच्छकान्तकम् ॥ ११५ ॥

द्वाविंशादि चतुस्त्रिंशदक्षरान्तमन्तुं शुभम् ।
पुच्छस्थं नापि गृह्णीयात् मुखस्थञ्च तथा ध्रुवम् ॥ ११६ ॥
शीर्षस्थञ्चापि गृह्णीयात् तदक्षरं शृणु प्रभो ।
[1]पञ्चत्रिंशादि द्विचतुर्विंशदन्तमेव च ॥ ११७ ॥
मस्तकस्थं शुभं प्रोक्तं मुखवर्णान् शृणु प्रभो ।
त्रिचत्वारिंशदर्णादि एकपञ्चाशदन्तकम् ॥ ११८ ॥
मुखस्थमन्तमशुभं न गृह्णीयात् कदाचन ।
पृष्ठस्थं शृणु यत्नेन निरर्थकमहाश्रमम् ॥ ११९ ॥
श्रमगात्रस्य पीडाभिर्देवता कुप्यतेऽनिशम् ।
द्विपञ्चाशदक्षरादि एकषष्टितमान्तकान् ॥ १२० ॥
वर्णान् पुच्छस्थितानेतान् नेत्रस्थान् शृणु वल्लभ ।
द्विषष्टितमवर्णादि[2] चतुःषष्टयक्षरान्तकान् ॥ १२१ ॥
अङ्कं लोचनसंस्थं च[3] ततोऽन्यं रसनास्थितम् ।
तत्सर्वं शुभदं प्रोक्तमेतदन्यतमं स्मृतम् ॥ १२२ ॥
वैष्णवानाञ्च शैवानां शाक्तानां मन्त्रजापने ।
ततोऽन्यदेवभक्तानां भुक्तिमुक्तिप्रदं नृणाम् ॥ १२३ ॥
अथ वक्ष्ये महादेव चक्रसारं सुदुर्लभम् ।
रामचक्रं महाविद्या सर्वमन्दिरमेव च ॥ १२४ ॥
सर्वसिद्धिप्रदं मन्त्रं निजनामस्थमाश्रयेत् ।
तदैव सिद्धिमाप्नोति सत्यं सत्यं महेश्वर ॥ १२५ ॥
तत्प्रकारं शृणु क्रोधभैरव प्रियवल्लभ ।
नवाङ्कान् प्रलिखेद् विद्वान् वामदक्षिणभागतः ॥ १२६ ॥

---

१. पञ्चत्रिंशादिद्विचत्वारिंशदर्णान्तमेव च ।
२. द्विपष्टितमवर्णादि इति क० ।
३. लोचनमन्त्रञ्च—इति क० ।

तन्मध्ये क्रमशो दद्यात्तथा सप्तदशाङ्ककान् ।
दक्षिणदिक्क्रमेणैव मुक्तविद्याः समालिखेत् ॥ १२७ ॥
अकारादिक्षकारान्तं सर्वस्मिन् मन्दिरे लिखेत् ।
*वालादिदेवताः सर्वा आमर्यन्ताश्च देवताः ॥ १२८ ॥
अस्याकाशविधे[1] गेहे सान्तनित्यं फलप्रदम् ।
पुनर्विलोममार्गेण आदिक्षान्तार्णमन्दिरे ॥ १२९ ॥
रक्तदन्तादि श्रीविद्या मन्त्रान्तं विलिखेद् बुधः ।
क्षकाराद्यनुलोमेन ह्यकारान्तं लिखेत्ततः ॥ १३० ॥
पुनस्तच्छेषविद्याश्च शेषगेहे लिखेत् सदा ।
कायशोधनमुख्यादि[2] शैलवासिनि मन्त्रकम् ॥ १३१ ॥
पञ्चविंशतिगेहस्थं गणयेत् साधकस्ततः ।
गृहस्थमङ्कं वक्ष्यामि शृणु योगीशवल्लभ ॥ १३२ ॥
वालागृहादिशेषान्तं मुनिहस्तविधौ गृहे ।
क्रमेण शृणु तत्सर्वं सावधानावधारय ॥ १३३ ॥
दक्षिणावर्तयोगेन गणयेत् क्रमशो बुधः ।
वसुसप्तपञ्चमेषु वह्निवेदानलस्तथा ॥ १३४ ॥
मुनिषष्ठाद्यवेदाश्च* सप्तेषुमुनयस्तथा ।
पञ्चवेदेषुवसवो वेदेषु वह्नयस्तथा ॥ १३५ ॥
वह्निवेदाश्च सम्प्रोक्ता आकाशं तदनन्तरम् ।
आकाशानन्तरे गेहे अनलं परिकीर्तितम् ॥ १३६ ॥

---

* इति क० पु नास्ति—वालादिदेवताः इति श्लोकः

1. युग्माकाशविधौ गेहे सन्ति नित्यं फलप्रदाः इति क. ।

2. कायशोधनमोक्षादि इति क.

* पञ्चर्षिः वसुवालाश्च वेदपञ्चमषष्ठकाः ।
वह्न्यग्निवन्धुवसवः सप्ताष्टनवमास्तथा ॥
पञ्चवेदानङ्काश्च वेदवेदानलस्तथा ।

इति क. प्र. अधिकः पाठः

तत्पश्चात् सर्वगेहेषु सर्वाङ्कं दक्षतः शृणु ।
वह्निर्वह्निवेदवह्नि वेदवह्नय एव च ॥ १३७ ॥
श्रवणाक्षिवेदवाण[1] वेदेषु सुपकास्तथा ।
षष्ठाष्टसप्तमाः प्रोक्ता वह्न्यग्नीषुमुनिस्तथा ॥ १३८ ॥
मुनीषुवाणवेदाश्च मुन्यग्निवह्नयस्तथा ।
वह्निवेदवाणसप्त अष्टाङ्कवेदवाणकाः ॥ १३९ ॥
पञ्चसप्तानलाग्निश्च वह्नीषुवाणवाणकाः ।
वाणवेदकान्तवेदकान्तश्रुतिचतुर्थकाः ॥ १४० ॥
रामर्षिमुनिषष्ठाश्च सप्तेषुरामवेदकाः ।
वेदसप्ताष्टवसवो नवमाष्टमसप्तमाः ॥१४१॥
वह्न्यग्निवेदवाणाश्च वस्वष्टानलवेदकाः ।
सप्ताष्टमाश्च सम्प्रोक्ता गृहाङ्काः परिकीर्तिताः ॥१४२॥
येषां मनसि या विद्या सदा तिष्ठति भावने ।
तामाश्रित्य जपेद् विद्वान् तदा सिध्यति निश्चितम्॥१४३॥
स्वनाम देवतानाम पूरयेत् षोडशाङ्ककैः ।
हरेन्निजगृहस्थेन चाङ्केन साधकोत्तमः ॥१४४॥
कृतशेषं बहुतरं शुभं देवस्य निश्चितम् ।
अल्पाङ्कसाधकस्यापि सौख्यमेव न संशयः ॥१४५॥
उक्तक्रमेण गणयेत् साधकः स्थिरमानसः ।
महाविद्यानायिकादियज्ञभूतादिसाधने ॥१४६॥
सम्प्रोक्तं चक्रसारञ्च सर्वतन्त्रेषु गोपितम् ।
ततश्चक्रविचारेण सिद्धिमाप्नोति साधकः ॥१४७॥
चतुश्चक्रं प्रवक्ष्यामि शृणुष्व पार्वतीपते ।
वामदक्षिणयोगेन रेखापञ्चकमालिखेत् ॥१४८॥

---

१. श्रुत्यग्निवेदवाणाश्च इति क.

पूर्वपश्चिमभेदेन रेखाः पञ्च समालिखेत् ।
चतुष्कोष्ठे दक्षभागे चतुष्कोष्ठे च मन्त्रवित् ॥१४६॥
तदधश्चचतुष्कोष्ठे तद्वामस्थे चतुर्गृहे ।
प्रलिखेत् क्रमशश्चाद्ये चतुर्मन्दिरमध्यके ॥१५०॥
शीघ्रञ्च शीतलं जप्तं सिद्धञ्चापि ततः परम् ।
अकारञ्च उकारञ्च लसोकारं ततः परम् ॥१५१॥
ऊर्द्ध्वस्थमितिवर्णन्तु शीतलस्थं शृणु प्रभो ।
अकारञ्च उकारञ्च ऌ ॡ सौकारञ्च ततः परम् ॥१५२॥
तदधो जपगेहस्थं वर्णं शृणु महाप्रभो ।
इकारञ्च ऋकारञ्च एकारञ्च ततः परम् ॥ १५३ ॥
सिद्धगेहस्थितं वर्णं शृणु सर्वसुखप्रदम् ।
तद्दक्षिणचतुर्गेहे स्थितान् वर्णान् वदामि तान् ॥ १५४ ॥
आह्लादश्चाप्रत्ययश्च [1]सुखञ्च शुद्धमित्यपि ।
एतत्कुलस्थान् सर्वार्णान् शुभाशुभफलप्रदान् ॥ १५५ ॥
ककारञ्च ऋकारञ्च[2] ऋकारञ्च ञकारकम् ।
आह्लादस्थमिति प्रोक्तं प्राप्तिमात्रेण सिद्धिदम् ॥ १५६ ॥
प्रत्ययस्थं गकारञ्च घकारं टठमित्यपि ।
मुखस्थं हि ङकारञ्च चकारं डढमित्यपि ॥ १५७ ॥
शुद्धस्थञ्च उकारञ्च जकारं णतमित्यपि ।
तदधःस्थं चतुर्गेहं लौकिकं सात्विकं तथा ॥ १५८ ॥
मानसिकं राजसिकं चतुर्गहस्थितं त्त्विमम् ।
लौकिकस्थं थकारञ्च दकारञ्च मकारकम् ॥ १५९ ॥
सात्त्विकस्थं धकारञ्च लकारञ्च यकारकम् ।
मानसिकञ्च शृणु भो पकारञ्च फमित्यपि ॥ १६० ॥

---

१. आह्लादश्चावि प्रत्यायं सुखञ्च शुद्धमित्यपि ॥ इति क.

२. रवकारञ्च इति क.

श्रृणु राजसिकत्त्वञ्च भकारं वनमित्यपि ।
तन्नामस्थं चतुर्गेहं श्रृणु पञ्चानन प्रभो ॥ १६१ ॥
सुप्तं क्षिप्तञ्च लिप्तञ्च दुष्टमन्त्रं प्रकीर्तितम् ।
ऊर्द्ध्वगेहस्थितान् वर्णमन्त्रान् गृह्णाति यो नरः ॥ १६२ ॥
वर्जयित्वा सुप्तमन्त्रं क्षिप्तं लिप्तञ्च दुष्टकम् ।
ऐहिके सिद्धिमाप्नोति परे मुक्तिमवाप्नुयात् ॥ १६३ ॥
यद्यभाग्यवशात्सुप्तादिषु गेहेषु लभ्यते ।
तदा मन्त्रं शोधयेद् वै सुप्तस्तम्भितकीलितैः ॥ १६४ ॥
वर्द्धितैर्दोषजालस्थैरशुभं भूतशुद्धये ।
भूतलिप्या पुटीकृत्य जप्त्वासिद्धिं ततो लभेत् ॥ १६५ ॥
न तु वा वर्जयेद् गेहं चतुष्कं वर्णवेष्टितम् ।
सुप्तगेहस्थितं वर्णं श्रृणु पञ्चानन प्रभो ॥ १६६ ॥
वकारञ्च हकारञ्च ततोऽन्यद्गृहसंस्थितम् ।
शकारञ्च लकारञ्च क्षिप्तगेहस्थितद्वयम् ॥ १६७ ॥
घकारञ्च क्षकारञ्च लिप्तगेहस्थितं द्वयम् ।
दुष्टगेहस्थितं नाथ शकारगगनं तथा ॥ १६८ ॥
निजं सौभाग्ययुक्तं यत्तन्मन्त्रं तदुपाश्रयेत् ।
सूक्ष्मचक्रं प्रवक्ष्यामि हिताहितफलप्रदम् ॥ १६९ ॥
एतदुक्ताक्षरं शम्भो गृहीत्वा जपमाचरेत् ।
वामदक्षिणमारभ्य सप्तरेखाः समालिखेत् ॥ १७० ॥
भित्वा तदङ्कान् मन्त्री च रेखा चतुष्टयं लिखेत् ।
दक्षिणादिक्रमेणैव बद्धमन्दिरमध्यके ॥ १७१ ॥
मन्त्राक्षराणि विलिखेदङ्काचारेण साधकः ।
तदङ्कं श्रृणु यत्नेन नराणां भुक्तिमुक्तिदम् ॥ १७२ ॥
प्रथमे मन्दिरे नाथ भुजाङ्कं विलिखेत्ततः ।
विष्णुमन्त्रादिगेहे च वेदाङ्कं विलिखेद् बुधः ॥ १७३ ॥

तत्पश्चादष्टमाङ्कं च भुजाधः षष्ठमेव च ।
तद्गेहं शङ्करस्यापि तत्पश्चाद्दशमं गृहे ॥ १७४ ॥
तत्पश्चाद्द्वादशाङ्कञ्च नायिकास्थानमेव च ।
षष्ठाधोयुगलाङ्कञ्च तत्पश्चादष्टमन्तथा ॥ १७५ ॥
तद्गृहं शम्भुना न्यस्तं तत्पश्चादष्टमं तथा ।
युगलाधोगृहे चापि चतुर्दशाक्षरन्तथा ॥ १७६ ॥
तद्दक्षिणे सूर्यगेहं चतुर्दशाक्षरान्वितम् ।
तत्पश्चात्षोडशाङ्कञ्च पुनरङ्कं लिखेत्ततः ॥ १७७ ॥
तद्दक्षिणे वेदवर्णं तत्पश्चादष्टमाक्षरम् ।
ब्रह्ममन्दिरमेवन्तत् षोडशाधः पुनः शृणु ॥ १७८ ॥
अष्टमाङ्कं ततो युग्ममष्टादशाक्षरं ततः ।
प्रथमस्थं द्वितीयस्थं गृह्णीयाद् शुभदं स्मृतम् ॥ १७९ ॥
तृतीयस्थं महापापं सर्वमन्त्रेषु कीर्तितम् ।
द्वितीयं प्रथमं दुःखं तृतीयं सर्वभाग्यदम् ॥ १८० ॥
तृतीयञ्च तथा नाथ गृह्णीयान्निजसिद्धये ।
तृतीये प्रथमं भद्रं द्वितीयं दुःखदायकम् ॥ १८१ ॥
तृतीयञ्च तथा प्रोक्तमष्टाक्षरगृहं भयम् ।
चतुर्दशाक्षरं भद्रं सूर्यमन्त्रं द्वितीयकम् ॥ १८२ ॥
तृतीयस्थं षोडशाङ्के महाकल्याणदायकम् ।
[1]अष्टमूर्तिः षोडशाङ्के चतुर्थे शत्रुमारणम् ॥ १८३ ॥
तृतीयगृहमध्यस्थं ब्रह्मकल्याणदायकम् ।
वस्वक्षरं सर्वशेषगृहमध्यस्थमेव च ॥ १८४ ॥
अष्टमञ्च महाभद्रं [2]क्षमं चित्तभयप्रदम् ।
अष्टादशाङ्कं शुभदं शेषगेहत्रये तथा ॥ १८५ ॥

---

१. अधोमुक्तिम् इति क०

२. युग्मम् इति क०

येषां यदक्षराणाञ्च मन्त्रं चेतसि वर्तते ।
एतत् शुभाशुभं ज्ञात्वा मन्त्रवर्णं[3] तदाभ्यसेत् ॥ १८६ ॥
[4]विष्णुमन्त्रस्थितं मन्त्रं नायिकास्थं शिवस्थकम् ।
सूर्यस्थं ब्रह्मसंस्थञ्च गृह्णीयात् शाक्त एव च ॥ १८७ ॥
वैष्णवो विष्णुमन्त्रार्थं शैवः शिवमुपाश्रयेत् ।
नायिकामन्त्रजापी च नायिकार्णं सदाभ्यसेत् ॥ १८८ ॥
सूर्यमन्त्रविचारार्थी सूर्यमन्त्रं समाश्रयेत् ।
एकस्थं युगलस्थानं तृतीयस्थानमेव च ॥ १८९ ॥
[5]ज्ञात्वा मन्त्रं प्रगृह्णीयात् अन्यथा चाशुभं भवेत् ।
एतदन्यतमं मन्त्रं दिव्यवीरेषु गीयते ॥ १९० ॥
ततश्चक्रं पशोरुक्तं सर्वसिद्धिप्रदं ध्रुवम् ।
एतच्चक्रप्रभावेण पशुर्वीरोपमः स्मृतः ॥ १९१ ॥
सर्वसिद्धियुतो भूत्वा वत्सरात्तां प्रपश्यति ॥ १९२ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महामन्त्रोद्दीपने सर्वचक्रानुष्ठाने
सिद्धमन्त्रप्रकरणे भावनिर्णये भैरवीभैरवसंवादे
चतुर्थः पटलः ॥



---

३. मन्त्रमार्गं इति क०
४. विष्णुशब्दस्थितं इति क०
५. कृत्वा इति क०

## पञ्चमः पटलः

महाकथहचक्रार्थं सर्वचक्रोत्तमोत्तमम् ।
यस्य विचारमात्रेण कामरूपी भवेन्नरः ॥ १ ॥
ततः प्रकारं वीराणां नाथः त्वं क्रमशः शृणु ।
चतुरस्रे लिखेत् वर्णांश्चतुःकोष्ठसमन्विते ॥ २ ॥
चतुःकोष्ठे चतुः कोष्ठे चतुश्चतुर्गृहान्वितम् ।
मन्दिरं षोडशं प्रोक्तं सर्वकामार्थसिद्धिदम् ॥ ३ ॥
चतुरस्रं लिखेत् कोष्ठं चतुःकोष्ठसमन्वितम् ।
पुनश्चतुष्कं तत्रापि लिखेद्धीमान् क्रमेण तु ॥ ४ ॥
सर्वेषु गृहमध्येषु प्रादक्षिण्यक्रमेण तु ।
अकारादि क्षकारान्तं लिखित्वा गणयेत्ततः ॥ ५ ॥
चन्द्रमग्निं रुद्रवर्णं नवमं युगलं तथा ।
वेदमर्कं दशरसं वसुं षोडशमेव च ॥ ६ ॥
चतुर्दशं भौतिकञ्च सप्तपञ्चदशेति च ।
वह्नीन्दुकोष्ठगं वर्णं सङ्केताङ्कैः मयोदितम् ॥ ७ ॥
एतदङ्कास्थितं वर्णं गणयेत्तदनन्तरम् ।
नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम् ॥ ८ ॥
चतुर्भिः कोष्ठैरेकैकमिति कोष्ठचतुष्टयम् ।
पुनः कोष्ठगकोष्ठेषु सत्यतो नाम्न आदितः ॥ ९ ॥
सिद्धः साध्यः सुसिद्धोऽरिः क्रमशो गणयेत्सुधीः ।
सिद्धः सिद्ध्यति कालेन साध्यस्तु जपहोमतः ॥ १० ॥
सुसिद्धोऽग्रहणाज्ज्ञानी शत्रुर्हन्ति स्वमायुषम् ।
सिद्धार्णो बान्धवः प्रोक्तः साध्यः सेवक उच्यते ॥ ११ ॥
सिद्धकोष्ठस्थिता वर्णा बान्धवाः सर्वकामदाः ।
जपेन बहुसिद्धिः स्यात् सेवकोऽधिकसेवया ॥ १२ ॥

पुष्णाति पोषकोऽभीष्टो घातको नाशयेद्ध्रुवम् ।
सिद्धः सिद्धो यथोक्तेन द्विगुणः सिद्धसाधकः ॥ १३ ॥
सिद्धः सुसिद्धोदूर्ध्वजपात् सिद्धारिर्हन्तिबान्धवान् ।
साध्यःसिद्धो द्विगुणकः साध्ये साध्यो निरर्थकः ॥ १४ ॥
तत्सुसिद्धो द्विगुणजपात् साध्यारिर्हन्ति गोत्रजान् ।
सुसिद्धसिद्धोदूर्ध्वंजपात्तत्साध्योद्विगुणाधिकात् ॥ १५ ॥
तत्सुसिद्धो ग्रहादेव सुसिद्धारिः स्वगोत्रहा ।
अरिः सिद्धः सुतान् हन्यादरिसाध्यस्तुकन्यकाः ॥ १६ ॥
तत्सुसिद्धिस्तु पत्नीघ्नस्तदरिर्हन्ति गोलजान्[1] ।
यदि वैरिमनोर्हस्तस्थितः स्यात् साधको भुवि ॥ १७ ॥
तदन्ते रक्षणार्थं हि कुर्यादेवं क्रियादिकम् ।
तत्प्रकारं महावीर शृणुष्व गिरिजापते ॥ १८ ॥
वटपत्रे लिखित्वारिमन्त्रं स्रोतसि निक्षिपेत् ।
एवं मन्त्रविमुक्तः स्यान्ममाज्ञावशहेतुना ॥ १९ ॥
पुनः प्रकारं विप्रस्तु गवां क्षीरे मुदान्वितः ।
द्रोणमिते जपेन्मन्त्रमष्टोत्तरसमन्वितम् ॥ २० ॥
पीत्वा क्षीरं मनोमध्ये ध्यात्वा मन्त्रं समुच्चरन् ।
सन्त्यजन्नीरमध्ये तु वैरिमन्त्रप्रमुक्तये ॥ २१ ॥
पुनः प्रकारं वक्ष्यामि त्रिरात्रमेकवासरम् ।
उपोष्य विधिनानेन पूजां कृत्वा शनौ कुजे ॥ २२ ॥
सहस्रं वा शतंवापि अष्टोत्तरसमन्वितम् ।
जपित्वा सन्त्यजेन्मन्त्रं क्षीरसागरमण्डले ॥ २३ ॥
अथवा तद्गुरोः स्थाने चान्यस्थाने च वा पुनः ।
विचार्य मन्त्रवर्णश्च गृहीत्वा मोक्षमाप्नुयात् ॥ २४ ॥

---

१. साधकम् इति क०

स्वप्ने यदि महामन्त्रम् प्राप्नोति साधकोत्तमः ।
तदासिद्धिमवाप्नोति सत्यं सत्यं कुलेश्वर ॥ २५ ॥
तन्मन्त्रं कौलिके नाथ गुरो यत्नेन संग्रही ।
यदा भवति सिद्धिः स्यात्तत्क्षणान्नात्र संशयः ॥ २६ ॥
अरिंवा देवदेवेश यदि विग्राहयेन्मनुम् ।
अन्यमन्त्रं विचार्यैव विष्णोश्चैव शिवस्य च ॥ २७ ॥
शक्तिमन्त्रं यदि रिपुं तदा एवंप्रकारकम् ।
आदावन्ते च मध्ये च ऊँवौषट् स्वाहयान्वितम् ॥ २८ ॥
कृत्वा जप्त्वा महासिद्धिं कामरूपस्थितामिव ।
प्राप्नोति नात्र सन्देहो ममाज्ञा वरवर्णिनि ॥ २९ ॥
शृणु चक्रफलं नाथ विचाराचारमङ्गलम् ।
प्रासादश्च महामन्त्रं सद्गुरोर्मुखपङ्कजात् ॥ ३० ॥
लभ्यते यदि भाग्येन सिद्धिरेव न संशयः ।
तदभावे सिद्धिमन्त्रं दृष्टादृष्टफलोन्मुखम् ॥ ३१ ॥
महाचमत्कारकरं हृदयोल्लासवर्द्धनम् ।
स्वप्ने वा सद्गुरोः स्थाने प्राप्तिमात्रेण मुक्तिदम् ॥ ३२ ॥
तन्मन्त्रं वर्जयित्वा च घोरान्धकाररौरवे ।
वसन्ति सर्वकालं च ममाज्ञावशभागिनी ॥ ३३ ॥
तत्रैव चक्रसारादि विचारं व्यर्थभाषणम् ।
अरिमन्त्रं महापुण्यं सर्वमन्त्रोत्तमोत्तमम् ॥ ३४ ॥
कोटिजन्मार्जितैः पुण्यैर्महाविद्याश्रयी भवेत् ।
स्वप्ने कोटिकुलोत्पन्नैः पुण्यकोटिफलैरपि ॥ ३५ ॥
प्राप्नोति साधको मन्त्रं भुक्तये मुक्तये ध्रुवम् ।
ततश्चक्रं न विचार्यं विचार्य मरणं भवेत् ॥ ३६ ॥

---

१. मन्त्रम् इति ग

किन्तु चक्रविचारश्च यदि स्वप्ने चमत्कृतम् ।
एतेषां चक्रवर्णानां विचारादष्टसिद्धिदम् ॥ ३७ ॥
वायुं मुक्तिं धनं योगसिद्धिमृद्धिं धनं शुभम् ।
धर्मदेहपवित्रश्च अकाले मृत्युनाशनम् ॥ ३८ ॥
वाञ्छाफलप्रदं गौरीचरणाम्भोजदर्शनम् ।
भुक्तिं मुक्तिं हरस्थानं प्राप्नोति नात्र संशयः ॥ ३९ ॥
एषां चक्रादिकालश्च क्रमशो गणितं फलम् ।
यदि सर्वविचारश्च करोति साधकोत्तमः ॥ ४० ॥
तदा सर्वफलं नित्यं प्राप्नोति नात्र संशयः ।
महाव्रतं विवेकश्च विचाराल्लभते ध्रुवम् ॥ ४१ ॥
अकस्मात् सिद्धिमाप्नोति चक्रराजं विचारतः ।
सर्वे देवाः प्रशंसन्ति चक्रमन्त्राश्रितं जलम् ॥ ४२ ॥
वाक्यसिद्धिर्भवेत् क्षिप्रं प्राणायामादिसिद्धिभाक् ।
सर्वेषां प्रणमेद्भूमौ विचरेत् साधकोवली ॥ ४३ ॥
इति ते कथितं नाथ चक्रं षोडशमङ्गलम् ।
चक्राणां लोकनादेव सायुज्यपदमाप्नुयात् ॥ ४४ ॥
अतो विचारं सर्वत्र सर्वचक्रादिमङ्गलम् ॥ ४५ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने
सर्वक्रानुष्ठाने सिद्धमन्त्रप्रकरणे
पञ्चमः पटलः ॥



१. महाप्रभावमेकञ्च इति ग०

## षष्ठः पटलः

अथ भावं वद श्रीदे दिव्यवीरपशुक्रमात् ।
पशूनां परमाश्चर्यभावं श्रोतुं समुत्सुकः ॥ १ ॥
इच्छाम्याह्लादजलधौ स्थितोऽहं जगदीश्वरि ।
यदिभाग्यवशादाज्ञासारं चिन्तय सिद्धये ॥ २ ॥

महाभैरव्युवाच—

पशुनाथ वीरनाथ दिव्यनाथ कृपानिधे ।
प्रकाशहृदयोल्लास चन्द्रशेखर तच्छृणु ॥ ३ ॥
काली कल्पलताकारं तपस्याद्वयसंगतिम् ।
पशुभावस्थितां नाथ देवतां श्रृणु विस्तरात् ॥ ४ ॥
दुर्गापूजां शिवपूजां यः करोति पशूत्तमः ।
अवश्यं हि यः करोति स पशुरुत्तमः स्मृतः ॥ ५ ॥
केवलं शिवपूजाञ्च करोति यदि साधकः ।
पशूनां मध्यमः श्रीमान् शिवया सह चोत्तमः ॥ ६ ॥
केवलं वैष्णवोऽधीशः पशूनां मध्यमः स्मृतः ।
भूतानां देवतानाञ्च सेवां कुर्वन्ति ये सदा ॥ ७ ॥
पशूनां मध्यमाः प्रोक्तं नरकस्था न संशयः ।
त्वत्सेवां मम सेवाञ्च विष्णुब्रह्मादिसेवनम् ॥ ८ ॥
कृत्वान्यसर्वभूतानां नायिकानां महाप्रभो ।
यक्षिणीनां भूतिनीनां ततः सेवा शुभप्रदा ॥ ९ ॥
यः पशुर्ब्रह्मकृष्णादि सेवां कुर्वन्ति ये सदा ।
तथाश्रीतारकब्रह्म सेवाद्वये नरोत्तमाः ॥ १० ॥
तेषामसाध्या भूतादिदेवताः सर्वकामदाः ।
वर्जयेत् पशुमार्गेण विष्णुसेवापरो जनः ॥ ११ ॥

प्रवक्तव्यश्च पटले तेषां तेषां ततस्ततः ।
विधिना विधिना नाथ क्रमशः शृणु वल्लभ ॥ १२ ॥
अथ प्रातः समुत्थाय पशुरुत्तमपण्डितः ।
गुरूणां चरणाम्भोजमङ्गलं शीर्षपङ्कजे ॥ १३ ॥
विभाव्य पुनरेकं हि श्रीपादं भावयेद् यदि ।
पूजयित्वा च वीरं वै उपहारैर्न मे स्तवैः ॥ १४ ॥
त्रैलोक्यं तेजसा व्याप्तं मण्डलस्थां महोत्सवाम् ।
तड़ित्कोटिप्रभादीप्तिं चन्द्रकोटिसुशीतलाम् ॥ १५ ॥
सार्द्धत्रिवलयाकारां❀ स्वयम्भूलिङ्गवेष्टिताम् ।
उत्थापयेन्महादेवीं महारक्तां मनोन्मयीम् ॥ १६ ॥
श्वासोच्छ्वासत्रयावृत्तिं द्वादशाङ्गुलरूपिणीम् ।
योगिनीं खेचरीं वायूरूपां मूलाम्बुजस्थिताम् ॥ १७ ॥
चतुर्वर्णस्वरूपान्तां वकारादिषसान्तकाम् ।
कोटिकोटिसहस्रार्ककिरणां[1] कुलमोहिनीम् ॥ १८ ॥
महासूक्ष्मपथप्रान्तवान्तरान्तरगामिनीम् ।
त्रैलोक्यरक्षितां[2] वाक्यदेवतां शम्भुरूपिणीम् ॥ १९ ॥
महाबुद्धिप्रदां देवीं सहस्रदलगामिनीम् ।
महासूक्ष्मपथे तेजोमयीं मृत्युस्वरूपिणीम् ॥ २० ॥
कालरूपां सर्वरूपां सर्वत्र सर्वचिन्मयीम् ।
ध्यात्वा पुनः पुनः शीर्षे सुधाब्धौ विनिवेष्टिताम् ॥ २१ ॥

---

❀ महावज्र सर्पराज सदृशीं ध्यान योगिनीम्
सदावायु साम्ब श्रीं कारणोल्लास वर्धिनीम् ॥
सुप्तां योगिभिराभास्यां शोणवेदिकोपरि ।
योगिध्येयां सूक्ष्म विद्यां भाविनीमुन्मनोभयीम्
इति क० पु० अधिक पाठः ।

१. किरणोज्ज्वलमोहिनीम् इति क० पा०

२. बाह्यदेवतां शब्दरूपिणीम् इति. क. पा.

सुधापानं कारयित्वा पुनः स्थाने समानयेत् ।
समानयनकाले तु सुषुम्नामध्यमध्यके ॥ २२ ॥

अमृताभिप्लुतां कृत्वा पुनः स्थानेषु पूजयेत् ।
ऊद्र्ध्वोद्गमनकाले तु महातेजोमयीं स्मरेत् ॥ २३ ॥

प्रतिप्रयाणकाले तु सुधाधाराभिराप्लुताम् ।
महाकुलकुण्डलिनीममृतानन्दविग्रहाम् ॥ २४ ॥

ध्यात्वा ध्यात्वा पुनर्ध्यात्वा सर्वसिद्धीश्वरो भवेत् ।
तस्मिन्स्थाने महादेवीं विभाव्यकिरणोज्ज्वलाम् ॥ २५ ॥

अमृतानन्दमुक्तिं तां पूजयित्वा शुभां मुदा ।
मानसोच्चारबीजेन मायांवा कामबीजकम् ॥ २६ ॥

पञ्चाशद्वर्णमालाभिर्जप्त्वानुलोमसत्पथा ।
विलोमेन पुनर्जप्त्वा सर्वत्र जयदं स्तवम् ॥ २७ ॥
पठित्वा सिद्धिमाप्नोति तत्स्तोत्रं श्रृणु भैरव ॥ २८ ॥

जन्मोद्धारनिरक्षिणीहतरुणी[1] वेदादिबीजादिमा-
नित्यं चेतसि भाव्यते भुवि कदा सद्वाक्यसञ्चारिणी ।
[2]मां पातु प्रियदा स विपदं संहारयित्रि धरे
धात्रि त्वं स्वयमादिदेववनितादीनातिर्दःनं पशुम् ॥ २९ ॥

रक्ताभामृतचन्द्रिकालिपिमयी सर्पाकृतिर्निद्रिता
जाग्रत्कूर्मसमाश्रिता भगवती त्वं मां समालोकय ।
मांसोद्गन्धकुगन्धदोषजड़ितं वेदादिकार्यान्वितम्
स्वल्पान्यामलचन्द्रकोटिकिरणैर्नित्यं शरीरं कुरु ॥ ३० ॥

---

कुसुदंरत्वम् इति. ग. पा.

१. जन्मोद्धार शिवक्षनीह तरुणी वेदादि बीजादिमा इति. क. पा.

२. मांसात्तु प्रियदासा व पद संधातया श्रीधरे ।

सिद्धार्थी निजदोषवित् स्थलगतिर्व्याजीयते विद्यया
कुण्डल्याकुलमार्गमुक्तनगरीमायाकुमार्गः श्रिया ।
यद्येवं भजति प्रभातसमये मध्याह्नकालेऽथवा
नित्यं यः [1]कुलकुण्डलीजपपदाम्भोजं स सिद्धो भवेत् ॥ ३१ ॥

वाय्वाकाशचतुर्दलेऽतिविमले वाञ्छाफलान्यालके[2]
नित्यं सम्प्रति नित्यदेहघटिता शाङ्केतिताभाविता ।
विद्याकुण्डलमानिनी स्वजननी [3]मायाक्रिया भाव्यते
यैस्तैः सिद्धकुलोद्भवैः प्रणतिभिः [4]सत्स्तोत्रकैः शंभुभिः ॥ ३२ ॥

[5]धाताशङ्करमोहिनीत्रिभुवनच्छायापटोद्गामिनी
संसारादिमहासुखप्रहरणी तत्रस्थिता योगिनी ।
सर्वग्रन्थिविभेदिनी स्वभुजगा सूक्ष्मातिसूक्ष्मापरा
ब्रह्मज्ञानविनोदिनी कुलकुटी व्याघातिनी भाव्यते ॥ ३३ ॥

वन्दे श्रीकुलकुण्डलीत्रिवलिभिः साङ्गैः स्वयम्भूं प्रियं
प्रावेष्ट्याम्बरमारचित्तचपला वालावलानिष्कला ।
या देवी परिभाति वेदवदना संभावनी तापिनी
इष्टानां शिरसि स्वयम्भुवनितां संभावयामि क्रियाम् ॥ ३४ ॥

वाणीकोटिमृदङ्गनादमदनानिश्रेणिकोटिध्वनिः
प्राणेशीरसराशमूलकमलोल्लासैकपूर्णानना ।
आषाढ़ोद्भवमेघवाजनियुतध्वान्ताननास्थायिनी
माता सा परिपातु सूक्ष्मपथगे मां योगिनां शङ्करः[6] ॥ ३५ ॥

---

१. निजपदाम् क० ।

२. वाञ्छाफलोन्मूलके क० ।

३. मार क० ।

४. संयोगिनिः क० ।

५. वाताशङ्करविमोहिनीतिवलच्छायापटोद्गामिनी । ग० ।

६. योगिनं शं कुरु क० ।

त्वामाश्रित्य नरा व्रजन्ति सहसा वैकुण्ठकैलासयोः
आनन्दैकविलासिनीं शशिशतानन्दाननां कारणाम् ।
मातः श्रीकुलकुण्डलीप्रियकरे काली कुलोद्दीपने
तत्स्थानं प्रणमामि भद्रवनिते मामुद्धर त्वं पशुम् ॥ ३६ ॥
कुण्डलीशक्तिमार्गस्थं स्तोत्राष्टकमहाफलम् ।
यः पठेत् प्रातरुत्थाय स योगी भवति ध्रुवम् ॥ ३७ ॥
क्षणादेव हि पाठेन कविनाथो भवेदिह ।
पठेत्[1] श्रीकुण्डलो योगो ब्रह्मलीनो भवेत् महान् ॥ ३८ ॥
इति ते कथितं नाथ कुण्डलीकोमलं स्तवम् ।
एतत्स्तोत्रप्रसादेन देवेषु गुरुर्गीष्पतिः ॥ ३९ ॥
सर्वे देवाः सिद्धियुताः अस्याः स्तोत्रप्रसादतः ।
द्विपरार्द्धं चिरंजीवी ब्रह्मा सर्वसुरेश्वरः ॥ ४० ॥
त्वष्टापि मम निकटे स्थितो भगवतीपतिः ।
मां विद्धि परमांशक्तिं स्थूलसूक्ष्मस्वरूपिणीम् ॥ ४१ ॥
सर्वप्रकाशकरणीं विन्ध्यपर्वतवासिनीम् ।
हिमालयसुतां सिद्धां सिद्धमन्त्रस्वरूपिणीम् ॥ ४२ ॥
वेदान्तशक्तितन्त्रस्थां कुलतन्त्रार्थगामिनीम् ।
रुद्रयामलमध्यस्थां स्थितिस्थापकभाविनीम् ॥ ४३ ॥
पञ्चमुद्रास्वरूपाञ्च शक्तियामलमालिनीम् ।
रत्नमालावलाकोट्यां चन्द्रसूर्यप्रकाशिनीम् ॥ ४४ ॥
सर्वभूतमहाबुद्धि[2]दायिनीं दानवापहाम् ।
स्थित्युत्पत्तिलयकरीं करुणासागरस्थिताम् ॥ ४५ ॥
महामोहनिवासाढ्यां दामोदरशरीरगाम् ।
छत्रचामररत्नाढ्यमहाशूलकरां पराम् ॥ ४६ ॥

---

१. पवित्रीकुण्डली योगी ब्राह्मणी नो भवेत् महान् ग० ।
२. दानवादर्पहारिणीम् ग० ।

ज्ञानदां वृद्धिदां ज्ञानरत्नमालाकलापदाम् ।
सर्वतेजःस्वरूपाभामनन्तकोटिविग्रहाम् ॥४७॥
दरिद्रधनदां लक्ष्मीं नारायणमनोरमाम् ।
सदा भावय शम्भो त्वं योगनायकपण्डित ॥४८॥
पुनर्भावं पशोरेव श्रृणु सादरपूर्वकम् ।
अकस्मात् सिद्धिमाप्नोति पशुर्नारायणोपमः ॥४९॥
वैकुण्ठनगरे याति चतुर्भुजकलेवरः ।
शङ्खचक्रगदापद्महस्तो गरुडवाहनः ॥५०॥
महाधर्मस्वरूपोऽसौ महाविद्याप्रसादतः ।
पशुभावं महाभावं भावानां सिद्धिदं [1]पुनः ॥५१॥
आदौ भावं पशोः कृत्वा पश्चात् कुर्यादवश्यकम् ।
वीरभावं महाभावं सर्वभावोत्तमोत्तमम् ॥५२॥
तत्पश्चादतिसौन्दर्यं दिव्यभावं महाफलम् ।
फलाकाङ्क्षी मोक्षगश्च सर्वभूतहिते रतः ॥५३॥
विद्याकाङ्क्षी धनाकाङ्क्षी रत्नाकाङ्क्षी च यो नरः ।
कुर्याद्भावत्रयं दिव्यं भावसाधनमुत्तमम् ॥५४॥
भावेन लभते वाद्यं धनं रत्नं महाफलम् ।
[2]कोटिगोदानजैः पुण्यैः कोटिशालग्रामदानजैः ॥५५॥
वाराणस्यांकोटिलिङ्गपूजनेन च यत्फलम् ।
तत्फलंलभते मर्त्यःक्षणादेव न संशयः ॥५६॥
आदौ दशमदण्डे तु पशुभावमथापि वा ।
मध्याह्नदशदण्डे तु वीरभावमुदाहृतम् ॥५७॥
सायाह्नदशदण्डे तु दिव्यभावं शुभप्रदम् ।
अथवा पशुभावस्थो यजेदिष्टादिदेवताम् ॥५८॥

---

१. परः क० ।

२. कोटि ब्राह्मण भोज्येन कोटिगोभोजनेन क० ।

जन्मावधि यजेन्मन्त्री महासिद्धिमवाप्नुयात् ।
सर्वेषां गुरुरूपःस्यादैश्वर्यञ्च दिने दिने ॥५९॥
यदि गुरुस्वभावः स्यात्तदा मधुमतीं लभेत् ।
यदि विवेकी निर्याति महावननिवासवान् ॥६०॥
ब्रह्मचर्यव्रतस्थो वा अथवा स्वपुरे[1] वसन् ।
पीठब्राह्मणमात्रेण महाषोढाश्रमेण च ॥६१॥
पशुभावस्थितो मन्त्री सिद्धविद्यामवाप्नुयात् ।
यदि पूर्वापरस्थाञ्च महाकौलिकदेवताम् ॥६२॥
कुलमार्गस्थितो मन्त्री सिद्धिमाप्नोति निश्चितम् ।
यदि विद्याः प्रसीदन्ति वीरभावं तदा लभेत् ॥६३॥
वीरभावप्रसादेन दिव्यभावमवाप्नुयात् ।
दिव्यभावं वीरभावं ये गृह्णन्ति नरोत्तमाः ॥६४॥
वाञ्छाकल्पद्रुमलतापतयस्ते न संशयः ।
आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः ॥६५॥
भूत्वा वसेन्महापीठं सदाज्ञानी भवेद् यतिः ।
किमन्येन फलेनापि यदि भावादिकं लभेत् ॥६६॥
भावग्रहणमात्रेण मम ज्ञानी भवेन्नर[2]ः ।
वाक्यसिद्धिर्भवेत् क्षिप्रं वाणी हृदयगामिनी ॥६७
नारायणं परिहाय लक्ष्मीस्तिष्ठति मन्दिरे ।
मम पूर्णन्तुमादृष्टी तस्य देहे न संशयः ॥६८॥
अवश्यं सिद्धिमाप्नोति सत्यं सत्यं न संशयः[3] ।

महाभैरव उवाच—

सूचितन्तु महादेवि कथयस्वानुकम्पया ॥६९॥

---

१. अथवागुरुस्वभाववान क० ।

२. महाज्ञानी क० ।

३. सदाशिव क० ।

सर्वतन्त्रेषु विद्यासु भावसङ्केतमेव हि ।
तथापि शक्तितन्त्रेषु विशेषात् सर्वसिद्धिदम् ॥७०॥
भावविद्याविधिं विद्ये विस्तार्य भावसाधनम् ।

आनन्दभैरव उवाच—

भावस्तु त्रिविधो देव दिव्यवीरपशुक्रमात् ॥७१॥
गुरुरस्य त्रिधा चात्र तथैव मन्त्रदेवताः ।
दिव्यभावो महादेव श्रेयसां सर्वसिद्धिदम् ॥७२॥
द्वितीयो मध्यमः प्रोक्तस्तृतीयः सर्वनिन्दितः ।
बहुजपात्तथाहोमात् कायक्लेशादिविस्तरैः ॥७३॥
न भावेन विना देवि तन्त्रमन्त्राः फलप्रदाः ।
किं वीरसाधनेनैव मोक्षविद्याकुलेन किम् ॥७४॥
किं पीठपूजनेनैव किंकन्याभोजनादिभिः ।
स्वयोषित् प्रीतिदानेन किं परेषां तथैव च ॥७५॥
किं जितेन्द्रियभावेन किं कुलाचारकर्मणा ।
यदि भावो विशुद्धार्थो न स्यात् कुलपरायणः ॥ ७६ ॥
भावेन लभते मुक्तिं भावेन कुलवर्द्धनम् ।
भावेन गोत्रवृद्धिः स्याद् भावेन कुलशोधनम् ॥ ७७ ॥
किं तथा पूजनेनैव यदि भावो न जायते ।
केन वा पूज्यते विद्या केन वा पूज्यते मनुः ॥ ७८ ॥
फलाभावश्च देवेश भावाभावात् प्रजायते ।
एतन्मन्त्रस्य कथने शङ्कते मम मानसः ॥ ७९ ॥
त्रिलोकं सज्जयेत् प्रायः सर्वरत्नसमागमः ।
नावीक्ष्य निर्जनं कुर्यात् कथं तत् कथयामि ते ॥ ८० ॥

श्री आनन्दभैरव उवाच—

त्वत्प्रसादान्महादेवि ! विद्यास्वप्नप्रबोधिनि !
सर्वपञ्चप्रपञ्चानां[1] दीक्षा देया महेश्वरि ॥ ८१ ॥

---

१. माया क० ।

यद्यतो देव सर्वेषां भूतानां स्वापकारणम् ।
करोमि कथय त्वं मां भावमार्गोत्तमोत्तमम् ॥ ८२ ॥

श्री महाभैरव्युवाच—

प्रथमं दिव्यभावस्तु कौलिके शृणु यत्नतः ।
सर्वदेवार्चितां विद्यां तेजःपुञ्जप्रपूरिताम् ॥ ८३ ॥
तेजोमयीं जगत्सर्वां विभाव्य मूर्तिकल्पनाम् ।
तत्तन्मूर्तिमयैः रूपैः स्नेहशून्ये[1] न वा पुनः ॥ ८४ ॥
आत्मानं तन्मयं कृत्वा सर्वभावं तथैव च ।
तत्सर्व्वां योषितं ध्यात्वा पूजयेद्यतमानसः ॥ ८५ ॥
अशेषकुलसम्पन्नां नानाजातिसमुद्भवाम् ।
नानादेशोद्भवां वापि सद्गुणालास्यसंयुताम् ॥ ८६ ॥
द्वितीयवत्सरादूर्ध्वं यावत् स्यादष्टमाब्दकम् ।
तावज्जप्त्वा पूजयित्वा कन्यां सुन्दरमोहिनीम् ॥ ८७ ॥
दिव्यभावः स्थितः साक्षात्तन्त्रमन्त्रफलं लभेत् ।
कुमारीपूजनादेव कुमारीभोजनादिभिः ॥ ८८ ॥
एकद्वित्र्यादिबीजानां फलदा नात्र संशयः ।
ताभ्यः पुष्पफलं दत्त्वा अनुलेपादिकन्तथा ॥ ८९ ॥
बलिप्रियञ्च नैवेद्यं दत्त्वा तद्भावभावितः ।
मुदा तदङ्गमाल्यानां बालभावविचेष्टितः ॥ ९० ॥
जातिप्रियकथालापक्रीडाकौतूहलान्वितः ।
यथार्थं तत् प्रियं तत्र कृत्वा सिद्धीश्वरो भवेत् ॥ ९१ ॥
कन्या सर्वसमृद्धिः स्यात् कन्या सर्वपरन्तपः ।
होमं मन्त्रार्चनं नित्यक्रियां कौलिकसत्क्रियाम् ॥ ९२ ॥

1. स्नेहस्तेनैव यद्गतः क० ।

नानाफलं महाधर्मं कुमारीपूजनं विना।
तत्तदर्द्धफलं नाथ प्राप्नोति साधकोत्तमः॥ ९३ ॥

फलं कोटिगुणं वीरः कुमारीपूजया लभेत्।
कुसुमाञ्जलिपूर्णञ्च कन्यायां कुलपण्डितः॥ ९४ ॥

ददाति यदि तत्पुष्पं कोटिमेरुप्रदो भवेत्।
तज्ज्ञानजं महापुण्यं क्षणादेव समालभेत्॥ ९५ ॥

कुमारी भोजिता येन त्रैलोक्यं तेन भोजितम्।
एकवर्षा भवेत् सन्ध्या द्विवर्षा च सरस्वती॥ ९६ ॥

त्रिवर्षा च त्रिधामूर्तिश्चतुर्वर्षा च कालिका।
सुर्यगा[1] पञ्चवर्षा च षड्वर्षा चैव रोहिणी॥ ९७ ॥

सप्तभिर्मालिनी साक्षादष्टवर्षा च कुब्जिका।
नवभिः कालसन्दात्री दशभिश्चापराजिता॥ ९८ ॥

एकादशे च रुद्राणी द्वादशेब्दे तु भैरवी।
त्रयोदशे महालक्ष्मीर्द्विसप्तपीठनायिका॥ ९९ ॥

क्षेत्रज्ञा पञ्चदशभिः षोडशे चाम्बिका मता।
एवं क्रमेण सम्पूज्य यावत् पुष्पं न विद्यते॥१००॥

प्रतिपदादिपूर्णान्तं वृद्धिभेदेन पूजयेत्।
महापर्वसु सर्वेषु विशेषाञ्च पवित्रके॥१०१॥

महानवम्यां देवेश कुमारीश्च प्रपूजयेत्।
तस्मात्षोडशपर्यन्तं युवतीति प्रचक्षते॥१०२॥

तत्र भावप्रकाशः स्यात्सभावः परमो मतः।
रक्षितव्यं प्रयत्नेन रक्षितास्ताः प्रकाशयेत॥१०३॥

---

१. सुभग क०।

महापूजादिकं कृत्वा वस्त्रालङ्कारभोजनैः ।
पूजयेन्मन्दभाग्योऽपि लभते जयमङ्गलम् ॥१०४॥
अन्येषां कथनेनाथ प्रयोजनमहाफलम् ।
विधिना पूजयेद् यस्तु दिव्यवीरपशुस्थितः ॥१०५॥
भावत्रये महासौख्यं दिव्ये सत्कर्म सत्फलम् ॥१०६॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्युपचर्याविलासे सिद्धमन्त्रप्रकरणे भावनिर्णये षष्ठः पटलः ॥



## सप्तमः पटलः

अथ पूजां प्रवक्ष्यामि कुमार्याश्चातिदुर्लभाम् ।
व्याधिवर्गविहीनानां शीघ्रं सिद्ध्यति भूतले ॥ १ ॥
तत्प्रकारं महादेव वीराणामधिपाधिप ।
पूजास्थानं महापीठं देवालयमथापि वा ॥ २ ॥
सुन्दरीं परमानन्दवर्द्धनीं जयदायिनीम् ।
कालरात्रिस्वरूपां श्रीं गौरीं रक्ताङ्गरागिणीम् ॥ ३ ॥
कन्यां देवकुलोद्भूतां राक्षसीं वा नरोत्तमाम् ।
नटीकन्यां हीनकन्यां तथा कापालिकन्यकाम् ॥ ४ ॥
रजकस्यापि कन्यां ते तथा नापितकन्यकाम् ।
गोपालकन्यकाञ्चैव तथा ब्राह्मणकन्यकाम् ॥ ५ ॥
शूद्रकन्यां वैश्यकन्यां तथा वणिक्कन्यकाम् ।
चण्डालकन्यकां वापि यत्र कुत्राश्रमे स्थिताम् ॥ ६ ॥
सुहृद्वर्गस्य कन्यां च समानीय प्रयत्नतः ।
पूजयेत् परमानन्दैरात्मध्यानपरायणः ॥ ७ ॥
क्रमशः शृणु देवेन्द्र वरहस्तनिषेवित ।
परमानन्दसौन्दर्य कारणानन्दविग्रह ॥ ८ ॥
मम पूजां यः करोति प्रत्यहं शुद्धभक्तितः ।
तस्यावश्यं कुमारीणां पूजनं भोजनं रवेः ॥ ९ ॥
तेजोरूपं विधोश्चाग्नेः सर्वभावे प्रशस्यते ।
तत्पूजनात्तदालापाद् भोजनादपि तत् शुभम् ॥ १० ॥
मम प्रीतिर्भवेत्साक्षाद्देवतागुप्तिसंस्थिता ।
बालभैरवदेवस्य कामिनीवटुकस्य च ॥ ११ ॥
मत्पुत्रस्य सर्वलोकपूजितस्य महौजसः ।
पूजाभिर्विविधैर्दिव्यैः कुमारी देवपूजिता ॥ १२ ॥

कुमारी कन्यका प्रोक्ता सर्वज्ञा जगदीश्वरी ।
पूजार्थं सर्वलोकस्य समानीय सुरेश्वराः[1] ॥ १३ ॥
[2]पूजयन्ति महादेवीं गुप्तभावनिवासिनीम् ।
सदा भोजनवाञ्छाध्यां[3] माल्यसन्तुष्टहासिनीम् ॥ १४ ॥
वृथा न रौति सा देवी कुमारी देवनायिका ।
सरस्वतीस्वरूपा च पूज्यते सर्वनायकैः ॥ १५ ॥
शिवभक्तैर्विष्णुभक्तैस्तथान्यदेवपूजितैः ।
सर्वलोकैः पूजिता सा चावश्यं पूज्यते बुधैः ॥ १६ ॥
पूजया लभते पूजां पूजया लभते श्रियम् ।
पूजया धनमाप्नोति पूजया लभते महीम् ॥ १७ ॥
पूजया लभते लक्ष्मीं सरस्वतीं महौजसम् ।
महाविद्याः प्रसीदन्ति सर्वे देवा न संशयः ॥ १८ ॥
वालभैरवब्रह्मेन्द्रा ब्राह्मणा ब्रह्मवादिनः ।
रुद्राश्च देववर्गाश्च वैष्णवा विष्णुरूपिणः ॥ १९ ॥
अवताराश्च द्विभुजा विष्णवो मनुशोभिताः[4] ।
अन्ये दिक्पालदेवाश्च चराचरगुरुस्तथा ॥ २० ॥
नानाविद्यायुतास्सर्वे दानवाः कूटशालिनः ।
अपवर्गस्थिता ये ये ते ते तुष्टा न संशयः ॥ २१ ॥
यद्यहं तुष्टिरूपा हि अन्ये लोके च का कथा ।
कुमारीपूजनं कृत्वा त्रैलोक्यं वशमानयेत् ॥ २२ ॥
महाशान्तिर्भवेत् क्षिप्रं सर्वपुण्यं फलप्रदम् ।
तत्तन्मन्त्रसदुल्लेखात् क्षणात् पुण्ययुतं भवेत् ॥ २३ ॥

---

१. सुरेश्वर ! क० ।
२. पूजयित्वा क० ।
३. वाञ्छाढ्या, क० ।
४. मनुसेविनः क० ।

मन्त्रेण पुटितं कृत्वा जप्त्वा सिद्धीश्वरो भवेत् ।
यद्यत् प्रकारमुच्चार्य वदामि सुरसुन्दर ॥ २४ ॥
तत्तत् कार्यमवश्यं च भिन्नबुद्धिं न कारयेत् ।
अथ बीजप्रभेदश्च[1] वद शङ्करपूजिते ॥ २५ ॥
यदि मां स्नेहपुञ्जोऽस्ति मत्कुलार्थप्रवेशिनि ।
वदस्व परमानन्द भैरवि प्राणवल्लभे ॥ २६ ॥

आनंदभैरवी उवाच—

शृणु नाथ कुलार्थं मे कुमारीपूजने मनुम् ।
महामन्त्रं महामन्त्रं सिद्धमन्त्रं न संशयः ॥ २७ ॥
एतन्मन्त्रप्रसादेन जीवन्मुक्तो भवेत् सुधीः ।
अन्ते देवीपदं याति सत्यमानन्दभैरव ॥ २८ ॥
ऐहिके सुखसम्पत्तिर्म्मधुमत्याः प्रसादकम् ।
अवश्यं प्राप्नुयान्मर्त्यो विश्वासं[2] कुरु शंकर ॥ २९ ॥
वाग्भवेन पुरः क्षोभं मायाबीजे गुणाष्टकम् ।
श्रियोबीजे श्रियोलाभो मायाबीजे रिपुक्षयः ॥ ३० ॥
भैरवेण तु बीजेन खेचरत्त्वं सुरादिभिः ।
कुमारिका ह्यहं नाथ सदा त्वं हि कुमारकः ॥ ३१ ॥
अष्टोत्तरशतं वापि एकां वा परिपूजयेत् ।
पूजिताः प्रतिपद्यन्ते[3] निर्द्दहन्त्यवमानिताः ॥ ३२ ॥
कुमारी योगिनी साक्षात् कुमारी परदेवता ।
असुरा अष्टनागाश्च ये ये दुष्टग्रहा अपि ॥ ३३ ॥
भूतवेतालगन्धर्वा डाकिनीयक्षराक्षसाः ।
याश्चान्या देवताः सर्वाः भूर्भुवः स्वश्च भैरव ॥ ३४ ॥

---

१. प्रभावं च क० ।
२. विश्रामं क० ।
३. प्रतिपूज्यन्ते क० ।

पृथिव्यादीनि सर्वाणि ब्रह्माण्डं सचराचरम् ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ ३५ ॥
ते तुष्टाः सर्वतुष्टाश्च यस्तु कन्यां प्रपूजयेत् ।
निधियुक्तां कुमारीन्तु[1] पूजयेच्चैव भैरव ॥ ३६ ॥
पाद्यमर्घ्यं तथा धूपं कुङ्कुमं चन्दनं शुभम् ।
भक्तिभावेन सम्पूज्य कुमारीभ्यो निवेदयेत् ॥ ३७ ॥
प्रदक्षिणत्रयं कुर्यादादौ मध्ये तथान्ततः ।
पश्चाच्च दक्षिणा देया रजतस्वर्णमौक्तिकैः ॥ ३८ ॥
दक्षिणां विधिवद्दत्त्वा कुमारीभ्यः क्रमेण तु ।
विवाहयेत् स्वयं कन्यां ब्रह्महत्यां[2] व्यपोहति ॥ ३९ ॥
यावच्च[3] पुण्यकाले तु कन्यादानं प्रकल्पयेत् ।
भुक्तिमुक्तिफलं तस्य सौभाग्यं सर्वसम्पदः ॥ ४० ॥
रुद्रलोके वसेन्नित्यं त्रिनेत्रो भगवान् हरः ।
तीर्थकोटिसहस्राणि अश्वमेधशतानि च ॥ ४१ ॥
तत्फलं लभते सद्यो यस्तु कन्यां विवाहयेत् ।
वालुकासागरे ज्ञेया तावदब्दसहस्रकम् ॥ ४२ ॥
एकैकं कुलमुद्धृत्य रुद्रलोके महीयते ।
तत्तदिष्टदेवतानां प्रीतये तुष्टये सुधीः ॥ ४३ ॥
कन्यादानं समाहृत्य मुक्तिमाप्नोति भैरव ।
तत्तद्वर्षीयकन्यायास्तत्तद्बुद्ध्या च साधकः ॥ ४४ ॥
विभाव्य शिवरूपत्वं सम्प्रदानीयकारके ।
पूर्णरूपं शिवं ध्यात्वा वरं सर्वांगसुन्दरम् ॥ ४५ ॥
तेजोमयं यशःकान्तं बालभैरवरूपिणम् ।
बटुकेशं महादेवं वरयेत् साधकाग्रणीः ॥ ४६ ॥

---

१. भोजयेच्चैव क० ।
२. ब्रह्महत्या विनश्यति क० ।
३. यो यश्च क० ।

बालरूपां भैरवीं च त्रैलोक्यसुन्दरीं वराम् ।
नानालंकारनम्राङ्गीं भद्रविद्याप्रकाशिनीम् ॥ ४७ ॥
चारुहास्यां महानन्दहृदयां शुभदां शुभाम् ।
ध्यात्वाद्वादशपत्राब्जे पूर्णचन्द्रनिभाननाम् ॥ ४८ ॥
सम्प्रदाने समानीय तत्तन्मन्त्रेण दापयेत् ।
एतत् श्रुत्वा महावीरो वलरूपी निरञ्जनः ॥ ४९ ॥
पुनर्जिज्ञासयामास परमानन्दभैरवीम् ।

आनंदभैरव उवाच—

कुमारीकुलतत्त्वार्थं मन्त्रार्थं जपनक्रमम् ॥ ५० ॥
यजनादिप्रकारञ्च भोजनादिक्रमन्तथा ।
होमादिप्रक्रियां तस्याः स्तोत्रं प्रत्येकमेव हि ॥ ५१ ॥
कवचं च कुमारीणां वदस्व क्रमशः प्रिये ।
येन क्रमेण सा विद्या कुमारीपरदेवता ॥ ५२ ॥
निर्जने साधकस्याग्रे महावाक्यं स्वयं वदेत् ।
बालिका चारुनयना केन हेतोः प्रसीदति ॥ ५३ ॥
तत्प्रकारं वद स्नेहादानन्दभैरवप्रिये ।

आनन्दभैरवी उवाच—

शृणु शंभो प्रवक्ष्यामि कुमारीकुलमन्त्रकान् ॥ ५४ ॥
येन विज्ञानमात्रेण धरणीशो नरोत्तमः ।
सर्वेषां गुरुरूपः स्यात् कुमारीयजनेन च ॥ ५५ ॥
एकवर्षा वरा सन्ध्यादिकानांमनुमुत्तमम् ।
षोडशाच्छान्तरूपाणां मन्त्रं शृणु महाप्रभो ॥ ५६ ॥
क्रमादिकश्च सर्वेषां चैतन्यसिद्धिसत्क्रियाम् ।
आनीय सुन्दरीं नारीं कुमारीं वरनायिकाम् ॥ ५७ ॥
रत्नालङ्कारसंयुक्तां शङ्खवस्त्रादिशोभिताम् ।
वाग्भवेन जलं नाथ तन्नाम्ना परिदापयेत् ॥ ५८ ॥

देवीबुद्ध्या सदा ध्यात्वा पूजयेत् साधकोत्तमः ।
मायाबीजेन तन्नाम्ना पाद्यं दद्यात् तथा प्रभो ॥ ५९ ॥
लक्ष्मीबीजेन चार्घ्यन्तु कुर्याद् बीजेन चन्दनम् ।
मायाबीजेन पुष्पाणि कुमार्यै दापयेत् सुधीः ॥ ६० ॥
सदाशिवेन मन्त्रेण धूपदीपौ महोत्तमौ ।
दत्त्वा षडङ्गमन्त्रेण पूजयेद्देवनायकः ॥ ६१ ॥
तत्प्रकारं महादेव शृणुष्वानन्दरूपधृक् ।
महातेजोमयं शुभ्रं हृदयं हस्तदक्षिणैः ॥ ६२ ॥
विभाव्य प्रपठेद्धीमान् तन्मन्त्रं शृणु शंकर ।
आदौ वाग्भवमुच्चार्य मायां लक्ष्मीन्तु कूर्चकम् ॥ ६३ ॥
प्रेतबीजं ततो ब्रूयात् सविसर्गेन्दुबिन्दुकम् ।
कुलशब्दं समुच्चार्य कुमारिके ततो वदेत् ॥ ६४ ॥
हृदयाय नमः प्रोच्य ततः शिरसि भावयेत् ।
शुक्लवर्णं सर्वमयं बीजमुच्चार्य संन्यसेत् ॥ ६५ ॥
हकारं वाग्भवाढ्यञ्च वकारं वाग्भवार्थकम् ।
मायां लक्ष्मीं वाग्भवं च द्विठान्ते शिरसे पदम् ॥ ६६ ॥
वह्निजायावधिर्मन्त्रो न्यसेत् शिरसि साधकः ।
शिखामध्ये कृष्णवर्णं नीलाञ्जनचयप्रभम् ॥ ६७ ॥
विभाव्य संन्यसेन्मन्त्री कुमारीकुलसिद्धये ।
आदौ प्रणवमुद्धृत्य तदन्ते[1] वह्निसुन्दरी ॥ ६८ ॥
शिखायै च समुद्धृत्य वषट्कारं ततो वदेत् ।
ततः कवचमध्ये च बलवन्तं सुतेजसम् ॥ ६९ ॥
प्रथमारुणसंकाशं ध्यात्वा चारुकलेवरम् ।
वाग्भवञ्च समुच्चार्य कुलशब्दं ततो वदेत् ॥ ७० ॥
वागीश्वरीपदं पश्चात् कवचाय ततो वदेत् ।
तारकब्रह्मशब्दञ्च कवचन्यासजालकम् ॥ ७१ ॥

१. विष्णु.क० ।

ततो नेत्रत्रयं ध्यात्वा महाबीजं महाप्रभम् ।
रक्तवर्णं कोटिकोटिजवामण्डलमण्डितम् ॥ ७२ ॥
विराजितं कोटिपुण्यार्जिततेजसि भास्करे ।
वाग्भवं च समुच्चार्य कुलेश्वरिपदं ततः ॥ ७३ ॥
नेत्रत्रयाय शब्दान्ते वौषट् लोचनमन्त्रकम् ।
ततः साधकमन्त्री च वामहस्ततले तथा ॥ ७४ ॥
मध्यमातर्जनीभ्यां च तालद्वयमुपाचरेत् ।
तन्मन्त्रं कोटिसूर्योग्रज्योत्स्नाजालसमप्रभम् ॥ ७५ ॥
महाकाशोद्भवं शब्दं महोग्रपरिपीडनम् ।
मायाबीजं तथास्त्राय पदमुद्धृत्य यत्नतः ॥ ७६ ॥
पान्तठान्तं समुद्धृत्य महामन्त्रं प्रकीर्तितम् ।
ततस्तस्या हृन्निलये ध्यात्वा च परिवारकान् ॥ ७७ ॥
पूजयेद् यत्नतो मन्त्री भेषजामृतधारया ।
तर्पयेत् पूजयेद्भक्त्या भैरवं[1] बालभैरवम् ॥ ७८ ॥
देवताभिः पूजयित्वा परिवारान् क्रमेण वै ।
ततो वाग्भवमुच्चार्य सिद्धजयाय शब्दतः ॥ ७९ ॥
पूर्वं पदं समुच्चार्य वक्त्राय नम ईरितः ।
ततो वाग्भवमुच्चार्य जयायशब्दमुद्धरेत् ॥ ८० ॥
उत्तरवक्त्रमुद्धृत्य चतुर्थ्यन्तं नमः पदम् ।
ततो वाग्भवमाया श्रीबीजमुच्चार्य यत्नतः ॥ ८१ ॥
कुब्जिके पश्चिमान्ते च वक्त्राय नमः कुर्वितः ।
ततो वाग्भवमुच्चार्य कालिकेपदमुच्चरेत् ॥ ८२ ॥
दक्षवक्त्राय शब्दान्ते [2]नानामन्त्रं प्रकीर्तितम् ।
एतन्मन्त्राक्षरं नाथ समुच्चार्य कुलेश्वर ॥ ८३ ॥

---

१. कलिभैरवम् क० ।

१. नमोमन्त्रः प्रकीर्तितः क० ।

पूजयित्वा क्रमेणैव भास्करं परिपूजयेत् ।
चन्द्रं दिक्पालदेवञ्च सन्ध्यादीन् परिपूजयेत् ॥ ८४ ॥
वीरभद्रां महाकालीं[1] कौलिनीं कुलगामिनीम् ।
अष्टादशभुजां कालीं चतुर्वर्गां प्रपूजयेत् ॥ ८५ ॥
नैवेद्यादीन्समानीय नानाभोज्यादिसंयुतम् ।
दुग्धं घनावृतं क्षीरं पक्वान्नं पक्वसत्फलम् ॥ ८६ ॥
यद्यत्कालोपयोग्यञ्च शर्करामधुमिश्रितम् ।
पञ्चतत्त्वं कुलद्रव्यं निजकल्याणवर्धनम् ॥ ८७ ॥
नाना द्रव्यञ्च नैवेद्यं स्वस्वकल्पोक्तसाधितम् ।
कुमारीभ्यो निवेद्यैवं नानासौरभशोभितम् ॥ ८८ ॥
शीतलं जलमानीय दद्यात्ताभ्यो महासुधीः ।
ततो हितं महामन्त्रं कुमार्याश्चातिदुर्लभम् ॥ ८९ ॥
अथवा स्वीयमूलञ्च जप्त्वा सिद्धीश्वरो भवेत् ।
समर्थप्राणवायूनां धारयेत्कारयेत्[2] स्वयम् ॥ ९० ॥
अष्टाङ्गादिप्रणामं च कुर्वन्स्तोत्रं पठन्दिशेत् ॥ ९१ ॥
नमामि कुलकामिनीं परमभाग्यसन्दायिनीम् ।
कुमाररतिचातुरीं सकलसिद्धिमानन्दिनीम् ॥ ९२ ॥
प्रवालगुटिकास्रजां रजतरागवस्त्रान्विताम् ।
हिरण्यकुलभूषणां भुवनवाक्कुमारीं भजे ॥ ९३ ॥
इतिमन्त्रेण संन्यस्य तारिणीं परिपूजयेत् ।
शिवं गणेशं सम्पूज्य प्रणमेत् साधकोत्तमः ॥ ९४ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्युपचर्या-विन्यासे सिद्धमन्त्रप्रकरणे दिव्यभावनिर्णये

सप्तमः पटलः ॥

---

१. महाकन्याम् " " "
२. धारणं कारयेत्स्वयम् क० ।

# अष्टमः पटलः

श्री आनन्दभैरवी उवाच—

अथ वक्ष्ये महादेव कुमार्या जपहोमकम् ।
लक्षसंख्यजपं कृत्वा मायां वा वाग्भवं रमाम् ॥ १ ॥
कालीबीजं वापिनाथ मायां वा कामबीजकम् ।
सदाशिवेन पुटितं विन्दुचन्द्रविभूषितम् ॥ २ ॥
[1]अथवा प्रणवेनापि पुटितं त्रिदशेश्वर ।
जपित्वा मूलमन्त्रञ्च लक्षसंख्याविधानतः ॥ ३ ॥
तद्दशांशं महाहोमं घृताक्तविल्वपत्रकैः ।
अथवाश्वेतपुष्पैश्च कुन्दपुष्पैर्महाफलम् ॥ ४ ॥
एवं क्रमेण जुहुयात् करवीरप्रसूनकैः ।
घृताक्तैः कैवलैर्वापि चन्दनागुरुमिश्रितैः ॥ ५ ॥
हविष्याशी दिवाभागे रात्रौ पूजापरो भवेत् ।
निजपूजावशेषैस्तु कुलद्रव्यैः प्रपूजयेत् ॥ ६ ॥
दिवासंख्यं जपेत्तत्र परमानन्दरूपधृक् ।
जपान्ते जुहुयान्मन्त्री मदुक्तद्रव्यसंयुक्तैः ॥ ७ ॥
ततः प्राणात्मकं वायुं सोधयित्वा पुनः पुनः ।
प्राणायामत्रयं कृत्वा चाष्टाङ्गं प्रणमेन्मुदा ॥ ८ ॥
प्रणामसमये नाथ इदं स्तोत्रं पठेत् यतिः ।
कवचञ्च तथा पाठ्यं कुमारीणामथापि वा ॥ ९ ॥
निजदेव्या महास्तोत्रं पठेद्धि कवचं ततः ।
कुमारीणां महादेव सहस्रनाम साष्टकम् ॥ १० ॥

---

१ लक्षसंख्यां क्रमेणैव जप्त्वा सिद्धीश्वरो भवेद् क० ।

पठित्त्वा सिद्धिमाप्नोति पठित्त्वा[1] साधकोत्तमः ।
*अग्रे संस्थाप्य ताः सर्वा रत्नकोटिसुशीतलाः ॥ ११ ॥
ततः स्तोत्रं पठेद्धीमान् समाहितमनावशी ।
[2]महादिव्याचाररतो बीरभावोल्वणोऽपि वा ॥ १२ ॥
एवं क्रमेण प्रपठेत् भक्तिभावपरायणः ।
महाविद्या महासेवा भक्तिश्रद्धाप्लुतार्पितः ॥ १३ ॥
महाज्ञानी भवेत् क्षिप्रं वाञ्छासिद्धिमवाप्नुयात् ॥ १४ ॥

[3]आनन्दभैरव उवाच—

देवेन्द्रादय इन्दुकोटिकिरणां वाराणसीवासिनीम् ।
विद्यां वाग्भवकामिनीं त्रिनयनां सूक्ष्मक्रिया ज्वालिनीम्[4] ॥
चण्डोद्योग निकृन्तिनीं त्रिजगतां धात्रीं कुमारी वराम् ।
मूलाम्भोरुहवासिनीं शशिमुखीं सम्पूजयामि श्रिये ॥ १५ ॥
भाव्यां देवगणैः शिवेन्द्रयतिभिर्मोक्षार्थिभिर्बालिकाम् ।
सन्ध्यां नित्यगुणोदयां[5] द्विजगणैश्रेष्ठोदयां सारुणाम् ॥
शुक्लाभां परमेश्वरीं शुभकरीं भद्रां विशालाननाम् ।
गायत्रींगणमातरं दिनगतिं कृष्णाश्च वृद्धां भजे ॥ १६ ॥
बालां बालक पूजितां गणभृतां विद्यावतां मोक्षदाम् ।
धात्रीं शुक्लसरस्वतीं नववरां वाग्वादिनां चण्डिकाम् ॥

---

१. नात्र कार्या विचारणा क०

* तद् शक्तौ निजदेव्याः सहस्रनाम मङ्गलम् ।
अष्टोत्तरं पठित्वाथ सिद्धयङ्को क्षीणसंशयः ॥
तासां स्तोत्रं दिव्यनाथ शृणु सर्वत्र मङ्गलम् ।
अकस्मात् सिद्धिमाप्नोति पठित्वा साधकोत्तमः ॥
क० ।

२. महाविद्याचाररतो महाभावो ल्वणोऽपि वा ग० ।
३. श्री आनन्दभैरवी उवाच क० ।
४. नृक्षत्रियाकामिनीम् ग० ।
५. सुखोदयाम् क० ।

स्वाधिष्ठानहरिप्रियां प्रियकरीं वेदान्तविद्याप्रदाम् ।
नित्यं मोक्षहिताय योगवपुषा चैतन्यरूपां भजे ॥ १७ ॥

नानारत्न समूहनिर्मितगृहे पूज्यां सुरैर्बालिकां ।
वन्दे नन्दनकानने मनसिजे सिद्धान्त बीजानने ॥
अर्थं देहि निरर्थकाय पुरुषे हित्वा कुमारीं कलाम् ।
[1]सत्यं पातु कुमारिके त्रिविधमूर्त्या च तेजोमयीम् ॥ १८ ॥

वरानने सकलिकां कुलपथोल्लासैकं [2]बीजोद्वहाम् ।
मांसामोदकरालिनीं हि भजतां कामातिरिक्तप्रदाम् ॥
बालोऽहं वटुकेश्वरस्य चरणाम्भोजाश्रितोऽहं सदा ।
हित्वा बालकुमारिकेशिरसि [3]शुक्लाम्भोरुहेशम्भजे ॥ १९ ॥

सूर्याह्लादबलाकिनीं कलिमहापापादितापापहाम्[4] ।
तेजोऽङ्गां शुचिसूर्यगां भयहरां तेजोमयीं बालिकाम् ॥
वन्देहृत्कमले सदा रविदले बालेन्द्रविद्यां सतीम् ।
साक्षात्सिद्धिकरीं कुमारिविमलेऽन्वासाद्य रूपेश्वरीम् ॥ २० ॥

नित्यं श्रीकुलकामिनीं कुलवतीं कोलामुमामम्बिकाम् ।
नानायोगनिवासिनीम् सुरमणीं नित्यां तपस्यान्विताम् ॥
वेदान्तार्थविशेषदेशवसनाभाषाविशेषस्थिताम् ।
वन्देपर्वतराजराजतनयाम् कालप्रियो त्वामहम् ॥ २१ ॥

कौमारीं कुलकामिनीं रिपुगणक्षोभाग्निसन्दोहिनीम् ।
रक्ताभानयनां शुभांपरममार्गमुक्तिसंज्ञाप्रदाम् ॥
भार्यां भागवतीं मतिं भूवनमामोदपञ्चाननां ।
पञ्चास्यप्रियकामिनीं भयहरां सर्पादिहारां भजे ॥ २२ ॥

---

१. मह्यं पातु कुमारिके त्रिविधमूत्याकाशतेजोमयीम् ख० ।

२. बीजोद्गृहाम् ग० ।

३. शुद्धाम्भोरुहेशं भजे ख० ।

४. कलिमलापापासितां पापहाम् ग० ।

चन्द्रास्यां चरणद्वयाम्बुजमहाशोभाविनोदींनदीम् ।
मोहादिक्षयकारिणीं वरकरां श्रीकुब्जिकां[1] सुन्दरीम् ॥
ये नित्यं परिपूजयन्ति सहसा राजेन्द्रचूडामणिम् ।
सम्पादं धनमायुषो जनयतो व्याप्येश्वरत्वं जगुः ॥ २३ ॥
योगीशं भुवनेश्वरं प्रियकरं श्रीकालसन्दर्भया ।
शोभासागरगामिनं हरभवं वाञ्छाफलोद्दीपनम् ॥
लोकानामघनाशनायशिवया श्रीसंज्ञयाविद्यया ।
धर्मप्राणसदैवतां प्रणमतां कल्पद्रुमं भावये ॥ २४ ॥
विद्यां तामपराजितां [2]मदनभावामोदमत्तानाम् ।
हृत्पद्मस्थितपादुकां कुलकलां कात्यायनीं भैरवीम् ॥
ये ये पुण्यधियो भजन्ति परमानन्दाब्धिमध्ये मुदा ।
सर्व्वाच्छापिततेजसा भयकरीं मोक्षाय संकीर्त्तये ॥ २५ ॥
रुद्राणीं प्रणमामि पञ्चवदनां कोट्यर्कतेजोमयीम् ।
नानालङ्कृतभूषणं कुलभुजामानन्दसन्दायिनीम् ॥
श्रीमायाकमलान्वितां हृदिगतां सन्तानबीजक्रियाम् ।
आनन्दैकनिकेतनां हृदि भजे साक्षादलब्धामहम् ॥ २६ ॥
नमामिवरभैरवीं क्षितितलाद्यकालानलाम् ।
मृणालसुकुमारुणां भुवनदोषसंशोधिनीम् ॥
जगद्भयहरां हरां हरति या च योगेश्वरी ।
महापदसहस्रकम् सकलभोगदान्तामहम् ॥ २७ ॥
साम्राज्यं प्रददाति याचितवती विद्यामहालक्षणा ।
साक्षादष्टसमृद्धिदातरि महालक्ष्मीः कुलक्षोभहा ॥
स्वाधिष्ठानसुपङ्कजे विवसितां विष्णोरनन्तप्रिये ।
वन्दे राजपदप्रदां शुभकरीं कौलेश्वरीं कौलिकीम् ॥ २८ ॥

---

१. श्री चण्डिकाम् क० ।
२. मदनभारेति क० ।

पीठानामधिपाधिपाम् असुवहां विद्यां शुभां नायिकाम्।
सर्वालङ्करणान्वितां त्रिजगतां क्षोभापहां वारुणीम् ॥
वन्दे पीठगनायिकां त्रिभुवनच्छायाभिराच्छादिताम्।
सर्वेषां हितकारिणीं जयवतामानन्दरूपेश्वरीम् ॥ २९ ॥
क्षेत्रज्ञां मदविह्वलां कुलवतीं सिद्धिप्रियां प्रेयसीम्।
शम्भोः श्रीवटुकेश्वरस्यमहतामानन्दसञ्चारिणीम् ॥ ३० ॥
साक्षादात्मपरोद्गमां कमलमध्यसंभाविनाम्
शिरोदशशते दलेऽमृतमहाब्धिधाराधराम्।
निजमनः क्षोभापहां साकिनीम्
बाह्यार्थप्रकटामहं रजतभां वन्दे महाभैरवीम् ॥ ३१ ॥
प्रणामफलदायिनीं सकलबाह्यवश्यां गुणाम्।
नमामि परमाम्बिकां विषयदोपसंहारिणीम् ॥
सम्पूर्णविधुवन्मुखीं कमलमध्यसम्भाविनीम्।
शिरोदशशते दलेऽमृतमहाब्धिधाराधराम् ॥ ३२ ॥
साक्षादहं त्रिभुवनामृतपूर्णदेहाम्
सन्ध्यादिदेव कमलां कुलपण्डितेन्द्राम्।
नत्वा भजे दशशतेदलमध्यमध्ये
कौलेश्वरीं सकलदिव्यजनाश्रयां ताम् ॥ ३३ ॥
विश्वेश्वरीं स्वरकुले वरबालिकेत्त्वाम्
सिद्धासने प्रतिदिनं प्रणमामि भक्त्या।
भक्तिं धनं जयपदं यदि देहि दास्यं
तस्मिन् महामधुमतीं लघुनाहताः स्यात् ॥ ३४ ॥
एतत्स्तोत्रप्रसादेन कविता वाक्पतिर्भवेत्।
महासिद्धीश्वरो दिव्यो वीरभावपरायणः ॥ ३५ ॥
सर्वत्र जयमाप्नोति स हि स्यादेववल्लभः।
वाचामीशो भवेत्क्षिप्रं कामरूपीभवेन्नरः ॥ ३६ ॥

[1]पशुरेव महावीरो दिव्यो भवति निश्चितम् ।
सर्वविद्याः प्रसीदन्ति तुष्टाः सर्वे दिगीश्वराः ॥ ३७ ॥
वह्निः शीतलतां याति जलस्तम्भं स कारयेत् ।
धनवान् पुत्रवान् राजा इह काले भवेन्नरः ॥ ३८ ॥
परे च याति वैकुण्ठे कैलासे शिवसन्निधौ ।
मुक्तिरेव महादेव यो नित्यं सर्वदा पठेत् ॥ ३९ ॥
महाविद्या पदाम्भोजं सहि पश्यति निश्चितम् ।
शृणु नाथ प्रवक्ष्यामि कुमारीतर्पणादिकम् ॥ ४० ॥
यासां तर्पणमात्रेण कुलसिद्धिर्भवेद् ध्रुवम् ।
कुलवालां मूलपद्मस्थितां कामविहारिणीम् ॥ ४१ ॥
शतधामूलमन्त्रेण तर्पयामि तवप्रिये ।
मूलाधारमहातेजो जटामण्डलमण्डिताम् ॥ ४२ ॥
सन्ध्यादेवीं तर्पयामि कामबीजेन मे शुभे ।
मूलपङ्कजयोगाङ्गीं कुमारीं श्रीसरस्वतीम् ॥ ४३ ॥
तर्पयामि कुलद्रव्यैस्तव सन्तोषहेतुना ।
चक्रे मूलाधारपद्मे त्रिमूर्त्तिबालनायिकाम् ॥ ४४ ॥
सर्वकल्याणदां देवीं तर्पयामि परामृतैः ।
स्वाधिष्ठाने महापद्मेषड्दलान्तः प्रकाशिनीम् ॥ ४५ ॥
श्रीबीजेन तर्पयामि भोगमोक्षाय केवलम् ।
स्वाधिष्ठान कुलोल्लास विष्णुसंकेतगामिनीम् ॥ ४६ ॥
कालिकां निजबीजेन तर्पयामि कुलामृतैः ।
स्वाधिष्ठानाख्यपद्मस्थां महातेजोमयीं शिवाम् ॥ ४७ ॥
सूर्यगां शीर्षमधुना तर्पयामि कुलेश्वरीम् ।
मणिपूराब्धमध्ये तु मनोहरकलेवराम् ॥ ४८ ॥

---

१. क्रमशोऽप्यष्टसिद्धिः स्यात् वाग्मी भवति निश्चितम् क० ।

उमादेवीं तर्पयामि मायाबीजेन पार्वतीम् ।
मणिपूराम्भोजमध्ये त्रैलोक्यपरिपूजिताम् ॥ ४९ ॥
मालिनीं मल चित्तस्य सद्बुद्धिं तर्पयाम्यहम् ।
मणिपूरस्थितां रौद्रीं परमानन्दवर्धिनीम् ॥ ५० ॥
आकाशगामिनीं देवीं कुब्जिकां तर्पयाम्यहम् ।
तर्पयामि महादेवीं महासाधनतत्पराम् ॥ ५१ ॥
योगिनीं कालसन्दर्भां तर्पयामि कुलाननाम् ।
शक्तिमन्त्रप्रदां रौद्रीं लोलजिह्वासमाकुलाम् ॥ ५२ ॥
अपराजितां महादेवीं तर्पयामि कुलेश्वरीम् ।
महाकौलप्रियां सिद्धां रुद्रलोकसुखप्रदाम् ॥ ५३ ॥
रुद्राणीं रौद्रकिरणां तर्पयामि वधूप्रियाम् ।
षोडशस्वरसंसिद्धिं महारौरवनाशिनीम् ॥ ५४ ॥
महामद्यपानचित्तां भैरवीं तर्पयाम्यहम् ।
त्रैलोक्यवरदां देवीं श्रीबीजमालयावृताम् ॥ ५५ ॥
महालक्ष्मीं भवैश्वर्यं दायिनीं तर्पयाम्यहम् ।
लोकानां हितकर्त्रीञ्च हिताहितजनप्रियाम् ॥ ५६ ॥
तर्पयामि रमाबीजां पीठाद्यां पीठनायिकाम् ।
जयन्तीं वेदवेदाङ्गमातरं सूर्यमातरम् ॥ ५७ ॥
तर्पयामि सुधाभिश्च क्षेत्रज्ञां माययावृताम् ।
तर्पयामि कुलानन्दपरमां[1] परमाननाम् ॥ ५८ ॥
तर्पयाम्यम्बिकादेवीं मायालक्ष्मीहृदिस्थिताम् ॥ ५९ ॥
सर्वासां चरणद्वयाम्बुजतनुं चैतन्यविद्यावतीं ।
सौख्यार्थं शुभषोडशस्वरयुतां श्रीषोडशीसंकुलाम् ॥
आनन्दार्णवपद्मरागखचिते सिंहासने शोभिते ।
नित्यं तत् परितर्पयामि सकलं श्वेताब्जमध्यासने ॥ ६० ॥

१. पावनाम् क० ।

ये नित्यं प्रपठन्ति चारुसफलं स्तोत्रार्द्धसन्तर्पणम् ।
विद्यादाननिदानमोक्षपरमां मायामयं यान्ति ते ॥
नश्यन्ति क्षितिमण्डलेश्वरगणाः सर्वाविपत्कारका ।
राजानं वशयन्ति योगसकलं नित्या भवन्ति चणात् ॥ ६१ ॥
तर्पणात्मकमोक्षाख्यं पठन्ति यदि मानुषाः ।
अष्टैश्वर्ययुतो भूत्वा वत्सरात्तां प्रपश्यति ॥ ६२ ॥
महायोगीभवेन्नाथ मासादभ्यासतः प्रभो ।
त्रैलोक्यं क्षोभयेत्क्षिप्रं वाञ्छाफलमवाप्नुयात् ॥ ६३ ॥
भूमध्ये राजराजेशो लभते वरमङ्गलम् ।
शत्रुनाशे तथोच्चाटे बन्धने व्याधिसंकटे ॥ ६४ ॥
चातुरङ्गे तथा घोरे भये दूरस्थ[1] प्रेषणे ।
महायुद्धे नरेन्द्राणाम् पठित्वा सिद्धिमाप्नुयात् ॥ ६५ ॥
यः पठेदेकभावेन सन्तर्पणफलं लभेत् ।
पूजा साफल्यमाप्नोति कुमारीस्तोत्रपाठतः ॥ ६६ ॥
यो न कुर्यात्कुमार्यर्चां स्तोत्रञ्च नित्यमङ्गलम् ।
स भवेत् पाशवः कल्पो मृत्युस्तस्य पदे पदे ॥ ६७ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्युपचर्याविलासे सिद्धिमन्त्रप्रकरणे दिव्यभावनिर्णये अष्टमः पटलः ॥



१. भये दुःख प्रदर्शये क० ।

# नवमः पटलः

आनन्दभैरव[1] उवाच—

अथातः सम्प्रवक्ष्यामि कुमारीकवचं शुभम् ।
त्रैलोक्यं मङ्गलं नाम महापातकनाशकम् ॥ १ ॥
पठनाद्धारणाल्लोका महासिद्धाः प्रभाकराः ।
शक्रो देवाधिपः श्रीमान् देवगुरुर्बृहस्पतिः ॥ २ ॥
[2]महातेजोमयो वह्निर्धर्म्मराजो भयानकः ।
वरुणो देवपूज्यो हि जलानामधिपः स्वयम् ॥ ३ ॥
सर्वहर्त्ता महावायुः कुबेरः कुञ्जरेश्वरः ।
धराधिपः प्रियः शम्भोः सर्वे देवाः दिगीश्वरः ॥ ४ ॥
न मेरुः प्रभुरेकायाः सर्वेशो निर्मलो द्वयोः ।
एतत्कवचपाठेन सर्वे भूपा धनाधिपाः ॥ ५ ॥
प्रणवो मे शिरः पातु माया सन्दायिका सती ।
ललाटोद्र्ध्वं महामाया पातु मे श्रीसरस्वती ॥ ६ ॥
कामाक्षा वटुकेशानी त्रिमूर्त्तिर्भालमेव मे ।
चामुण्डा बीजरूपा च वदनं कालिका मम ॥ ७ ॥
पातु मां सूर्यगा नित्यं तथानेत्रद्वयं मम ।
कर्णयुग्मं कामबीजं स्वरूपोमातपस्विनी ॥ ८ ॥
रसनाग्रं तथा पातु वाग्देवी मलिनी मम ।
डामरस्था कामरूपा दन्ताग्रं कुब्जिका मम ॥ ९ ॥
देवी प्रणवरूपाऽसौ पातु नित्यं शिवा मम ।
ओष्ठाधरं शक्तिबीजात्मिका स्वाहास्वरूपिणी ॥ १० ॥

---

१. आनन्दभैरवी उवाच क० ।

२. सद्यः ग० ।

पायान्मे कालसन्दष्टा[1] पञ्चवायुस्वरूपिणी ।
गलदेशं महारौद्री पातु मे चापराजिता ॥ ११ ॥
क्षौं बीजं मे तथा कण्ठं रुद्राणी स्वाहयान्विता ।
हृदयं भैरवी विद्या पातु षोडश सुस्वरा ॥ १२ ॥
द्वौ बाहू पातु सर्वत्र महालक्ष्मीः प्रधानिका ।
सर्वमन्त्रस्वरूपं मे चोदरं पीठनायिका ॥ १३ ॥
पार्श्वयुग्मं तथा पातु कुमारी वाग्भवात्मिका ।
कैशोरी कटिदेशं मे मायाबीजस्वरूपिणी ॥ १४ ॥
जङ्घायुग्मं जयन्ती मे योगिनी कुल्लुकायुता ।
सर्वाङ्गमम्बिकादेवी पातु मन्त्रार्थगामिनी ॥ १५ ॥
केशाग्रं कमलादेवी नासाग्रं विन्ध्यवासिनी ।
चिबुकं चण्डिका देवी कुमारी पातु मे सदा ॥ १६ ॥
हृदयं ललिता देवी पृष्ठं पर्वतवासिनी ।
त्रिशक्तिः षोडशी देवी लिङ्गं गुह्यं सदावतु ॥ १७ ॥
श्मशाने चाम्बिका देवी गङ्गागर्भे च वैष्णवी ।
शून्यागारे पञ्चमुद्रा मन्त्रयन्त्रप्रकाशिनी ॥ १८ ॥
चतुष्पथे तथा पातु मामेव वज्रधारिणी ।
शवासनगता चण्डा मुण्डमालाविभूषिता ॥ १९ ॥
पातु माने कलिङ्गे च वैखरी शक्तिरूपिणी ।
वने पातु महाबाला महारण्ये रणप्रिया ॥ २० ॥
महाजले तडागे च शत्रुमध्ये सरस्वती ।
महाकाशपथे पृथ्वी पातु मां शीतला सदा ॥ २१ ॥
रणमध्ये राजलक्ष्मीः कुमारीकुलकामिनी ।
अर्द्धनारीश्वरा पातु मम पादतलं मही ॥ २२ ॥
नवलक्षमहाविद्या कुमारीरूपधारिणी ।
कोटिसूर्यप्रतीकाशा चन्द्रकोटिसुशीतला ॥ २३ ॥

---

१. सन्दर्भा ग० ।

पातु मां वरदा वाणी वटुकेश्वरकामिनी ।
इति ते कथितं नाथ कवचं परमाद्भुतम् ॥ २४ ॥
कुमार्याः कुलदायिन्याः पञ्चतत्त्वार्थपारग ।
यो जपेत् पञ्चतत्त्वेन स्तोत्रेण कवचेन च ॥ २५ ॥
आकाशगामिनी सिद्धिर्भवेत्तस्य न संशयः ॥ २६ ॥
वज्रदेही भवेत् क्षिप्रं कवचस्य प्रपाठतः ।
सर्वसिद्धीश्वरो योगी ज्ञानी भवति यः पठेत् ॥ २७ ॥
विवादे व्यवहारे च संग्रामे कुलमण्डले ।
महापथे श्मशाने च योगसिद्धो भवेत् स च ॥ २८ ॥
पठित्वा जयमाप्नोति सत्यं सत्यं कुलेश्वर ।
वशीकरणकवचं सर्वत्र जयदं शुभम् ॥ २९ ॥
पुण्यव्रती पठेन्नित्यं यतिश्रीमान्भवेद्ध्रुवम् ।
सिद्धविद्या कुमारी च ददाति सिद्धिमुत्तमाम् ॥ ३० ॥
पठेद्यः शृणुयाद्वापि स भवेत्कल्पपादपः ।
भक्तिमुक्तिं तुष्टिपुष्टिं राजलक्ष्मीं सुसम्पदाम् ॥ ३१ ॥
प्राप्नोति साधकश्रेष्ठो धारयित्वा जपेद्यदि ।
असाध्यं साधयेद्विद्वान् पठित्वा कवचं शुभम् ॥ ३२ ॥
[1]धनिनाञ्च महासौख्यधर्म्मार्थकाममोक्षदम् ।
यो वशी दिवसे नित्यं कुमारीं पूजयेन्निशि ॥ ३३ ॥
उपचारविशेषेण त्रैलोक्यं वशमानयेत् ।
पललेनासवेनापि मत्स्येन मुद्रया सह ॥ ३४ ॥
[2]नानाभक्ष्येण भोज्येन गन्धद्रव्येण साधकः ।
माल्येन स्वर्णरजतालङ्कारेण सुचैलकैः ॥ ३५ ॥
पूजयित्वा जपित्वा च तर्पयित्वा वराननाम् ।
यज्ञदानतपस्याभिः प्रयोगेण महेश्वर ॥ ३६ ॥

१. कुलीनानाम् क० ।
२. नाना क्षेत्रभवान्येव गन्धद्रव्याणि साधकः ग० ।

स्तुत्वा कुमारीकवचं यः पठेदेकभावतः ।
तस्य सिद्धिर्भवेत् क्षिप्रं राजराजेश्वरो भवेत् ॥ ३७ ॥
वाञ्छार्थफलमाप्नोति यद्यन्मनसि वर्तते ।
भूर्जपत्रे लिखित्वा स कवचं धारयेद् हृदि ॥ ३८ ॥
शनिमङ्गलवारे च नवम्यामष्टमीदिने ।
चतुर्दश्यां पौर्णमास्यां कृष्णपक्षे विशेषतः ॥ ३९ ॥
लिखित्वा धारयेद् विद्वान् उत्तराभिमुखो भवन् ।
महापातकयुक्तो हि मुक्तः स्यात् सर्वपातकैः ॥ ४० ॥
योषिद्वामभुजे धृत्वा सर्वकल्याणमालभेत् ।
बहुपुत्रान्विता कान्ता सर्वसम्पत्तिसंयुता ॥ ४१ ॥
तथाश्रीपुरुषश्रेष्ठो दक्षिणे धारयेद्भुजे ।
ऐहिकेदिव्यदेहः स्यात् पञ्चाननसमप्रभः ॥ ४२ ॥
शिवलोके परे याति वायुवेगी निरामयः ।
सूर्यमण्डलमाभेद्य परं लोकमवाप्नुयात् ॥ ४३ ॥
लोकानामतिसौख्यदं भयहरं श्रीपादभक्तिप्रदं
मोक्षार्थं कवचं शुभं प्रपठतामानन्दसिन्धूद्भवम् ।
पार्थानां कलिकालघोरकलुषध्वंसैकहेतुं जयम्
ये नाम प्रपठन्ति धर्ममतुलं मोक्षं व्रजन्तिक्षणात् ॥ ४४ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महायन्त्रोद्दीपने कुमार्युपचर्याविन्यासे कुमारीकवचोल्लासे सिद्धिमन्त्रप्रकरणे दिव्यभावनिर्णये नवमः पटलः ॥



# दशमः पटलः

आनन्दभैरव उवाच—

वद कान्ते सदानन्दस्वरूपानन्दवल्लभे ।
कुमार्या देवतामुख्याः परमानन्दवर्धनम् ॥ १ ॥
अष्टोत्तरसहस्राख्यं नाम मङ्गलमद्भुतम् ।
यदि मे वर्तते विद्ये यदि स्नेहकलामला ॥ २ ॥
तदा वदस्व कौमारीकृतकर्मफलप्रदम् ।
महास्तोत्रं कोटिकोटि कन्यादानफलं भवेत् ॥ ३ ॥

आनन्दभैरवी-उवाच—

महापुण्यप्रदं नाथ शृणु सर्वेश्वरप्रिय ।
अष्टोत्तरसहस्राख्यं कुमार्याः परमाद्भुतम् ॥ ४ ॥
पठित्वा धारयित्वा वा नरो मुच्येत सङ्कटात् ।
सर्वत्रदुर्लभं धन्यं धन्यलोकनिषेवितम् ॥ ५ ॥
अणिमाद्यष्टसिद्ध्यङ्ग[1] सर्वानन्दकरं परम् ।
मायामन्त्रनिरस्ताङ्गं मन्त्रसिद्धप्रदं नृणाम् ॥ ६ ॥
न पूजा न जपं स्नानं पुरश्चर्याविधिश्च न ।
अकस्मात् सिद्धिमवाप्नोति सहस्रनामपाठतः ॥ ७ ॥
सर्वयज्ञफलं नाथ प्राप्नोति साधकः क्षणात् ।
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रास्वरूपकम् ॥ ८ ॥
कोटिवर्षशतेनापि फलं वक्तुं न शक्यते ।
तथापि वक्तुमिच्छामि हिताय जगतां प्रभो ॥ ९ ॥
अस्याः श्रीकुमार्याःसहस्रनामकवचस्य
वटुकभैरवऋषिरनुष्टुपछन्दः ।
कुमारीदेवता सर्व मन्त्रसि-
द्धिसमृद्धये विनियोगः ॥ १० ॥

---

१. सर्वाङ्गम् क० ।

ॐ कुमारी कौशिकी काली कुरुकुल्ला कुलेश्वरी ।
कनकाभा काञ्चनाभा कमला कालकामिनी ॥ ११ ॥
कपालिनी कालरूपा कौमारी कुलपालिका ।
कान्ता कुमारकान्ता च कारणा करिगामिनी ॥ १२ ॥
कन्धकान्ता कौलकान्ता कृतकर्मफलप्रदा ।
कार्याकार्यप्रिया कक्षा कंसहन्त्री कुरुक्षया ॥ १३ ॥
कृष्णाकान्ता कालरात्रिः कर्णेषुधारिणीकरा ।
कामहा कपिला काला कालिका कुरुकामिनी ॥ १४ ॥
कुरुक्षेत्रप्रिया कौला कुन्ती कामातुरा कचा ।
कलञ्जभक्षा कैकेयी काकपुच्छध्वजा कला ॥ १५ ॥
कमला [1]कामलक्ष्मीश्च कमलाननकामिनी ।
कामधेनुस्वरूपा च कामहा काममर्दिनी ॥ १६ ॥
कामदा कामपूज्या च कामातीता कलावती ।
भैरवी कारणाढ्याच कैशोरीकुशलाङ्गला ॥ १७ ॥
कम्बुग्रीवा कृष्णनिभा कामराजप्रियाकृतिः ।
कङ्कणालङ्कृता कङ्का केवला काकिनी किरा ॥ १८ ॥
किरातिनी काकभक्षा करालवदना [2]कृशा ।
केशिनीकेशिहा केशा कासाम्बष्ठा करिप्रिया ॥ १९ ॥
कविनाथस्वरूपा च कटुवाणी कटुस्थिता ।
कोटरा कोटराक्षी च [3]करनाटकवासिनी ॥ २० ॥
कटकस्था काष्ठसंस्था कन्दर्पा केतकीप्रिया ।
केलिप्रिया कम्बलस्था कालदैत्यविनाशिनी ॥ २१ ॥
केतकीपुण्यशोभाढ्या कर्पूरपूर्णजिह्विका ।
कर्पूराकरकाकोला कैलासगिरिवासिनी ॥ २२ ॥

---

१. कमलाक्षी च क० ।
२. कुशा ख० ।
३. कूदंनो कटवासिनी क० ।

कुशासनस्था कादम्बा कुञ्जरेशी कुलानना ।
खर्वा खड्गधरा खड्गा खलहा खलबुद्धिदा ॥ २३ ॥
खञ्जना खररूपा च क्षाराम्लतिक्तमध्यगा ।
खेलना खेटककरा खरवाक्या खरोत्कटा ॥ २४ ॥
खद्योतचञ्चला खेला खद्योता खगवाहिनी ।
खेटकस्था खलाखस्था खेचरी खेचरप्रिया ॥ २५ ॥
खचरा खचरप्रेमा खलाढ्या खचरानना ।
खेचरेशी खरोग्रा च खेचरप्रियभाषिणी ॥ २६ ॥
खर्जूरासवसंमत्ता खर्जूरफलभोगिनी ।
खातमध्यस्थिताखाता खाताम्बुपरिपूरिणी ॥ २७ ॥
ख्यातिः ख्यातजलानन्दा खुलना खञ्जनागतिः ।
खल्वा खलतरा खारी खरोद्वेगनिकृन्तनी ॥ २८ ॥
गगनस्था च [1]भीता च गभीरनादिनी गया ।
गङ्गा गभीरा गौरी च गणनाथ प्रिया गतिः ॥ २९ ॥
गुरुभक्ता ग्वालिहीना गेहिनी गोपिनी गिरा ।
गोगणस्था गाणपत्या गिरिजा गिरिपूजिता ॥ ३० ॥
गिरिकान्ता गणस्था च गिरिकन्या गणेश्वरी ।
गाधिराजसुता ग्रीवा गुर्वी गुर्व्यम्बशाङ्करी ॥ ३१ ॥
गन्धर्व्वकामिनी गीता गायत्री गुणदागुणा ।
गुग्गुलुस्था गुरोः पूज्या गीतानन्दप्रकाशिनी ॥ ३२ ॥
गयासुरप्रियागेहा गवाक्षजालमध्यगा ।
गुरुकन्या गुरोः पत्नी गहना गुरुनागिनी ॥ ३३ ॥
गुल्फवायुस्थिता गुल्फा गर्दभा गर्दभप्रिया ।
गुह्या गुह्यगणस्था च गरिमा गौरिका गुदा ॥ ३४ ॥

---

१. गणातीता क० ।

गुदोर्ध्वस्था च गलिता गणिका गोलका गला ।
गान्धर्वी गाननगरी गन्धर्वगणपूजिता ॥ ३५ ॥
घोरनादा घोरमुखी घोरा घर्मनिवारिणी ।
घनदा घनवर्णा च घनवाहनवाहना ॥ ३६ ॥
घर्घरध्वनिचपला [1]घटाघटपटाघटा ।
घटिता घटना घोना घनरूपा घनेश्वरी ॥ ३७ ॥
घुण्यातीता घर्घरा च घोराननविमोहिनी ।
घोरनेत्रा घनरुचा घोरभैरवकन्यका ॥ ३८ ॥
घाताघातकहा घात्या घ्राणाघ्राणेशवायवी ।
घोरान्धकारसंस्था च घसना घस्वरा घरा ॥ ३९ ॥
घोटकेस्था घोटका च घोटकेश्वरवाहना ।
घननीलमणिश्यामा घर्घरेश्वरकामिनी ॥ ४० ॥
ङकारकूटसम्पन्ना ङकार चक्रगामिनी ।
ङकारी ङसशाचैव[2] ङीपनीताङकारिणी ॥ ४१ ॥
चन्द्रमण्डलमध्यस्था चतुरा चारुहासिनी ।
चारुचन्द्रमुखी[3] चैव चलङ्गमगतिप्रिया ॥ ४२ ॥
चञ्चला चपला चण्डी[4] चेकिताना चरुस्थिता ।
चलिता चानना चार्व्वी चारुभ्रमरनादिनी ॥ ४३ ॥
चौरहा चन्द्रनिलया चैन्द्री चन्द्रपुरस्थिता ।
चक्रकौला चक्ररूपा चक्रस्था चक्रसिद्धिदा ॥ ४४ ॥
चक्रिणी चक्रहस्ता च चक्रनाथकुलप्रिया ।
चक्रामेधा चक्रकुला चक्रमण्डलशोभिता ॥ ४५ ॥

---

१. घोटा घटपटी घटी ग० ।

२. ङशाशङापनिता ङकारिणी । क० ।

३. चारुचन्द्रा चन्द्रमुखी क० ।

४. चान्द्री क० ।

चक्रेश्वरप्रिया चेला चेलाजिनकुशोत्तरा ।
चतुर्वेदस्थिता चण्डा चन्द्रकोटिसुशीतला ॥ ४६ ॥
चतुर्गुणा चन्द्रवर्णा चातुरी चतुरप्रिया ।
चक्षुःस्था चक्षुवसतिश्चणका चणकप्रिया ॥ ४७ ॥
चार्व्वङ्गी चन्द्रनिलया[1] चलदम्बुजलोचना ।
चर्व्वरीशा चारुमुखी चारुदन्ता चरस्थिता ॥ ४८ ॥
चसकस्थासवा चेता चेतःस्था चैत्रपूजिता ।
चाक्षुषी चन्द्रमलिनी चन्द्रहासमणिप्रभा ॥ ४९ ॥
छलस्था छुद्ररूपा च छत्रच्छायाछलस्थिता ।
छलज्ञा छेश्वराछाया छाया छिन्नशिवा छला ॥ ५० ॥
छत्राचामरशोभाढ्या छत्रिणां छत्रधारिणी ।
छिन्नातीताछिन्नमस्ता छिन्नकेशा छलोद्भवा ॥ ५१ ॥
छलहा छलदा छाया छन्ना छन्नजनप्रिया ।
छलछिन्ना[2] छद्मवती छद्मसद्मनिवासिनी ॥ ५२ ॥
छद्मगन्धा छदाछन्ना छद्मवेशाछकारिका ।
छगला रक्तभक्षा च छागलामोदरक्तपा ॥ ५३ ॥
छगलण्डेशकन्या च छगलण्डकुमारिका ।
छुरिका छुरिककरा छुरिकारि विनाशिनी ॥ ५४ ॥
छिन्ननाशा छिन्नहस्ता छोणलोला छलोदरी ।
छलोद्वेगा छाङ्गबीजमालाछाङ्गवरप्रदा ॥ ५५ ॥
जटिला जठरश्रीदा जरा जङ्घप्रिया जया ।
जन्त्रस्था[3] जीवहा जीवा ज.यदा जीवयोगदा ॥ ५६ ॥
जयिनी जामलस्था च जामलोद्भवनायिका ।
जामलप्रियकन्या च जामलेशी जवाप्रिया ॥ ५७ ॥

---

१. चारुनिलया क० ।
२. छलाद्यक्ता छम्भवतां छम्भसम्भनिवासिनी । ख० ।
३ जन्तुस्था जावजा जीवा क० ।

जवाकोटिसमप्रख्या जवापुष्पप्रिया जना ।
जलस्था जागविषया जरातीता जलस्थिता ॥ ५८ ॥
जीवहा जीवकन्या च जनार्द्दनकुमारिका ।
जतुका जलपूज्या च जगन्नाथादिकामिनी ॥ ५९ ॥
जीर्णाङ्गी जीर्णहीना च जीमूतात्यन्तशोभिता ।
जामदा[1] जमदा जृम्भा जृम्भणास्त्रादिधारिणी ॥ ६० ॥
जघन्या जारजाप्रीता जगदानन्दवर्द्धिनी ।
जमलार्जुनदर्पघ्नी जमलार्जुनभञ्जिनी ॥ ६१ ॥
जयित्रिजगदानन्दा जामलोल्लाससिद्धिदा ।
जपमाला जाप्यसिद्धिर्जपयज्ञप्रकाशिनी ॥ ६२ ॥
जाम्बुवती जाम्बवतः कन्यकाजनवाजपा ।
जवाहन्त्री जगद्बुद्धिर्ज्जगत्कर्त्री जगद्गतिः ॥ ६३ ॥
जननी जीवनी जाया जगन्माता जनेश्वरी ।
झङ्कला झङ्कमध्यस्था झणत्कारस्वरूपिणी ॥ ६४ ॥
झणत्झणद्वह्निरूपा झननाझन्द्रीश्वरी ।
झटिताक्षाझरा झञ्झा झर्झराझरकन्यका ॥ ६५ ॥
झणत्कारी झना झन्ना झकारमालयावृता ।
झङ्कारी झर्झरी झल्ली [2]झल्वेश्वरनिवासिनी ॥ ६६ ॥
ञकारी ञकिराती च ञकारबीजमालिनी ।
ञनयोऽन्ता[3] ञकारान्ता ञकार परमेश्वरी ॥ ६७ ॥
ञान्तबीजपुटाकरा ञकले ञैकगामिनी ।
ञैकनेला ञस्वरूपा ञहारा ञहरीतकी ॥ ६८ ॥

---

१. जामातृ जयदा ज्येष्ठा जृम्भणास्त्रादि धारिणी क० ।

२. झल्लरेश्वर मालिनी' क० ।

३. ञनमोऽन्ता ञान्तकान्ता ञकारा ञपरेश्वरी क० ।

टुन्टुनी[1] टङ्कहस्ता च टान्तंवर्गा टलावती ।
टपलाटापबालाख्या टङ्कारध्वनिरूपिणी ॥ ६९ ॥
टलाती[2] टाक्षरातीता टित्कारादिकुमारिका ।
[3]टाङ्कास्त्रधारिणी टाना टमोटार्णलभाषिणी ॥ ७० ॥
टङ्कारी[4] विधना टाका टकाटकविमोहिनी ।
टंकारधरनामाहा टिवीखेचरनादिनी ॥ ७१ ॥
ठठङ्कारी[5] ठाठरूपा ठकारबीजकारणा ।
डमरु प्रियवाद्या च डामरस्था डबीजिका ॥ ७२ ॥
डान्तवर्गा डमरुका डरस्था डोरडामरा ।
डगराद्धा[6] डलातीता डदारुकेश्वरी डुता ॥ ७३ ॥
ढार्द्धनारीश्वरा ढामा ढक्कारी ढलना ढला ।
ढकेस्था[7] ढेश्वरसुता ढेमनाभाव ढोनना ॥ ७४ ॥
णोमाकान्तेश्वरी णान्तवर्गस्था णतुनावती ।
णनो माणाङ्ककल्याणी णाक्ष वीणाक्षबीजिका ॥ ७५ ॥
तुलसीतन्तु सूक्ष्माख्या तारल्या तैलगन्धिका ।
तपस्या तापससुता[8] तारिणी तरुणी तला ॥ ७६ ॥
तन्त्रस्था तारकब्रह्मस्वरूपा तन्तुमध्यगा ।
तालभक्षत्रिधामूर्त्तिस्तारका तैलभक्षिका ॥ ७७ ॥

---

१. टन्टुनी टङ्कहस्ता च टाङ्कवर्गा टनावती' क० ।

२. टनती क० ।

३. टङ्कास्त्र धारिणी टाभा टाभन वासिनी क० ।

४. टङ्कारनिधना टाका टङ्कारण विमोहिनी ।
टङ्कारध्वनि मोहा च टिटि खेचर नादिनी ।। क०

५. ठङ्कारी ठातुरुपा च ठकार बीजकारणा क० ।

६. डवर्गता डलातीता डकारकेश्वरी डुता क० ।

७. ढाकस्था ढेश्वर युता ढेमला भाढ्ढोलना क० ।

८. तापसंस्थाता क० ।

तारोग्रा तालमाला च तकरा तिन्तिड़ीप्रिया ।
तपसः तालसन्दर्भा तर्जयन्ती कुमारिका ॥ ७८ ॥
तोकाचारा तलोद्वेगा तक्षका तक्षकप्रिया ।
तक्षकालङ्कृता तोषा तावद्रूपा तलप्रिया ॥ ७९ ॥
तलास्त्रधारिणी तापा तपसां फलदायिनी ।
[1]तल्वल्वप्रहरालीता तलारिगणनाशिनी ॥ ८० ॥
तूला तौली तोलका च तलस्था[2] तलपालिका ।
[3]तरुणा तप्तबुद्धिस्थास्तप्ता प्रधारिणी तपा ॥ ८१ ॥
तन्त्रप्रकाशकरणी तन्त्रार्थदायिनी तथा[4] ।
तुषारकिरणाङ्गी च चतुर्धा[5] वा समप्रभा ॥ ८२ ॥
तैल[6] मार्गाभिसूता च तन्त्रसिद्धिफलप्रदा ।
ताम्रपर्णा ताम्रकेशा [7]ताम्रपात्रप्रियातमा ॥ ८३ ॥
तमोगुणप्रिया तोला तक्षकारिनिवारिणी[8] ।
तोषयुक्ता तमायाची[9] तमपोढेश्वर प्रिया ॥ ८४ ॥
तुलना तुल्यरुचिरा[10] तुल्यबुद्धिस्त्रिधा मतिः ।
तक्रभक्षा तालसिद्धिः तत्रस्थास्तत्र गामिनी ॥ ८५ ॥

---

१. तलप्रहारनिरता क० ।
२. तलस्थ जल पालिका क० ।
३. तरुणार्का तप्तबुद्धिस्तप्तोग्रधारिणी तथा । क० ।
४. 'तुषा' क० ।
५. 'तुषारांशु समप्रभा' क० ।
६. 'तालामार्गाभिभूता च' क० ।
७. 'ताम्रवर्णप्रिया मता' क० ।
८. 'तक्षवारि निवारिणी' क० ।
९. 'तमाषढ़ी तमोषाढेश्वरप्रिया' क० ।
१०. 'तुलना तुल्यरूपा च । क० ।

तलया तैलभा[1] ताली तन्त्रगोपनतत्परा ।
तन्त्र मन्त्र प्रकाशा च त्रिशरेणु स्वरूपिणी ॥ ८६ ॥
त्रिंशदर्थप्रिया तुष्टा तुष्टिस्तुष्टजनप्रिया ।
थकारकूटदण्डीशा[2] थदण्डीशप्रियाऽथवा ॥ ८७ ॥
थकाराक्षररूढाङ्गी थान्तवर्गाथकारिका ।
थान्ता थमीश्वरी थाका थकारबीजमालिनी ॥ ८८ ॥
[3]दक्षदामप्रिया दोषा दोषजालवनाश्रिता ।
दशादशनघोरा च देवीदास प्रिया दया ॥ ८९ ॥
दैत्यहन्त्रीपरा दैत्या दैत्यानां मर्द्दिनी दिशा ।
दान्ता दान्तप्रिया दासा दामना दीर्घकेशिका ॥ ९० ॥
दशना रक्तवर्णा च दरीग्रहनिवासिनी ।
देवमाता च दुर्लभा च दीर्घाङ्गा दासकन्यका ॥ ९१ ॥
दशनश्री दीर्घनेत्रा दीर्घनासा च दोषहा ।
दमयन्ती दलस्था च द्वेष्यहन्त्री दशस्थिता ॥ ९२ ॥
दैशेषिका दिशिगता दशनास्त्रविनाशिनी ।
दारिद्र्यहा दरिद्रस्था दरिद्रधनदायिनी ॥ ९३ ॥
दन्तुरा देशभाषा च देशस्था देशनायिका ।
द्वेषरूपा द्वेषहन्त्री द्वेषारिगणमोहिनी ॥ ९४ ॥
दामोदरस्थाननादा[4] दलानां बलदायिनी ।
दिग्दर्शना[5] दर्शनस्था दर्शनप्रियवादिनी ॥ ९५ ॥
दामोदरप्रिया दान्ता दामोदर कलेवरा ।
द्राविणी द्रविणी[6] दक्षा दक्षकन्या दलद्दढा ॥ ९६ ॥

१. 'तुलया तैलता तारी तन्त्रगोपाल तत्परा' क० ।
२. 'थकारकूटदन्तीश थदन्तीशप्रियाऽथवा' क० ।
३. 'दयादामप्रिया दोषा दोषजालैर्वनावृता' क० ।
४. 'दामोदरस्था दलना दलानां बलदायिनी' क० ।
५. 'दिग्दर्शन स्थान दर्शं दर्शन प्रियवादिनी' ग० ।
६. 'द्राविणीति दक्षा दक्षकन्या दलाद्दढा' ख ग० ।

दृढासनादासशक्तिर्द्वन्द्वयुद्धप्रकाशिनी[1] ।
दधिप्रिया दधिस्था च दधिमङ्गलकारिणी ॥ ९७ ॥
दर्पहा दर्पदा दृप्ता दर्भपुन्यप्रिया दधिः ।
दर्भस्था द्रुपदसुता द्रौपदी द्रुपदप्रिया ॥ ९८ ॥
धर्मचिन्ताधनाध्यक्षा धश्वेश्वर वरप्रदा ।
धनहाधनदाधन्वी धनुर्हस्ता धनुः प्रिया ॥ ९९ ॥
धरणीधैर्यरूपा च धनस्था धनमोहिनी ।
धीरा धीरप्रियाधारा धराधारणतत्परा ॥ १०० ॥
धान्यदा धान्यबीजा च धर्माधर्म स्वरूपिणी ।
धाराधरस्था धन्या च धर्मपुञ्जनिवासिनी ॥ १०१ ॥
धनाढ्यप्रियकन्या च धन्यलोकैश्च[2] सेविता ।
धर्मार्थकाममोक्षाङ्गी धर्मार्थकाममोक्षदा ॥ १०२ ॥
धराधरा धुरीणा च धवलाधवलामुखी ।
धरा च धामरूपा च ध्रुवाध्रौव्या ध्रुवप्रिया ॥ १०३ ॥
धनेशीधारणाख्या च धर्मनिन्दाविनाशिनी ।
धर्मतेजोमयी धर्म्म्याधैर्याग्रभर्गमोहिनी ॥ १०४ ॥
धारणाधौतवसना धस्तूरफलभोगिनी ।
नारायणी नरेन्द्रस्था नारायणकलेवरा ॥ १०५ ॥
नरनारायणप्रीता धर्मनिन्दा[3] नमोहिता ।
नित्या नापितकन्या च नयनस्था नरप्रिया ॥ १०६ ॥
नाम्नी नामप्रिया नारा नारायणसुता नरा ।
नवीननायकप्रीता नव्या नवफलप्रिया ॥ १०७ ॥

---

१. 'दुग्धवृद्धि प्रकाशिनी' क० ।

२. 'धन्यलोकनिशेविता' क० ।

३. 'नीतानयनमोहिता' क० ।

नवीनकुसुमप्रीता नवीनानां [1]ध्वजानुता ।
नारी निम्बस्थितानन्दानन्दिनी [2]नन्दकारिका ॥ १०८ ॥
नवपुष्पमहाप्रीता नवपुष्पसुगन्धिका ।
नन्दनस्था नन्दकन्या नन्दमोचप्रदायिनी ॥ १०९ ॥
नमिता नामभेदा च [3]नाम्नार्त्तवनमोहिनी ।
[4]नवबुद्धिप्रियानेका नाकस्था नामकन्यका ॥ ११० ॥
निन्दाहीना नवोल्लासा नाकस्थानप्रदायिनी ।
[5]निम्बवृक्षस्थिता निम्बा नानावृक्षनिवासिनी ॥ १११ ॥
नाश्यातीता नीलवर्णा [6]नीलवर्णासरस्वती ।
नभःस्था नायकप्रीता नायकप्रियकामिनी ॥ ११२ ॥
नैववर्णा निराहारा [7]निर्वीहाणां रजःप्रिया ।
निम्ननाभिप्रियाकारा[8] नरेन्द्रहस्तपूजिता ॥ ११३ ॥
नलस्थिता नलप्रीता नलराजकुमारिका ।
परेश्वरी परानन्दा परापरविभेदिका ॥ ११४ ॥
परमा परचक्रस्था पार्वती पर्वतप्रिया ।
[9]पारमेशी पर्वनाना पुष्पमाल्यप्रिया परा ॥ ११५ ॥
परा प्रिया प्रीतिदात्री प्रीतिः प्रथमकामिनी[10] ।
प्रथमा प्रथमा प्रीता पुष्पगन्धप्रिया परा ॥ ११६ ॥

---

१. 'नवीनानीरजानुजा' क० ।
२. 'नन्दकन्यका' क० ।
३. 'नाम्नातुरमोहिनी' क० ।
४. नवबुद्धिप्रियानैकान्तकस्थानाकन्यका क० ।
५. 'निम्बचक्षुः स्थिता निम्बा नानचेक्षनिवासिनी' ख० ।
६. 'नीलानीलसरस्वती' क० ।
७. 'निरीहा निरजप्रिया' क० ।
८. 'प्रभाकारा' ख० ।
९. 'परमेशी पर्वमाला' क० ।
१०. 'प्रथमकारिणी' क० ।

पौष्यी पानरतापीना पीनस्तनसुशोभना ।
[1]परमानरता पुंसां पाशहस्ता पशुप्रिया ॥ ११७ ॥
पललानन्दरसिका पलालधूमरूपिणी ।
पलाशपुष्पसंकाशा पलाशपुष्पमालिनी ॥ ११८ ॥
प्रेमभूता पद्मसुखी पद्मरागसुमालिनी ।
पद्ममाला पापहरा पतिप्रेमविलासिनी ॥ ११९ ॥
पञ्चाननमनोहारी[2] पञ्चवक्त्रप्रकाशिनी ।
फलमूलाशनाफाली फलदा फाल्गुनप्रिया ॥ १२० ॥
फलनाथप्रिया फल्ली फल्गुकन्या फलोन्मुखी ।
फेत्कारीतन्त्रमुख्या च फेत्कारगणपूजिता ॥ १२१ ॥
फेरवी फेरवसुता फलभोगोद्भवा फला ।
फलप्रिया फलाशक्ता फाल्गुनानन्ददायिनी ॥ १२२ ॥
[3]फालभोगोत्तराफेला फुलाम्भोजनिवासिनी ।
वसुदेवगृहस्था च वासवी वीरपूजिता ॥ १२३ ॥
विषभक्षा वुधसुता ब्लुङ्कारी ब्लूवरप्रदा ।
[4]ब्राह्मी वृहस्पतिसुता वाचस्पतिवरप्रदा ॥ १२४ ॥
वेदाचारा[5] वेद्यपरा व्यासवक्त्रस्थिता विभा ।
बोधज्ञा वौषडाख्या च वंशीवदनपूजिता ॥ १२५ ॥
वज्रकान्ता[6] वज्रगतिर्वदरीवंशवर्द्धिनी ।
भारती[7] भवरश्रीदा भवपत्नी भवात्मजा ॥ १२६ ॥

---

१ पयः पानरता पुष्टा पाशवस्था पशुप्रिया' क० ।
२. 'पञ्चाननपराभारि' क० ।
३. फलि भोगातुरा फेला फुल्लाम्भोजविलासिनी क० ।
४. वृहीवृहस्पति वाचा' ख० ।
५. 'वेदाचारी वेधपरा वासवक्त्रस्थिता विना' ख० ।
६. वज्रकान्ता वक्रगति ख० ।
७. 'भारती भारतश्रीदा भवपत्नी भवाम्बुजा' क० ।

भवानी भाविनी भीमा भिषग्भार्या तुरिस्थिता[1] ।
भूर्भुवःस्वःस्वरूपा च भृशार्त्ता[2] भेकनादिनी ॥ १२७ ॥
भौतीभङ्गप्रिया[3] भङ्गभङ्गहा भङ्गहारिणी ।
भर्त्ता भगवती भाग्या भगीरथनमस्कृता ॥ १२८ ॥
भगमालाभूतनाथेश्वरी भार्गवपूजिता ।
भृगुवंशा भीतिहरा भूमिर्भुजगहारिणी ॥ १२९ ॥
भालचन्द्राभभल्वबाला भवभूतिर्विभूतिदा ।
मकरस्था मत्तगतिर्मदमत्ता मदप्रिया ॥ १३० ॥
मदिराष्टादशभुजा मदिरा मत्तगामिनी ।
मदिरासिद्धिदा मध्या मदान्तर्गतिसिद्धिदा ॥ १३१ ॥
मीनभक्षामीनरूपा मुद्रामुद्गप्रिया गतिः ।
मुषला मुक्तिदा मूर्त्ता मूकीकरणतत्परा ॥ १३२ ॥
मृषार्त्ता मृगतृष्णा[4] च मेषभक्षणतत्परा ।
मैथुनानन्द सिद्धिश्च [5]मैथुनानलसिद्धिदा ॥ १३३ ॥
महालक्ष्मीभैरवी च महेन्द्रपीठनायिका[6] ।
[7]मनःस्था माधवीमुख्या महादेवमनोरमा ॥ १३४ ॥
यशोदा[8] याचना यास्या यमराजप्रिया यमा ।
यशोराशिविभूषाङ्गी यतिप्रेमकलावती ॥ १३५ ॥
रमणी रामपत्नी च रिपुहा रीतिमध्यगा ।
रुद्राणी रूपदारूपा रूपसुन्दरधारिणी ॥ १३६ ॥

---

१. 'भुवि स्थिता' क० ।
२. 'भूशार्ता' ग० ।
३. 'भैमी भोगवती भौती भङ्गदा भङ्गहारिण' क० ।
४. 'मृगदष्टा च' क० ।
५. 'मैथुनाह्लादसिद्धिदा' क० ।
६. 'पीठ पूजिका' क० ।
७. 'भल्लस्था' क० ।
८. 'यशोदा याचनी याभ्या' क० ।

रेतःस्था रेतसः प्रीता रेतःस्थाननिवासिनी ।
[1]रैन्द्रादेवसुतारेदा रिपुवर्गान्तकप्रिया ॥ १३७ ॥
रोमावलीन्द्रजननी रोमकूपजगत्पतिः[2] ।
रौप्यवर्णा रौद्रवर्णा रौप्यालङ्कारभूषणा ॥ १३८ ॥
रङ्गिणा रङ्गरागस्था[3] रणवह्निकुलेश्वरी ।
लक्ष्मीः लाङ्गलहस्ता च लाङ्गली कुलकामिनी ॥ १३९ ॥
लिपिरूपा लीढ़पादा लतातन्तुस्वरूपिणी ।
लिम्पती[4] लेलिहा लोला लोमशप्रियसिद्धिदा ॥ १४० ॥
लौकिकी लौकिकीसिद्धिर्लङ्कानाथकुमारिका ।
लक्ष्मणा [5]लक्ष्मीहीना च लप्रिया लार्णमध्यगा ॥ १४१ ॥
विवसा वसनावेशा विवस्थकुलकन्यका ।
वातस्था वातरूपा च वेलमध्यनिवासिनी ॥ १४२ ॥
श्मशानभूमिमध्यस्था श्मशानसाधनप्रिया ।
शवस्था परसिद्धयर्थी शववक्षसि शोभिता ॥ १४३ ॥
शरणागतपाल्या च शिवकन्या शिवप्रिया ।
षट्चक्रभेदिनीषोढ़ान्यासजालदृढानना ॥ १४४ ॥
सन्ध्यासरस्वती सुन्धा[6] सूर्यगा सारदा सती ।
हरिप्रिया हराहाला लावण्यस्था क्षमा क्षुधा ॥ १४५ ॥
क्षेत्रज्ञा सिद्धिदात्री च अम्बिका चापराजिता ।
आद्या इन्द्रप्रिया ईशा उमा ऊढ़ा ऋतुप्रिया ॥ १४६ ॥
सुतुण्डा स्वरबीजान्ता हरिवेशादिसिद्धिदा ।
एकादशीव्रतस्था च ऐन्द्री ओषधिसिद्धिदा ॥ १४७ ॥

---

१. 'रैन्द्रदेवसुतारैन्द्रथा' क० ।
२. 'रोमकूप जगंहती' क० ।
३. 'रङ्गिणीरङ्गरागस्था राजराज्ञि कुलेश्वरी' क० ।
४. 'लयन्ति' क० ।
५. 'लक्ष्महीना वा' क० ।
६. 'सूक्ष्मा' क० ।

औपकारी अंशरूपा अस्त्रबीजप्रकाशिनी ।
इत्येतत् कामुकीनाथ[1] कुमारीणां सुमङ्गलम् ॥ १४८ ॥
त्रैलोक्यफलदं नित्यमष्टोत्तरसहस्रकम् ।
महास्तोत्रं धर्मसारं धनधान्यसुतप्रदम् ॥ १४९ ॥
सर्वविद्याफलोल्लासं भक्तिमान् यः पठेत् सुधीः ।
स सर्वदा दिवारात्रौ स भवेन्मुक्तिमार्गगः ॥ १५० ॥
सर्वत्र जयमाप्नोति वीराणां वल्लभो लभेत् ।
सर्वेदेवा वशं यान्ति वशीभूताश्च मानवाः ॥ १५१ ॥
ब्रह्माण्डे ये च संशन्ति ते तुष्टा नात्र संशयः ।
ये वशन्ति च भूर्लोके देवतुल्यपराक्रमाः ॥ १५२ ॥
ते सर्वे भृत्यतुल्याश्च सत्यंसत्यं कुलेश्वर ।
अकस्मात् सिद्धिमाप्नोति होमेन यजनेन च ॥ १५३ ॥
जाप्येन कवचाद्येन महास्तोत्रार्थपाठतः ।
विना यज्ञैर्विनादानैर्विनाजाप्यैर्लभेत् फलम् ॥ १५४ ॥
यः पठेत् स्तोत्रकंनाम[2] चाष्टोत्तरसहस्रकम् ।
तस्य शान्तिर्भवेत् क्षिप्रं कन्यास्तोत्रं पठेत्ततः ॥ १५५ ॥
वारत्रयं प्रपाठेन राजानं वशमानयेत् ।
वारैकपठितो मन्त्री धर्मार्थकाममोक्षभाक् ॥ १५६ ॥
त्रिदिनंप्रपठेद्विद्वान् यदि पुत्रं समिच्छति ।
वारत्रयक्रमेणैव वारैकक्रमतोऽपि वा ॥ १५७ ॥
पठित्वा धनरत्नानामधिपः सर्ववित्तगः ।
त्रिजगन्मोहयेन्मन्त्री वत्सरादूर्ध्वप्रपाठतः ॥ १५८ ॥
वत्सरं वाप्य यदि वा भक्तिभावेन यः पठेत् ।
चिरजीवीखेचरत्वं प्राप्ययोगीभवेन्नरः ॥ १५९ ॥

---

१. 'कथितं नाथ' क० ।
२. 'स्तोत्रकमलम् अष्टोत्तर' क० ।

[1]महादूरस्थितंवर्णं पश्यति स्थिरमानसः ।
महिलामण्डले स्थित्त्वा शक्तियुक्तः पठेत् सुधीः ॥ १६० ॥
स भवेत्साधकश्रेष्ठः क्षीरी कल्पद्रुमो भवेत् ।
सर्वदा यः पठेन्नाथ भावोद्गतकलेवरः ॥ १६१ ॥
दर्शनात् स्तम्भनं कर्त्तुं क्षमोभवतिसाधकः ।
[2]जलादिस्तम्भनेशक्तो वह्निस्तम्भादिसिद्धिभाक् ॥ १६२ ॥
वायुवेगी महावाग्मी वेदज्ञो भवति ध्रुवम् ।
कविनाथो महाविद्यो वन्धकः पण्डितो भवेत् ॥ १६३ ॥
सर्वदेशाधिपो भूत्त्वा देवीपुत्रः स्वयं भवेत् ।
कान्तिं श्रियं यशो वृद्धिं प्राप्नोति बलवान् यतिः ॥ १६४ ॥
अष्टसिद्धियुतो नाथ यः [3]पठेदर्थसिद्धये ।
उज्जटेऽरण्यमध्ये च पर्वते घोरकानने ॥ १६५ ॥
वने वा प्रेतभूमौ च शवोपरिमहारणो ।
ग्रामे भग्नग्रहेवापि शून्यागारे नदी तटे ॥ १६६ ॥
गंङ्गागर्भे महापीठे योनिपीठे गुरोर्गृहे ।
धान्यक्षेत्रे[4] देवगृहे कन्यागारे कुलालये ॥ १६७ ॥
प्रान्तरे गोष्ठमध्ये वा राजादिभयहीनके ।
निर्भयादिस्वदेशेषु शिवलिङ्गालयेऽथवा ॥ १६८ ॥
भूतगर्त्ते चैकलिङ्गे वा शून्यदेशे[5] निराकुले कुले ।
अश्वत्थमूले विल्वे वा कुलवृक्षसमीपगे ॥ १६९ ॥
अन्येषु सिद्धदेशेषु कुलरूपाश्च साधकः ।
दिव्ये वा वीरभावस्थो यष्ठाकन्यां कुलाकुलैः ॥ १७० ॥

---

१. 'महाहवस्थिवर्ण' ग० ।
२. 'जलस्तम्भानिलस्तम्भवह्निस्तम्भादिसिद्धिभाक्' क० ।
३. 'आत्मसिद्धये' क० ।
४. 'धामक्षेत्रे' ग० ।
५. 'ग्राम्यदेवो' ग० ।

कुलद्रव्यैश्च विविधैः सिद्धिद्रव्यैश्च साधकः ।
मांसासवेन जुहुयान्मुक्तेन[1] रसेन च ॥ १७१ ॥
हुतशेषं कुलद्रव्यं ताभ्यो दद्यात् सुसिद्धये ।
तासामुच्छिष्टमानीय जुहुयाद् रक्तपङ्कजे ॥ १७२ ॥
घृणालज्जाविनिर्मुक्तः साधकः स्थिरमानसः ।
[2]पिबेन्मांसरसं मन्त्री सदानन्दो महाबली ॥ १७३ ॥
महामांसाष्टकं ताभ्यो मदिराकुम्भपूरितम् ।
तारो माया रमावह्निजायामन्त्रं पठेन्सुधीः ॥ १७४ ॥
[3]निवेद्यविधिनानेन पठित्वास्तोत्रमङ्गलम् ।
स्वयं प्रसादं भुक्त्वा हि सर्वविद्याधिपो भवेत् ॥ १७५ ॥
शूकरस्योग्रमांसेन पीनमीनेन मुद्रया ।
महासवघटेनापि दत्त्वा पठति यो नरः ॥ १७६ ॥
ध्रुवं स सर्वगामी स्याद् विनाहोमेन पूजया ।
रुद्ररूपीभवेन्नित्यं महाकालात्मको भवेत् ॥ १७७ ॥
सर्वपुण्यफलं नाथ [4]क्षणात् प्राप्नोति साधकः ।
क्षीराब्धिरत्नकोषेशो [5]वियव्यापी च योगिराट् ॥ १७८ ॥
भक्त्याह्लादं दयासिन्धुं निष्कामत्त्वं लभेद् ध्रुवम् ।
महाशत्रुपातने च महाशत्रुभयार्द्दिते ॥ १७९ ॥
वारैकपाठमात्रेण शत्रूणां वधमानयेत् ।
समर्दयेत् [6]शत्रून् क्षिप्रमन्धकारं यथा रविः ॥ १८० ॥
उच्चाटने मारणे च भये घोरतरेरिपौ ।
पठनाद्धारणान्मर्त्यो देवा वा राक्षसादयः ॥ १८१ ॥

---

१. 'मदाक्तकरसेन' ख० ।
२ 'मांसासवं मन्त्री' क० ।
३. 'नैवेद्यविधिदानेन' ख० ।
४. 'कुलात्' ख० ।
५. 'वियद्गामी' ग० ।
६. 'भक्त्यानादम्' ग० ।

प्राप्नुवन्ति झटित् शान्तिं कुमारीनामपाठतः ।
पुरुषो दक्षिणे बाहौ नारीवामकरे तथा ॥ १८२ ॥
धृत्वा पुत्रादिसम्पत्तिं लभते नात्रसंशयः ॥ १८३ ॥
ममाज्ञयामोक्षमुपैतिसाधको गजान्तकं नाथ सहस्रनाम च ।
पठेन्मनुष्योयदिभक्तिभावतस्तदा हि सर्वत्र फलोदयं लभेत् ॥१८४॥
मोक्षं सत्फलभोगिनां स्तववरं सारं परानन्ददम्
ये नित्यं हि मुदा पठन्ति विफलं सार्थश्च चिन्ताकुलाः ।
ते नित्याः प्रभवन्ति कीर्तिकमले श्रीरामतुल्यो जये
कन्दर्पायुततुल्यरूपगुणिनः क्रोधे च रुद्रोपमाः ॥ १८५ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्युपचर्या-
विन्यासे सिद्धमन्त्रप्रकरणे दिव्यभावनिर्णये
अष्टोत्तरसहस्रनाममङ्गलोल्लासे
दशमः पटलः ॥



# एकादशः पटलः

आनन्दभैरवी उवाच—

अथातः सम्प्रवक्ष्यामि दिव्यभावादिनिर्णयम् ।
यमाश्रित्यमहारुद्रो भुवनेश्वरनामधृक् ॥ १ ॥
यं ज्ञात्वा कमलानाथो देवतानामधीश्वर ।
चतुर्वेदाधिपो ब्रह्मा साक्षादुब्रह्म सनातनः ॥ २ ॥
बटुको ममपुत्रश्च शक्रः स्वर्गाधिदेवता ।
अष्टसिद्धियुताः सर्वे दिक्पालाः खेचरादयः ॥ ३ ॥
तत्प्रकारं महादेव आनन्दनाथभैरव ।
सुरानन्द हृदयानन्द ज्ञानानन्द दयामय ॥ ४ ॥
शृणुस्वैकमनानाथ यदित्वं सिद्धिमिच्छसि ।
ममप्रियानन्दरूप यतो मे त्वंतनुस्थितः ॥ ५ ॥
त्रिविधं दिव्यभावञ्च वेदागमविवेकजम् ।
वेदार्थमधमं सम्प्रोक्तं मध्यमं चागमोद्भवम् ॥ ६ ॥
उत्तमं सकलं प्रोक्तम् विवेकोल्लास सम्भवम् ।
तथैव त्रिविधं भावं दिव्यवीरपशुक्रमम् ॥ ७ ॥
दिव्यं विवेकजं प्रोक्तं सर्वसिद्धिप्रदायकम् ।
उत्तमं तद्विजानीयादानन्दरससागरम् ॥ ८ ॥
मध्यमं चागमोल्लासं वीरभावं क्रियान्वितम् ।
वेदोद्भवं फलार्थञ्च पशुभावं हि चाधमम् ॥ ९ ॥
सर्वनिन्दा समाव्याप्तं भावानामधमं पशोः ।
उत्तमे उत्तमं .ज्ञानं भावसिद्धिप्रदं नृणाम् ॥ १० ॥
मध्यमे मधुमत्याश्च मत्कुलागमसम्भवम् ।
अकालमृत्युहरणं भावानामतिदुर्लभम् ॥ ११ ॥

वीरभावं विनानाथ न सिद्ध्यति कदाचन ।
अधमे अधमा व्याख्या निन्दार्थवाचकं सदा ॥ १२ ॥
यदि निन्दा न करोति तदा तत्फलमाप्नुयात् ।
पशुभावेऽपि सिद्धिः स्यात् यदि वेदं सदाभ्यसेत् ॥ १३ ॥
वेदार्थचिन्तनं नित्यं वेदपाठध्वनिप्रियम् ।
सर्वनिन्दाविरहितं हिंसालस्य विवर्जितम् ॥ १४ ॥
लोभमोहकामक्रोधमदमात्सर्यवर्जितम् ।
यदिभावस्थितो मन्त्री पशुभावेऽपि सिद्धिभाक् ॥ १५ ॥
पशुभावं महाभावं ये जानन्ति महीतले ।
किमसाध्यं महादेव श्रमाभ्यासेन यान्ति तत् ॥ १६ ॥
श्रमाधीनं जगत् सर्वं श्रमाधीनाश्च देवताः ।
श्रमाधीनं महामन्त्रं श्रमाधीनं परन्तपः ॥ १७ ॥
श्रमाधीनं कुलाचारम् पशुभावोपलक्षणम् ।
वेदार्थज्ञानमात्रेण पशुभावं कुलप्रियम् ॥ १८ ॥
स्मृत्यागमपुराणानि वेदार्थविविधानि च ।
अभ्यस्य सर्वशास्त्राणि तत्त्वज्ञानात्तु बुद्धिमान् ॥ १९ ॥
पललमिवधान्यर्थी सर्वशास्त्राणि सन्त्यजेत् ।
ज्ञानीभूत्वा भावसारमाश्रयेत् साधकोत्तमः ॥ २० ॥
वेदे वेदक्रिया कार्या मदुक्तवचनादृतः[1] ।
पशूनां श्रमदाहानामिति लक्षणमीरितम् ॥ २१ ॥
आगमार्थक्रिया कार्या मत्कुलागमचेष्टया ।
वीराणामुद्धतानाञ्च मत् शरीरानुगामिनाम् ॥ २२ ॥
मच्चेच्छाकुलतत्त्वानामितिलक्षणमीरितम् ।
विवेकस्तत्र संज्ञाज्ञा कार्या सुदृढ चेतसाम् ॥ २३ ॥

---

१. 'वचनान्वितः' ग० ।

सर्वत्र समभावानां भावमात्रं हि साधनम् ।
सर्वत्र मत्पदाम्भोजसम्भवं सचराचरम् ॥ २४ ॥
पृष्ट्वा[1] यत्कुरुते कर्म चाखण्डफलसिद्धिदम् ।
अखण्डज्ञानचित्तानामिति भावं विवेकिनाम् ॥ २५ ॥
निर्मलानन्ददिव्यानामिति लक्षणमीरितम् ।
दिव्ये तु त्रिविधं भावं यो जानाति महीतले ॥ २६ ॥
न नश्यति महावीरः कदाचित् साधकोत्तमः ।
[2]दिव्यभावं विना नाथ मत्पदाम्भोजदर्शनम् ॥ २७ ॥
य इच्छति महादेव समूढः साधकः कथम् ।
पशुभावं प्रथमके द्वितीये वीरभावकम् ॥ २८ ॥
तृतीये दिव्यभावश्च दिव्यभावत्रयं क्रमात् ।
तत्प्रकारं शृणु शिव त्रैलोक्यपरिपावन ॥ २९ ॥
भावत्रयविशेषज्ञः षडाधारस्य भेदनः ।
पञ्चतत्त्वार्थभावज्ञो दिव्याचाररतः तदा ॥ ३० ॥
स एव भवति श्रीमान् सिद्धनामादिपारगः ।
शिववत् विहरेत् सोऽपि अष्टैश्वर्यसमन्वितः ॥ ३१ ॥
सर्वत्र शुचिभावेन आनन्दघनसाधनम् ।
प्रातःकालादिमध्याह्नकालपर्यन्तधारणम् ॥ ३२ ॥
भोजनञ्चोक्तद्रव्येण संयमादिक्रमेण वा ।
यः साधयति स सिद्धो दिव्यभावे पशुक्रमात् ॥ ३३ ॥
दिव्यभावे वीरभावं वदामि तत्पुनः शृणु ।
मध्याह्नादिकसन्ध्यान्तं शुचिभावेन साधनम् ॥ ३४ ॥

---

१. दृष्ट्वा ख० ।
२. क्रमेण दिव्यभावादिमाश्रित्य साधयेद् यदि ।
दिव्यभावे महासिद्धिं प्राप्नोति साधकोत्तमः ॥ क० ।

जपनं धारणं वापि चित्तमादाय यत्नतः ।
एकान्तनिर्जने देशे सिद्धो भवति निश्चितम् ॥ ३५ ॥
तत्कालं वीरभावार्थं भावमात्रं हि साधनम् ।
भावेन लभते सिद्धिं [1]वीरादन्यन्न कुत्रचित् ॥ ३६ ॥
रात्रौ गन्धादिसम्पूर्णस्ताम्बूलपूरिताननः ।
विजयानन्दसम्पन्नो जीवात्मपरमात्मनोः ॥ ३७ ॥
ऐक्यं चित्ते समाधाय आनन्दोद्रेकसंभ्रमः ।
यो जपेत् सकलां रात्रिं गतभीर्निर्जने गृहे ॥ ३८ ॥
स भवेत् कालिकादासो दिव्यानाद्युत्तमोत्तमः ।
एवं भावत्रयं ज्ञात्वा यः कर्म साधयेत्ततः ॥ ३९ ॥
अष्टैश्वर्ययुतो भूत्वा सर्वज्ञो भवति ध्रुवम् ।
भावत्रयाणां मध्ये तु [2]भावपुण्यार्थनिर्णयम् ॥ ४० ॥
शृणु नाथ प्रवक्ष्यामि सावधानाऽवधारय ।
अकस्मात् सिद्धिमाप्नोति ज्ञात्वा सङ्केतलाञ्छितम् ॥ ४१ ॥
यो जानाति महादेव तस्य सिद्धिर्न संशयः ।
द्वादशे पटले सूक्ष्मसङ्केतार्थं वदामि तत् ॥ ४२ ॥

आनन्दभैरवी उवाच—

एकादशे च पटले शुद्धभावार्थनिर्णयम् ।
भावेन लभ्यते सर्वं भावाधीनं जगत्त्रयम्[3] ॥ ४३ ॥
भावं विना महादेव न सिद्धिर्जायते क्वचित् ।
पशुभावाश्रयाणाञ्च अरुणोदयकालतः ॥ ४४ ॥
दशदण्डाश्रितं कालं प्रश्नार्थं केवलं प्रभो ।
चक्रं द्वादशराशेश्च मासद्वादशकस्य च ॥ ४५ ॥

---

१. भावादन्यद् ख० ।

२. भावपुष्टार्थं ख० ।

३. भावाधीनमिदं जगत् ख० ।

दशदण्डे विजानीयाद् भावाभावं विचक्षणः ।
अनुलोमविलोमेन पञ्चस्वरविभेदतः ॥ ४६ ॥
बाल्यकैशोरसौन्दर्यं यौवनं वृद्धसञ्ज्ञकम् ।
अष्टमितं क्रमाज्ज्ञेयो विधिः पञ्चस्वरः स्वयम् ॥ ४७ ॥
स्वकीयं नासिकाग्रस्थं पञ्चमं परिकीर्तितम् ।
यन्नासापुटमध्ये तु वायुर्भवति भैरव ॥ ४८ ॥
तन्नासापुटमध्ये तु भावाभावं विचिन्तयेत् ।
आकाशं वायुरूपं हि तैजसं वारुणं प्रभो ॥ ४९ ॥
पार्थिवं क्रमशो ज्ञेयं बाल्यास्तादिक्रमेण तु ।
वामोदये शुभा वामा दक्षिणे पुरुषः शुभः ॥ ५० ॥
वायूनां गमनं ज्ञेयं गगनाद्यधिरेव च ।
केवलं मध्यदेशे तु गमनं पवनस्य च ॥ ५१ ॥
तदाकाशं विजानीयाद् बाल्यभावं प्रकीर्तितम् ।
तिर्यग्गतिस्तु नासाग्रे वायोरुदयमेव ॥ ५२ ॥
केवलं भ्रमणं ज्ञेयं सर्वमङ्गलमेव च ।
किशोरं तद्विजानीयाद् वायौ तिर्यग्गतौ विभो ॥ ५३ ॥
केवलोर्द्ध्वनासिकाग्रे वायुर्गच्छति दण्डवत् ।
तत्तैजसं विजानीयाद् [1]गमनं बलवद् भवेत् ॥ ५४ ॥
तद्वृद्धगतभावञ्च विलम्बोऽधिकचेष्टया ।
प्राप्नोति परमां प्रीतिं वरुणाम्भोदये रुजाम्[2] ॥ ५५ ॥
यदाधो गच्छति क्षिप्रं किञ्चिद् ऊर्ध्वमगोचरम् ।
यदा करोति प्रश्वासं तदा रोगोल्बणोदयः ॥ ५६ ॥
पृथिव्या उन्नतं भाग्यं [3]योगातपप्रपीडितम् ।
अस्तमितं महादेव अनुलोमविलोमतः ॥ ५७ ॥

---

१. तदा व्यामोहमेव च ख० ।

२. वारुणोदयनीरुजम् ख० ।

३. रोगातप ख० ।

पवनो गच्छति चिप्रं वामदक्षिणभेदतः ।
वामनासापुटे याति पृथिवी जलमेव च ॥ ५८ ॥
सदा फलाफलं दत्ते मुदिता कुण्डमण्डले ।
तयोर्वै वायवी शक्तिः फलभागं तदा लभेत् ॥ ५९ ॥
यद्येवं वामभागे तु वामायाः प्रश्नकर्मणि ।
यदि तत्र पुमान्प्रश्नं करोति [1]वामगामिने ॥ ६० ॥
तदा रोगमवाप्नोति कर्महीनो भवेद् ध्रुवम् ।
यदि वायूदयो वामे दक्षिणे पुरुषः स्थितः ॥ ६१ ॥
तदा फलमवाप्नोति द्रव्यागमनदुर्लभम् ।
अकस्माद् द्रव्यहानिः स्यान्मनोगतफलापहम् ॥ ६२ ॥
[2]सुहृद्भङ्गविवादश्च भिन्नभिन्नोदये शुभम् ।
केवलं वरुणस्यैव पुरुषो दक्षिणे शुभम् ॥ ६३ ॥
अशुभं पृथिवीदक्षे भेदोऽयं वरदुर्लभः ।
सदोदयं दक्षिणे च वायोस्तैजस एव च ॥ ६४ ॥
आकाशस्य विजानीयात् शुभाशुभफलं प्रभो ।
यदि भाग्यवशादेव वायोर्मन्दा गतिर्भवेत् ॥ ६५ ॥
दत्तनाशामध्यदेशे तदा वामोदयं शुभम् ।
तदा वामे विचारश्च वायुतेजोद्वयस्य च ॥ ६६ ॥
ज्ञात्वोदयं विजानीयाद् मित्रे हानिः सुरे भयम् ।
एवं[3] सुभवनागारे यदि गच्छति वायवी ॥ ६७ ॥
तस्मिन् काले पुमान्दक्षो दक्षभागस्थसम्मुखः ।
तदा कन्यादानफलं यथा प्राप्नोति मानवः ॥ ६८ ॥

---

१. वामदक्षिणे क० ।

२. सुखभङ्ग क० ।

३. स्वनामावामे तु ख० ।

तदा वायुप्रसादेन प्राप्नोति धनमुत्तमम् ।
देशान्तरस्थभावार्त्ता[1] आयान्ति पुत्रसम्पदः ॥ ६९ ॥
बाल्यादिकं भावत्रयं राशिभेदे शुभं दिशेत् ।
एतच्चक्रे फलं तस्य राशिद्वादशचक्रके ॥ ७० ॥
सूक्ष्मं फलं विजानीयात् चक्रं नाम शृणु प्रभो ।
आज्ञाचक्रं कामचक्रं फलचक्रञ्च सारदम् ॥ ७१ ॥
[2]प्रश्नचक्रं भूमिचक्रं [3]स्वर्गचक्रं ततः परम् ।
तुलाचक्रं [4]वारिचक्रं षट्चक्रं त्रिगुणात्मकम् ॥ ७२ ॥
सारचक्रमुल्काचक्रं मृत्युचक्रं क्रमात्प्रभो ।
[5]षट्कोणं चात्र जानीयादनुलोमविलोमतः ॥ ७३ ॥
सर्वचक्रे स्वरज्ञानं सर्वत्र वायुसंगतिम् ।
सर्वप्रश्नादिसञ्चारं भावेन[6] जायते यदि ॥ ७४ ॥
तदा तद्दण्डमानञ्च ज्ञात्वा राश्युदयं बुधः ।
कुर्यात् प्रश्नविचारञ्च यदि कीर्तिमिहेच्छति ॥ ७५ ॥

इति रुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावप्रश्नार्थबोधनिर्णये पशुभाव-
विचारे सारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे
एकादशः पटलः ॥



---

१. देशान्तरक्षमारार्ता ख० ।

२. पुष्पचक्रम् क० ।

३. खड्ग चक्रम् क० ।

४. राशि चक्रम् ख० ।

५. षट् कालम् क० ।

६. भगवन् ज्ञायते यदि क० ।

# द्वादशः पटलः

आनन्दभैरवी उवाच—

तद्वामसन्धिदेशस्थमष्टमाङ्कमथो लिखेत् ।
तदधः सन्धिदेशस्थं सप्ताङ्कं विलिखेद्[1] बुधः ॥ १ ॥
तदूर्ध्वं[2] वामकोणे च तृतीयाङ्कं लिखेत्ततः ।
तदूर्ध्वं कोणगेहे च युग्माङ्कं विलिखेत्तथा ॥ २ ॥
तद्दक्षिणे गृहे चैकमङ्कवर्णं शृणु प्रभो ।
वसुभावं[3] शून्यभावं षष्ठभावञ्च शून्यकम् ॥ ३ ॥
एतन्मध्ये नास्ति वर्णं कोणाङ्कञ्च सवर्णकम् ।
[4]टतवर्गौ श श लिखेत् शरे शून्याध एव च ॥ ४ ॥
वेदाङ्कस्थौ कचवर्गौ एऐकारसमन्वितौ ।
तृतीयाङ्कस्थितं वर्णं आदिक्षान्तं टवर्गमौम् ॥ ५ ॥
[5]तपवर्गौ युगान्तस्थौ मकारं सावधानतः ।
विलिखेद्दक्षिणे तस्य गेहे चैकाङ्कमध्यके ॥ ६ ॥
उयुगं पतवर्गौ च अकारं युग्मशीर्षके ।
एतत्[6] चक्रं कामचक्रं प्रश्नकाले फलप्रदम् ॥ ७ ॥
वामावर्त्तेन गणयेत् दशकोणस्थवर्णकान् ।
अनुलोमविलोमेन पञ्चस्वरादिनामतः ॥ ८ ॥

---

१. महेश्वर क० ।
२. तद्दक्षिणे सन्धिभागे षडङ्कं कामचक्रके ।
तद्दक्षिणो सन्धौ च आकाशं सर्वपुण्यदम् ॥
शून्याधः कोणगेहे च स्वरञ्चापि विलोमतः ।
तद्वामकोणगेहे च वेदाङ्कं विलिखेद् बुधः ॥
३. वायुभावमन्यभावं षष्ठभावञ्च गुण्यकम् ग० ।
४. टतवर्गौ मूर्द्धनि लिखेत् शरं शून्याध एव च ख० ग० ।
५. उपवर्गौ……अकारम् ग० ख० ।
६. प्रोक्तम् ख० ग०, प्रश्नकार ख० ग० ।

यस्मिन्गृहे स्वीयनाम प्राप्नोति वेदपारगः ।
तद्गृहावधि प्रश्नार्थं गणयेद्[1] ग्रहसिद्धये ॥ ९ ॥
नवग्रहनवस्थानं वर्णं ज्ञात्वा सुबुद्धिमान् ।
बाल्यभावादिकं ज्ञात्वा यत्र ग्रहस्थितिर्भवेत् ॥ १० ॥
तन्नक्षत्रं समानीय द्वाराधिकारमानयेत् ।
विना त्रिकोणयोगेन [2]षट्कोणं लिखेद् बुधः ॥ ११ ॥
तन्मध्ये अष्टकोणञ्च भित्त्वा देवगृहान्तरम् ।
तन्मध्ये चापि षट्कोणं तन्मध्ये च त्रिकोणम् ॥ १२ ॥
क्रमेण विलिखेद् वर्णं दक्षिणावर्त्तयोगतः ।
ऊर्द्ध्ववामदेशभागे अ आ इ च कवर्गकम् ॥ १३ ॥
तद्दक्षिणे ई इ युगं टवर्गञ्च लिखेद् बुधः ।
दक्षपार्श्वे अधोभागे ऋयुगं ऋ तवर्गकम् ॥ १४ ॥
तदधो ऌ ॡ ए ऐ रूपञ्च पवर्गञ्च लिखेद् बुधः ।
तद्वामपर्श्वभागे च ओ औ यरलवान् लिखेत् ॥ १५ ॥
शेषगेहे लिखेदं अः शादिक्षान्तं हि षट्गृहे ।
[3]मध्यस्तमादिकोणे च एकाङ्कं सर्वकस्तुनुम् ॥ १६ ॥
रुद्राग्निमूर्तिमनिलं अग्निकोणे लिखेद् बुधः ।
यजमानः पशुपतिमूर्तिषष्ठञ्च दक्षिणे ॥ १७ ॥
महादेवं सोममूर्त्तिं सप्तमं नैर्ऋते लिखेत् ।
जलमूर्त्तिभवं युग्मं पश्चिमे विलिखेद् बुधः ॥ १८ ॥
उग्रवीरं वायुमूर्त्तिं वायुकोणे चतुर्थकम् ।
भीमरूपाकाशमूर्त्तिं पञ्चमं चोत्तरे लिखेत् ॥ १९ ॥

---

१. भाव ख० ।
२. न ख० ।
३. भूमादि क० ।

ईशानं सूर्यमूर्त्तिञ्च ईशाने[1] षड्दलं लिखेत् ।
अधः षट्कोणमध्ये च [2]षट्कोणं विलिखेत्ततः ॥ २० ॥
ऊद्र्ध्वकोणे ग्रीष्मकालं शिशिरञ्चापि दक्षिणे ।
वर्षाकालमधस्तस्य स सर्वाधश्च वसन्तकम् ॥ २१ ॥
शरत्कालं पञ्चकोशे शीतकालञ्चषष्ठके ।
त्रिकोणे चापि तन्मध्ये वह्निरूपं वकारकम् ॥ २२ ॥
लिखित्वा गणयेन्मन्त्री वर्णदेवाङ्कवह्निभिः ।
एतच्चक्रं [3]महासूक्ष्मं फलचक्रं विशारदम् ॥ २३ ॥
अधुना कुलनाथेश [4]पृष्ठचक्रं पुनः शृणु ।
विना ज्ञानेन यस्यैवं पृष्ठभावो[5] न जायते ॥ २४ ॥
यदि[6] पृष्ठचक्रभावं जानाति साधकोत्तमः ।
तदा निजफलं ज्ञात्वा सिद्धिमाप्नोति निश्चितम् ॥ २५ ॥

आनन्दभैरव[7] उवाच—

षट्कोणं कारयेन्मत्री विना त्रिकोणसाधनैः ।
तन्मध्ये च चतुष्कोणं तन्मध्ये शादिवर्णकान् ॥ २६ ॥
लिखित्वा विलिखेत्तत्र षडङ्कमध्यदेशतः ।
षडङ्कं दापयेन्मन्त्री दीर्घदीर्घक्रमेण तु ॥ २७ ॥
तदग्रे षड्गृहं कुर्यात्तत्राङ्कार्णान् लिखेत्सुधीः ।
ऊद्र्ध्वप्रथमगेहे च कवर्गं विलिखेद् बुधः ॥ २८ ॥
तद्दक्षिणे मन्दिरे च चवर्गं विलिखेद् बुधः ।
टवर्गं दक्षिणे चाधः सर्वाधस्तु तवर्गकम् ॥ २९ ॥

---

१. अष्टमं लिखेत् ख० ।
२. चाष्टकोणम् ख० ।
३. सिद्धथा ख० ।
४. राशि चक्रम् ख० ।
५. प्रश्नभारो ख० ।
६. प्रश्नचक्र ख० ।
७. आनन्दभैरव उवाच क० पुस्तके नास्ति ।

तद्वामे मन्दिरे नाथ पवर्गं वर्णमङ्गलम् ।
तदूर्ध्वे यादिवान्तं च दक्षिणावर्त्तयोगतः ॥ ३० ॥
अकारादिस्वरान् तत्र मन्दिरे विलिखेद् बुधः ।
यावत् स्वरस्थितिर्याति तावत्कालं विचारयेत् ॥ ३१ ॥
मेषादिराशिसद्भावं वर्गलेखनमानतः ।
अनुलोमविलोमेन विलिखेत् षष्ठमन्दिरे ॥ ३२ ॥
यद्यद्गृहे साध्यनाम चास्ति नाथ स्वरादिकम् ।
एकत्रीकृत्य हरणात् यदङ्कं[1] प्राप्यते वरम् ॥ ३३ ॥
षडङ्केन ततो नाथ हरेदनलसंख्यया ।
यदङ्कं प्राप्यते तत्र स राशिस्तत्क्षणस्य च ॥ ३४ ॥
आज्ञाचक्रं फलं सिद्धं विद्यानाथ वदामि तत् ।
येन विज्ञातमात्रेण सर्वज्ञो भवति ध्रुवम् ॥ ३५ ॥
अकस्मात् शक्तिमाप्नोति विद्यारत्नं ददामि तत् ।
रव्यादिसप्तवारश्च कृते भद्रविवर्धनम् ॥ ३६ ॥
शन्यादिसप्तवारं च त्रेतायां सौख्यवर्द्धनम् ।
गुर्वादिसप्तवारश्च द्वापरे धर्मसाधनम् ॥ ३७ ॥
शुक्रादिवारसप्तश्च कलौ युगफलप्रदम् ।
अतः शुक्रादिपर्यन्तं गणनीयं विचक्षणैः ॥ ३८ ॥
गणयेत् सप्तवारश्च मध्यचतुर्द्दले सुधीः ।
पूर्वादिक्रमतो वारान् गणयेद् तन्त्रवित्तमः ॥ ३९ ॥
निजवारो यत्र पत्रे समाप्तिस्तूद्भवश्च तत् ।
तद्धराशिं समानीय वर्णभेदं समानयेत् ॥ ४० ॥
सामान्यफलमूलञ्च वदा[र्णा]दिपत्रभेदतः ।
आज्ञाचक्रं शुभं मन्त्री आज्ञाचक्रं विचारयेत् ॥ ४१ ॥
तत्फलाफलमाहात्म्यं शृणु सङ्केतपण्डित ॥ ४२ ॥

---

१. हरेदङ्कं वाञ्छितम् ख०

आनन्दभैरव[1] उवाच—

दले पूर्वभागे आकारार्ध इन्दुस्फुटे
राज्यलाभं हकारान्तशब्दम् ।
समानार्थभावं विशिष्टार्थयोगं
क्रतुक्षेमयुक्तं तथा पुत्रलाभम् ॥ ४३ ॥
दयायुक्तभूषाश्रयत्वं जयत्वं
समाप्नोति मर्त्यो विवाहं सुवाहम् ।
सुखं नाथ लोकानुरागं सुभोगं
विभाधावकानां समासेक्षणादिम् ॥ ४४ ॥
पद्मे दक्षिणपत्रके प्रियपदा मोददहं भास्वरं
नानालक्षणदुःखदं शुचिपदा आन्दोलितस्तैरहम् ।
माहेन्द्रामृतयोगरागहननं साक्षाद्यमारोपणं
चित्तानां परिचञ्चलं खलगुणाह्लादेन सामोदितम्[2] ॥ ४५ ॥
पात्रार्थलाभं यदि वाध एव
प्रगच्छति क्रूरखलप्रतापः ।
तथापि हन्तुं न च वर्णमध्ये
क्षमः स्वसिद्धं भजते क्षमादि ॥ ४६ ॥
रसार्थप्रश्नं कुरुते यदि स्याद्
वारो हि चारोगृहमध्यभागे ।
स्वकीय इन्दुप्रियवद्भवेद्ध्रुवम्
मनोगतं सौख्यविवर्धनञ्च ॥ ४७ ॥
शत्रूणां हननं तदा कुलगतं सञ्चारवातं मुदा
रोगाणां परिमर्दनं प्रभुपदेभक्त्यर्थिनां ज्ञापनम् ।
अह्लादं हृदयाम्बुजेऽमृतधनं तीर्थागमं शोकहं
सूक्ष्मार्थं गणयेत्ततः प्रचपला वाग्देवतादर्शनम् ॥ ४८ ॥

---

१. आनन्दभैरवी उवाच क० ।

२. क० ।

आथर्वे पत्रमध्ये निवसति कमला कोमला वाद्यदात्री
आगन्तव्यादिवार्ता कथयति सहसा सर्वदा मङ्गलानि ।
नित्यावश्यं प्रतापं प्रियगणहितां प्रेमभावाश्रयत्त्वं
नित्यं कान्तामुखाम्भोरुहविमलमधुप्रेमपानाभिलाषम् ॥ ४९ ॥
मेषे तृप्तिमुपैति सिंह इषुभिः कुम्भेन तेषां फलं
लाभं कुञ्जरघातकेषु रजतं चौर्येण यद्रूयद्रूगतम् ।
एवं कास्यविहारणं शतपले सूर्योदयात्तिष्ठति
प्रातःकालफलाफलं कथयति श्रीकेशरीमध्यगः ॥ ५० ॥
पश्यादेकशतं पलेन्दु धनुषा व्याप्तं यदा भूतले
वित्तानां हरणं तदा जलगते मित्रस्य राज्यादिकम् ।
दूरस्थादिकथागतादिसमयं शत्रोर्महापीडनम्
वाञ्छावर्गकुलोदयं समुदयात् सूर्यस्य चागण्यते ॥ ५१ ॥
शेषे चैकशते फले समुदिते कुम्भो महादुर्ब्बली
दारिद्र्यस्य कथा कदा सुविषयं विद्यार्थभूषश्चयम् ।
लाभं देशविदेशकार्यगमनं शीघ्रं धनाद्यागमं
देवानां खलु दर्शनार्थकथनं व्यामोहसन्नाशनम् ॥ ५२ ॥
वारे शुक्रे शनिगतदिनलवटाहौ च सूर्ये
नित्यं ज्ञानोदयनिजपथआयुषां निर्णयं तत् ।
अष्टौवर्गानुदयति मुदा प्राप्यवीरो महत्त्वं
लोको दोषं प्रथमखचरे चायुषां पुष्टमात्रम् ॥ ५३ ॥

इति रुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावप्रश्नार्थ-
बोधनिर्णये वाशवकल्पे आज्ञाचक्रसारसङ्केते सिद्धमन्त्र-
प्रकरणे भैरवीभैरवसंवादे
द्वादशः पटलः ॥



# त्रयोदशः पटलः

आनन्दभैरवी[1] उवाच—

आज्ञाप्रश्नार्थभावञ्च वर्णविन्यासनिर्णयम् ।
अधुना शृणु सर्वज्ञ भावज्ञानपरायण ॥ १ ॥
यदि मेषे स्वनक्षत्रं स्ववारसंयुतं शुभम् ।
ज्ञात्वा शुभादिपत्रञ्च पलमानेन साधकः ॥ २ ॥
गणयेद्वर्णसारञ्च येन तत्प्रश्ननिर्णयः ।
पूर्वे दले ककारस्य वर्णभेदं शृणु प्रभो ॥ ३ ॥
मनसि सुखमूहं प्राणसौख्यार्थचिन्ता
वसनगमनलाभं प्रीतिपुत्रार्थयोग्यम् ।
स्थिरपदमपि देशे दर्शनं प्राणबन्धोः
सकलकलुषहानिश्चादिपत्रे ककारे ॥ ४ ॥

सदा नृनासिके सुखं सुखोल्वणस्य सेवनम्
सदाशिवे च भक्तिदं स्वकीयगेहसत्फलम् ।
कलाधरस्य दृष्टिभिः प्रधानलोकपूजनम्
हिताहितं न बाधते विवाहकेलिना सुखम् ॥ ५ ॥
ऋकारं विपदां ध्वंसं धैर्ये विद्याविबोधनम् ।
व्याधिपीडादुर्जनानां पीडाप्रश्नं वदेत्तदा ॥ ६ ॥
उकारे वायुभावस्य वृथागमनमेव च ।
दारिद्र्यहानयोर्याति दूरागमनदुर्लभम् ॥ ७ ॥
खकारे द्रव्यप्रश्नञ्च शुभकार्ये गते भयम् ।
आशुभयं समाप्नोति प्राप्य निर्धनतां व्रजेत् ॥ ८ ॥

---

१. आनन्दभैरव उवाच ख० ।

पञ्चत्वजिज्ञासनमेव सत्यं
नित्यं सुखानामुदयाय चेष्टा।
शत्रोर्विनाशाय हिताय बन्धोः
पकारकूटे परचौरचेष्टा ॥ ९ ॥

मारीभीतिविरोधनं धनपतेरानन्दपुञ्जोदयं
गोविद्याश्रियमाशु लाभविविधं धर्मार्थचिन्ताकुलम्।
हरिपूजा[1] हरिध्यानं हरिपादाम्बुजे रतिः
चौर्याहरणद्रव्यस्य न हानिर्जन्महार्दके ॥ ११ ॥

आकारे तैजसो हानिर्महाशब्दे विनाशनम्।
आगतानाञ्च हानिः स्यात् पक्षपातं गतौ जयम् ॥ १२ ॥
उशतोनिजगेहस्था उल्वणव्याधिपीडनम्।
उत्साहध्वंसशून्यञ्च पाठे पाण्डित्यमुल्वणम् ॥ १३ ॥
दीर्घऌकारवर्णे च लावण्यलोचनो नृपः।
लज्जानष्टक्षेमबुद्धिर्मित्रतुल्यप्रियो भवेत् ॥ १४ ॥
दीर्घप्रणवमोंकारे निराश्रयो न जीवति।
महदाश्रयमात्रेण सर्वं चूर्णं करोति हि ॥ १५ ॥

सिंहे कार्मुकमेषलग्नसमये नित्याशिषं प्राप्नुयात्
किञ्चिद्भाति पराक्रमी गतिमतां श्रेष्ठो भवेत् कर्मणि।
किञ्चिद्दोषकुलापहं नरपतेरुत्साहसंवर्धनं
क्रोधी नित्यपराक्रमी भवति सः शीघ्राभिलाषान्वितः ॥१६॥
अथ वक्ष्ये महादेववीराणामुत्तमोत्तम।
सर्वशास्त्रार्थतत्त्वज्ञ तत्त्वज्ञानपरायण ॥ १७ ॥

---

१. "कैवल्यादि समापनं निजमनो दुष्टव्यायहं कामिनां।
नानाभोगविनाशनं कनकरौप्यराजप्रदं स्वके॥
बालस्य पीडया दुःखी कणध्वंसिनृपाश्रयम्।
मरणं गमने क्षीवी लौल्यं लेख्यमरेचके॥" क०।

दक्षिणस्थदलस्यापि वर्णभेदार्थनिर्गमम् ।
फलमत्यन्तनिष्कर्षं वाञ्छावाक्यफलप्रदम् ॥ १८ ॥
कान्ते बीजे कमलनिलयागेहभागस्थिरायां
नानादेशभ्रमणभयदा नैव कुत्रापि सुस्था ।
चण्डोद्वेगापहसति खलानाञ्च हानिः प्रबुद्धो
वाणी वश्या वसति वदने चक्रिणां हानयः स्युः ॥ १९ ॥
चारुप्रतापं चरणौ गुरूणां
भक्तिर्दृढा स्याद्गमनेषु चारु ।
तदागतानां नृपतिप्रियाणां
सम्प्रेरणं चारुफलञ्च कूटे ॥ २० ॥
कान्तेषु कान्तावदनारविन्दे
सुषट्पदत्वं रमणीविलासम् ।
आयुक्षयोद्वेगविनाशकारणं
चाकर्षणं देशसुखं धनानाम् ॥ २१ ॥
टकारे धारणं देशे सुखं शेषे निशा मुखम् ।
विदेशस्थधनादीनां स्यादागमनमुत्तमम् ॥ २२ ॥
दकूटमधनं विना भवति विघ्नहानिः सदा
जयं स्वगृहकामिनी कमलनेत्रकान्ता यथा ।
सुसिद्धकरमेव हि प्रबलभावनातो भवेत्
भवे जयति मानुषस्तु पृष्टस्य जिज्ञासने ॥ २३ ॥
व्याख्यातं मुनिभिः फलं फलमयं कालं[1] रिपूणां सदा
लोकानां वशकारणं कुलवरो वेदागमे पारगः ।
प्राप्नोति प्रियपुत्रकं नरपतेरुत्साहसं कारणं
कार्ये दुर्जनपीडनं भयसमूहानां विनाशङ्कके[2] ॥ २४ ॥
यशसि वयसि तेजो बुद्धिरेव यकूटे
समयफलदभूपोल्लासवृद्धिः समृद्ध्या ।

१. कालम् ख० । २. विनाशङ्कं स्वके ख० ।

यजनमपि सुराणां चौर्यमात्रं न भूया-
दतिशयधनवृद्धिः क्रेयविक्रेयकाले ॥ २५ ॥

शीतकाले धनप्राप्तिः स्वर्णरौप्यादिलाभकम् ।
पुत्रप्राप्तिः सुखप्राप्तिः सङ्कटे वदति ध्रुवम् ॥ २६ ॥

लक्ष्मीः प्रियं धनं दातुं मुदिता भूमिमण्डले ।
जलेन जायते हानिर्लयं देवेन कूटके ॥ २७ ॥

प्रश्नाद्यक्षरमित्यादिस्वरमूलं हि यो नरः ।
जिज्ञासनं यदा कुर्यात् तदा स्यादुत्कटं फलम् ॥ २८ ॥
शृणु तत्तत् स्वरं नाथ एतत्पत्रस्थमाक्षयम् ॥ २९ ॥

इकारकूलमङ्गले धनादितृष्णयान्वितोः ।
विशेषधर्मलक्षणं धनश्चपैत्रिकं लभेत् ॥ ३० ॥
गतिप्रियं सुदेवता सुसम्पदं सदासुखम् ।
तथा हि सूक्ष्मबुद्धिभिः परास्तमाकरोदरिम् ॥ ३१ ॥
ईकारमपरप्रियं परमतध्वंससंवर्द्धनं ।
विदेशगमनं नहि प्रभवतीहवाद्यं दया ॥ ३२ ॥
जगज्जनमभिप्रियं तरुणदोषसम्माननं ।
विकाररहितं सुखं भवति पृष्ट आवेदके ॥ ३३ ॥
ए बीजे बद्धसन्तोषं कामनाफलसिद्धिदम् ।
वायुना हरणं चैव प्राप्नोति नृपमाननम् ॥ ३४ ॥
अमीत्येकाक्षरे बीजे बीजभूते जगत्पतेः ।
प्राप्नोति कन्यादानादिफलं वस्त्रश्च तैजसम् ॥ ३५ ॥
गोकन्यामकरे खगे खगचरता सौन्दर्यलक्ष्मीर्भवेत्
शेषे काञ्चनपुञ्जलाभमतुलं सन्तोषसारं गतौ ।
संसारे निजदायिकास्वजनता रत्नादिकं सञ्चयम्
सर्वं सञ्चयति प्रभो हितकरं प्रश्नार्थमाद्याक्षरे ॥ ३६ ॥

तृतीयदलमाहात्म्यं[1] यद्‌यद् वर्णे विचारयेत् ।
प्रश्नाद्यक्षरवर्णेषु नीत्वा च गगनं चरेत् ॥ ३७ ॥
तत्प्रकारं शृणु प्राणवल्लभ प्रेमपारग ।
यज्ज्ञानात्प्रश्नसिद्धिः स्यादकालफलदं नृपम् ॥ ३८ ॥
दृष्ट्वा ज्ञात्वा भावराशिमुत्तमाधममध्यमम् ।
लोकभावविधानज्ञो निजविद्यादिकं[2] तथा ॥ ३९ ॥
सर्वं विषयरूपेण भावसारं विचारयेत् ।
गबीजं मङ्गलं ज्ञेयं फलमत्यन्तभाग्यदम् ॥ ४० ॥
गतद्रव्यादिलाभश्च तथा लोकवशं फलम् ॥ ४१ ॥
दकारकूटे कठिनं रिपूणां विद्रावणं धर्मविनाशकस्य ।
भूमिपतेर्वा मरणं विनाशनं दिव्याङ्गनाया वररत्नलाभम् ॥४२॥
टकारे दूरगानाश्च दर्शनं भवति ध्रुवम् ।
उद्‌वाहं पुत्रसम्पत्तिः षष्ठमासेन लभ्यते ॥ ४३ ॥
टान्ते चौरभयं नास्ति तद्‌द्रव्यागमनं भवेत् ।
विधिविद्याप्रकाशेन शिवे विष्णौ च भक्तिमान् ॥ ४४ ॥
धकारकूटे धरणीपतित्वं व्याधेर्भयं नास्ति तथा पशोश्च ।
प्रवेशमात्रेण गतौ कलापि जीवादिसम्पत्तिमुपैति लक्ष्मीम् ॥४५॥
रबीजे सिद्धः सम्यक् खगकुलवरो धीरगमनं
वाञ्छातुल्यं विभवमतुलं राजराज्यप्रियं स्यात् ।
प्रतापं साम्राज्यं सकलहितगोलोकरसता
रसं सर्वं लोकं प्रियमतिसुखं लाभविविधम् ॥ ४६ ॥
चकारे[3] वह्निबीजे च जितं सर्वं चराचरम् ।
यथा [4]क्रमेण सर्वत्र गमने भाग्यदं फलम् ॥ ४७ ॥

---

१. राहित्यं यद्वा ख० ।
२. विद्यादिकम् ख० ।
३. वाकरे ख० ।
४. जयेन ख० ।

षकारमध्यमे देशे वार्त्तादिशादुपैति हि ।
पत्रिकागमनं [1]कार्यं यः करोति धनं लभेत् ॥ ४८ ॥
क्षकारे सख्यभावञ्च मित्रभावं यदा लभेत् ।
[2]सुप्रीतिश्च भवेत्तस्मात् तदा प्रश्नभयं न च ॥ ४९ ॥
स्वराज्ये च भवेत् सौख्यं पुष्पजिज्ञासकर्मणि ।
हसनान्ते तथा वर्णे पाचकं देहि चादिदम् ॥ ५० ॥
यदि स्याद्रुच्यते नाथ विपरीतफलं न च ॥ ५१ ॥
दीर्घीकारे विषयघटना नाथ पादे मतिः स्याद्
यद्यारम्भो भवति कुलनं दीर्घजीवी नरेन्द्रः ।
बालापत्यं गमयति मुदा कालदेशाधिकारी
लोकारण्ये सकलकलुषध्वंसहेतो मृगेन्द्रः ॥ ५२ ॥
सुखञ्चचारचाष्टमे महाधनेशसन्निधौ
प्रबुद्धवान् भवेन्नरः समाहितो भवेद् ध्रुवम् ।
विचित्रचातुरी यदा महाकुचोरगा प्रभो
प्रहस्यते क्षणादपि प्रभातसूर्यदर्शनात् ॥ ५३ ॥
अतीव धैर्यतां लभेत्
विचित्रवाग्भवेज्जयम् ।
जयेन सेवितं पुरा पुराण वाक्यलाभकं
जगज्जनादिसेवनं लभेत्······॥ ५४ ॥
न चाकुलागमं गयागभीरतुल्यसत्फलम् ।
सदा हि पुण्यसागरे गुरोः पदाम्बुजं लभेत् ॥ ५५ ॥
विसर्जनीये सुस्वरे समाप्तिकोमलान्वितम् ।
जनागमं धनागमं विशालवेदनान्वितम् ॥ ५६ ॥
मनोगतं कुबुद्धिदं स्वकीयबन्धुसज्जनम् ।
विसर्जनं कुलक्षणं भवेल्लभेत् कुबन्धनम् ॥ ५७ ॥
सकुलं निष्कुलं कान्तं विदुः श्रेष्ठा महर्षयः ।
हास्यसुखे हास्यफलं भावनायां भवेन्नहि ॥ ५८ ॥

---

१. क्रेयम् ख० । २. अप्रीतिश्च भवेत् तस्य तदा प्रश्नभयं न च ख० ।

क्रोधक्रमेणैव तदैव चक्षुषो-
विकारभावेन हरेत् समस्तम् ।
शीर्षे करौ चेत् कलिकालसंयुतम्
फलं हि लाभे वध एव भूषणम् ॥ ५९ ॥
शेषे वेददले वराभयकरे हारावशब्दापहा
दूरादागमनं भवेद्धि नियतं बालागणैरावृतम् ।
घोरापायविसर्जनं जलगुणाह्लादेन सामोदितम्
कूटे कूटघकारवर्गलहरी भासापभासारसे ॥ ६० ॥
जवर्गे जतुकं स्वर्णं जीवनोपायचिन्तनम् ।
जराव्याधिसमाक्रान्तं जीर्णवस्त्रापहारणम् ॥ ६१ ॥
ठकारकूटे यदि चक्रवर्ती
भूमण्डले स्यात्पततीति निश्चितम् ।
अन्तःसुखं हन्ति यदादिभावे
ठकारमात्रेण [1]रिपूत्तमो भवेत् ॥ ६२ ॥
आद्यप्रश्नाक्षरं नाथ तकारं तरुणप्रियम् ।
पापान्धकारपटलध्वंसाय कल्प्यते तदा ॥ ६३ ॥
नकारमाद्ये यदि प्रश्नवाग्मी
जिज्ञासमानो ध्रुवमर्थसञ्चयम् ।
आलापमात्रेण नरा वशा स्युः
प्रवेशनं राजकुलेन्द्रसन्निधौ ॥ ६४ ॥
भीतो भवति देशे च भयस्थाने न दुःखभाक् ।
भूषासम्पत्तिवृद्धिश्च भकारकूटमङ्गले ॥ ६५ ॥
लोकानुरागं सर्वत्र आद्यक्षरविचारतः ।
लकारस्यापि लोकेश भार्यादुःखं विमुञ्चति ॥ ६६ ॥
सकारे मैथुनं कान्ताकुलस्य कुलवर्द्धनम् ।
धनवृद्धिर्वंशवृद्धिः सरस्वतीकृपा भवेत् ॥ ६७ ॥

१. विभूत्तमो ख० ।

वेदपत्रे अकारस्य फलमाहात्म्यनिर्णयम् ।
शृणु नाथ प्रवक्ष्यामि सावधानाऽवधारय ॥ ६८ ॥
ककारादिक्षकारान्तं व्याप्य तिष्ठति तत्त्वतः ।
अकारेण विना शक्तिर्ज्जायते कुत्र न प्रभो ॥ ६९ ॥
अकारे ग्रथितं सर्वं चराचरकलेवरम् ।
यद्यकारमाद्यभागे प्रश्नजिज्ञासने भवेत् ॥ ७० ॥
कुफलेऽपि सत्फलानां सञ्चयं भवति ध्रुवम् ।
शत्रूणां वासहेतोर्धनादीनाञ्चैव सञ्चये ॥ ७१ ॥
अन्तर्यजनविद्यासु लोकस्यागमने तथा ।
निजदुःखानुतापे स्याद्यकारविधिरुच्यते ॥ ७२ ॥
उकारफलमाहात्म्यं शृणु प्रश्नार्थपण्डित ।
उषाकाले चौर्यप्रश्नमुल्लासं मानसोद्भमम् ॥ ७३ ॥
उत्तमस्थलवासञ्च उत्कृष्टभोजनादिकम् ।
उल्वणाबुद्धिरुत्पत्तिरुमादेवीपदे मतिः[1] ॥ ७४ ॥
रकारलक्षणं चक्षुः शब्दस्य वचनं भवेत् ।
लोचने दर्शनं स्त्रीणां लिखनं दूरसम्भवम् ॥ ७५ ॥
प्राप्नोति परमां लक्ष्मीं लोकवश्याय केवलम् ।
लाङ्गलानां सञ्चयश्च भूमिलाभो भवेद् ध्रुवम् ॥ ७६ ॥
ओकारे राज्यवृद्धिः स्यात् पुत्रवृद्धिस्तथैव च ।
सदा सन्तोषमाप्नोति प्रणवः सर्वसिद्धिदः ॥ ७७ ॥
मीने कर्कटराशिवृश्चिकतुले धर्माग्निभानूदये
गेहे वेदविचारणे शुभफलं श्रीलाभगत्युन्नतिं ।
विद्यावेद कथादिकं जयवतामानन्दसिन्धोः फलम्
प्राप्नोति प्रतिपत्तिसिद्धपदवीं मर्त्यो मुदा हर्षणम् ॥ ७८ ॥
पत्रप्रमाणं कथितं हीनविद्याविनिर्गमम् ।
पुनः शृणु महाकाल कलिकालस्य उद्भवम् ॥ ७९ ॥

---

१. उमा देवि पदे सति ख० ।

यद्यन्मासस्य प्रथमे तथा चाह्नोऽर्भकस्य च ।
दण्डद्वये शुभफलं प्रथमस्य महेश्वर ॥ ८० ॥
तृतीयैकदण्डमात्रं विपरीतफलप्रदम् ।
तत्र दण्डेषु नक्षत्रं यदि चेन्नाशुभं भवेत् ॥ ८१ ॥
अश्विन्याद्यष्टनक्षत्रं पूर्वप्रथमपत्रके ।
तत्सुतारं विजानीयात् दुष्टदोषे सुखं भवेत् ॥ ८२ ॥
अश्लेषाभादिचित्रान्तं द्वितीये दक्षिणे दले ।
तत्फलं विपरीताख्यं सफलेऽपि फलापहम् ॥ ८३ ॥
स्वात्यादिवसुनक्षत्रं तृतीयाधोदले लिखेत् ।
तत्सुतारं क्रमाज्ज्ञेयं नान्यथा शुभमानयेत् ॥ ८४ ॥
तत्फलार्थं कुत्सितश्च विपरीतफलस्थले ।
अशुभं तत्फलस्थाने कुफले सुफलं भवेत् ॥ ८५ ॥
उत्तराषाढकातारादिरेवत्यन्तमेव च ।
तत्फलन्तु भवेद् मर्त्यो यदि कर्मपरो भवेत् ॥ ८६ ॥
अथ वक्ष्ये महादेव अश्विन्यादिफलं प्रभो ।
यज्ज्ञात्वा देवताः सर्वा दिग्विदिक्ष्वादिरक्षिकाः ॥ ८७ ॥
तत्प्रकारं महापुण्यं देवदेव फलोद्भवम् ॥ ८८ ॥

त्रैलोक्ये सौख्यपूजां त्रिभुवनविदितां त्रैगुणाह्लादसिद्धां
सिद्धभ्रान्तो विशालो वरदविदलितां वेदनार्द्रापशङ्काम् ।
मन्दानां मन्दभाग्योपहगुणहननं हीनदीनापदाहां
लोकानां सत्फलानां फलगतवपुषा साश्विनी सा ददौ चेद् ॥ ८९ ॥

एवं क्रमेण देवेश तारकाणां फलाफलम् ।
पुनः पुनः शृणु प्राणवल्लभ प्रेमभावक ॥ ९० ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये पाशवकल्पे आज्ञाचक्रसारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे त्रयोदशः पटलः ॥



# चतुर्दशः पटलः

आनन्दभैरवी उवाच—

अथातः सम्प्रवक्ष्यामि योगमार्गेण शङ्कर।
भरण्यादिसप्तविंशान् नक्षत्रार्थं सुसत्फलम् ॥ १ ॥
तत्फलाफलमाहात्म्यं साक्षात्कारकलेः फलम्।
फलार्थं भरणीक्षेत्रं धर्मविद्यादिनिर्णयम् ॥ २ ॥
धर्मचिन्ताविनिर्बोधं गमनाभावमङ्गलम्।
मकारादिवर्णजातां प्राप्नोति भरणीं भके ॥ ३ ॥
कृत्तिकायां शादिवर्णं व्याधिशङ्करसंक्षयम्।
आरोग्याय धनस्यार्थे तत्र सूर्यं न चाचरेत् ॥ ४ ॥
या रोहिणी धनवतां धनहानयोर्न
प्राणप्रियं गणसुबुद्धविबुद्धिशुद्धिम्।
नागादिदोषशमनं क्षितिचक्रमध्ये
राजश्रियं विबुधशुद्धिमुपैति वृद्धिम् ॥ ५ ॥
मृगेन्द्रशीर्षगामिनी नरेन्द्रमन्दिरे निधिं
ददाति पापनिर्मले जले धन्यशून्यके।
भयं विवाहकालके कुले शुभं शुभेक्षणा
स्वकीयकिल्विषं दहेदनन्तबुद्धिसञ्चयम् ॥ ६ ॥
आर्द्राविद्रुमरूपिणी रतिकलाकोलाहलोल्लासिनी
सा मत्यार्पणमेव सम्प्रकुरुते काले फलालापनम्।
सौख्यं मुख्यसमृद्धिदा दरदलाम्भोजच्छटालिम्पटा
साधीरं परिरक्ष्यति प्रतिदिनं शान्तं दशान्तं दहेत् ॥ ७ ॥
पुनर्वसुसुतारिका तरुणरूपकूपा कृपा-
विशिष्टफलभावनारहितचित्तदोषापहा।

धनमन्तपरिमाणगं प्रचुरशोकसंघापहा
प्ररक्षति महाग्रहः परमपीडितं मानुषम् ॥ ८ ॥
पुण्या पौषमाकरोति सहसा तेजस्विनां कान्तिदा
कान्तायाः कनकादिलाभविपदां ध्वंसेन वंशादिदा ।
वाधायां फलदा मृगा मृगपतेरानन्दतुल्यं श्रियं
काद्या पञ्चमवर्णज्ञानललिता पातीह पुत्रं यथा ॥ ९ ॥
एतद्धि पूर्वपत्रान्ते तारामङ्गलदायिकाः ।
प्रतिभान्ति यथा चक्रे ग्रहाणां भ्रामणे शुभे ॥ १० ॥
विपरीतफलं नाथ प्राप्नोति पातके बहु ।
पुष्यायां स भवेत् क्रूरः कर्कटस्थोऽपि भास्करः ॥ ११ ॥
एतासां तारकाणाञ्च राशिदेवान् शृणु प्रभो ।
मेषः सिंहो धनुश्चैव अश्विन्यादिकदेवताः ॥ १२ ॥
येषां राशिस्थितं वर्णं न हानिर्विषयास्पदे ।
सर्वत्र जयमाप्नोति ग्रहे क्रूरेऽपि सौख्यदः ॥ १३ ॥
विभिन्नराशौ संभिन्नो धर्मनिन्दाविवर्जितः ।
[1]स्वनक्षत्रफलं ज्ञात्वा प्रश्नार्थं कोमलं वदेत् ॥ १४ ॥
तत्तन्नक्षत्रसुफलं कुफलं वा भवेद्यदि ।
तदा वर्णविचारञ्च कृत्वा [2]पुष्पं तदा वदेत् ॥ १५ ॥
अक्षमालाक्रमेणैव तद्वर्णानां विचारतः ।
तत्तद्वर्णविचारे तु यद्यत् सौख्यं प्रवर्त्तते ॥ १६ ॥
अधिके दोषजाले तु अधिकं दुःखमेव च ।
बहुसौख्यं नित्यसौख्यं प्राप्नोति साधकोत्तमः ॥ १७ ॥

---

१. अल्पजयमल्पकार्यंप्रधानफलमङ्गलम् ।
अल्पकर्मणि संसक्तो हीनबुद्ध्या विबोधनम् ॥
अथवा स्वस्वनक्षत्रं यदि यागादिसंयुतम् ।
तथापि फलमाप्नोति निन्दाधर्मविवर्जितः ॥ क० ।

२. प्रश्नं ग० ।

एतासां तारकाणान्तु वरान् शृणु यथाक्रमाम् ।
रव्यादिरविवारान्तं ताराणामधिपं शुभम् ॥ १८ ॥
अशुभश्च तथा रुद्र ज्ञात्वा प्रश्नार्थमावदेत् ।
तद्वारनिर्णयं वक्ष्ये पूर्वपङ्केरुहे दले ॥ १९ ॥
रवौ राज्यं बालकानां यदि प्रश्नं प्रियं फलम् ।
धर्मार्थलाभमेवं हि त्रयोविंशाधिके नरे ॥ २० ॥
संहितं परमानन्दं योगेन तत्त्वचिन्तनम् ।
इत्यादि रविवारस्य वृद्धानामशुभं शुभे ॥ २१ ॥
सोमे रत्नमुपैति देवकुसुमामोदेन पूर्णं सुखं
बालायां नवकन्यकाशुभफलं मुद्राभयार्थं लभेत् ।
कैवल्यार्थविचेष्टनं नृपवधूप्रेमाभिलाषं सदा
वाञ्छापुण्यसुखास्पदेषु विमला भक्तिश्च सोमे दिने ॥२२॥
पृथ्वीपुत्रो रुधिरवदनो बालघाली विशेषो
मुख्यं कार्यं दहति सहसा साहसं वासनायाम् ।
हन्ति प्रायो विफलघटितं शोकसन्तानसारं
[1]मोक्षं पुण्यं घटयति सदा मङ्गले भूमिवारे ॥ २३ ॥
बुधे वारमुख्ये महापुण्यपुञ्जं
समाप्नोति मर्त्यस्तथा दुर्बलश्च ।
सदा कालदोषं महाघोरदुःखं
रिपूणां धनीनां महावीर्यदर्पम् ॥ २४ ॥
सुराणां देवानां विविधधनलाभं वितरणं
प्रतापं सत्कीर्त्तिं क्रतुफलविशेषं विधिगतम् ।
जनानामानन्दं समरवसगतानन्दहृदये
प्रतिष्ठा सद्धर्मं गमयति मुदा वासनगुरौ ॥ २५ ॥
मन्दारमालान्वितदेहधारी नाकस्थले गच्छति देवनिष्ठः ।
हरेः पदे भक्तिमुपैति सत्यं प्रसाधनात् शुक्रसुवारकाले ॥२६॥

---

१, मुख्यम् ख० ।

शनैश्चरदिने भयं [1]भुवनदोषमोहान्वितं
क्षितिप्रियसुतप्रियं परमतारकं स्त्रीसुखम् ।
विशिष्टघननीरदं वयसि सिद्धिरर्द्धर्कजं
भजन्ति यदि मानुषाः सकलकामनादेः प्रभोः ॥ २७ ॥
पुनश्चरविवारगं फलमतीवदुःखास्पदं
प्रचण्डकिरणं सदा विकललोकरोगापहम् ।
तमेव परिभावनं परिकरोति यो वा नरो
[2]न नश्यति कदाचन प्रचुरतापशापाकरम् ॥ २८ ॥
कलाधरफलं शृणु प्रणवबाह्यसूक्ष्माश्रयं
समग्रखचराफलं फलवतां हि सञ्ज्ञाफलम् ।
गभीरवचनं नृपप्रियकरस्य रक्षाकरं
यदीन्दुभजनं यदा कलिशुभादिशम्भोऽकरोत् ॥ २९ ॥
द्वितीयदलमाहात्म्यं नक्षत्रमण्डलावृतम् ।
तत्तचाराफलं वक्ष्ये येन प्रश्नार्थनिर्णयः ॥ ३० ॥
अश्लेषा बहुदुःखवादनगतं व्यामोहशोभावृतं
नानाभृङ्गनिषेवणं धनवतां हानिः पदे सम्पदे ।
भूपानां परिवर्ज्जनं खलजनैराच्छादितं तापितं
सन्दद्यात् क्षितिजातिभाति नियतं कोलाहले नारके ॥ ३१ ॥
मघायां महेशि धनं हन्ति मध्ये
महोल्लासवृद्धिं भयं तस्य शत्रोः ।
क्षितिक्षोभहन्तारमेत्यन्तभावं
कुकामातुराणां सदा सङ्कारम् ॥ ३२ ॥
पूर्वफल्गुनिनक्षत्रे दूरगानां फलं पठेत् ।
अतिधैर्यं शत्रुपक्षे हानयो यान्ति निश्चितम् ॥ ३३ ॥

---

१. गुरुजनेषु दोषान्वितम् ख० ।
२. लभ्यते ख० ।

फलमुत्तरफल्गुन्या दीयते गतिरीश्वरी ।
यदि देवपरो नाथ तदा सर्वत्र सुन्दरम् ॥ ३६ ॥
हस्तामस्तकक्रीडया शुभविलोकत्रये भाग्यदा
रक्ताङ्गीगतिचञ्चलामलगुणाह्लादेन कल्याणदा ।
सा नित्यं प्रददाति रुक्मशतकं भक्ताय यज्ञार्थिने
नानाव्यञ्जनभोजनैरतिसुखी संज्ञासमूहं ददेत् ॥ ३७ ॥
ददाति वित्तं जगतीह चित्रा
मनोरथं व्याकुलतामलङ्कृता ।
कदाचिदेवं हि शरीरदुःखदं
न प्राप्नुयादीश्वरभक्तिमालभेत् ॥ ३८ ॥
अश्लेषानाथ शुक्रो विपदमपि कदा नो ददाति प्रदुःखं
दक्षे पत्रे त्रिहारोत्तरभयहराचण्डतापं न हन्ति ।
जीवः श्रीमानमोघांशाधनमपि विविधं ब्राह्मणः पीतवर्णः
पूर्वान्तः फल्गुनीशो विधुतनुजवरो नीलवर्णः [1]स्वपत्रम् ॥३९॥
कुरुते बहुसुखवित्तं उत्तरफल्गुनीनाथो मङ्गलेन ।
हस्तायाः पतिश्चन्द्रो विभवमनन्तं चित्रेशो रविः ॥ ४० ॥
अधस्तृतीयपत्रस्य नक्षत्राणि शृणु प्रभो ।
यासां वारविशिष्टानां प्रश्ननिष्कर्षसत्फलम् ॥ ४१ ॥
स्वातीं रविः पाति महोग्रतेजसा
विनाशकाले विपरीतबुद्धिदः ।
इन्दुर्विशाखां सुखदः सरस्वतीं
भुजोऽनुराधां विपदां प्रबाधाम् ॥ ४२ ॥
बुधो हि पायात् सकलार्थसाधिनीं
तथा हि मूलां सुखदाश्च जीवः ।
तदा धनार्थं प्रददाति शुक्रः
पूर्वान्विताऽऽषाढिकयाऽन्वितः सुखम् ॥ ४३ ॥

१. सुपुत्रम् ख० ।

चतुर्थपत्रं वामस्थं महामङ्गलकारणम् ।
अथर्ववेदरूपं तत् सर्वप्रश्नकथावृतम् ॥ ४४ ॥
विपरीते महद्दुःखं वर्णसौख्येऽपि हानयः ।
भवन्ति तारकाणाञ्च शुभदृष्ट्या महोदयाः ॥ ४५ ॥
तत्तारकानाथगुणं शुभाशुभफलप्रदम् ।
प्रश्नवर्णसमूहानां मतमालोक्य निर्णयम् ॥ ४६ ॥
शनिः पात्युत्तराषाढां हानिरूपां विपाकदाम् ।
दुःखदारिद्र्यसंयुक्तां देवनिष्ठेन बाधते ॥ ४७ ॥
रविः प्रपाति श्रवणां धनादिभिः
प्रधानदेवाश्रयनिर्विकल्पाम् ।
तथा धनिष्ठां फलदां सुधांशुः
कुजो विपत्तिं शतभिग्गणेशः ॥ ४८ ॥
पूर्वभाद्रपदानाथो बुधः काञ्चनवर्धनः ।
तथा लोकं महादेवोत्तरभाद्रपदापतिः ॥ ४९ ॥
बृहस्पतिः सुखोल्लासं रेवतीशस्तथा भृगुः ।
ददाति परमाह्लादं स्वस्वपत्रस्थराशिभिः ॥ ५० ॥
अभिजित्तारकं पाति शनिः श्रीमान् धनप्रदः ।
फलभागं मुदा दातुं शनीराजमृगान्तिके ॥ ५१ ॥
तच्चन्द्रोच्चस्थमितिके वदन्ति परमप्रियम् ।
राहुराजा ग्रहाः क्षेत्रे अभिजित् कालवेष्टितः ॥ ५२ ॥
तत्कालं सूक्ष्मतद्रूपं यो जानाति महीतले ।
सन्ध्याकालमिति ज्ञेयं शनिराहू सुखान्तयोः ॥ ५३ ॥
तत्सन्धिकालमेवं हि सत्त्वगुणमहोदयम् ।
तत्कुम्भकं विजानीयान्मदीयदेहसम्भवम् ॥ ५४ ॥
महासूक्ष्मक्षणं तद्धि कुण्डलीमण्डलं यथा ।
तस्याः प्रथमभागे च धारणाख्यः शनिः प्रभुः ॥ ५५ ॥

स्वयं ब्रह्मा मुदा भाति निरञ्जनकलेवरः ।
तस्याः शेषे रेचनाख्यः संहारविग्रहः शुचिः ॥ ५६ ॥
राहुरूपा स्वयं शम्भुः पञ्चतत्त्वविधानवित् ।
कालरूपी महादेवो विकटास्यो भयङ्करः ॥ ५७ ॥
सर्वपापानलं हन्ति चन्द्ररूपी सुधाकरः ।
कृष्णवर्णः कालयमः पुण्यापुण्यनिरूपकः ॥ ५८ ॥
द्वयोर्मध्ये सूक्ष्मरूपा तडित्कोटिसमप्रभा ।
महासत्त्वाश्रिता देवी विष्णुमायाग्रहाश्रिता ॥ ५९ ॥
अभिजित्तारका सूक्ष्मा सन्धिकाललया जया ।
कुम्भकाक्रान्तहृदया ग्रहचक्रपुरोगमा ॥ ६० ॥
नक्षत्रमण्डलग्राममध्यस्था तिथिषोडशी ।
अमामयी सूक्ष्मकला तरुणानन्दनिर्भरा ॥ ६१ ॥
अस्या आद्यभागसंस्थो ब्रह्मरूपी रजोगुणः ।
अस्याः शेषः कालरूपी तमोगुणलयप्रियः ॥ ६२ ॥
चन्द्रो ब्रह्मा शिवः सूर्यो महामायातनूत्तरः ।
आत्रेयी परमा शक्तिः सुषुम्नान्तरगामिनी ॥ ६३ ॥
मध्यस्था ब्रह्मशिवयोर्विधिशास्त्रस्य सिद्धिदा ।
यैर्ज्ञायते सर्वसंस्था सर्वानन्दहृदि स्थिता ॥ ६४ ॥
तैरानन्दफलोपेतैः सत्त्वसम्भोगकारिणी ।
महाविष्णुर्महामाया चन्द्रतारास्वरूपिणी ॥ ६५ ॥
मुक्तिदा भोगदा भोग्या शम्भोराद्या महेश्वरी ।
अज्ञानावृतता घोरान्धकारकालसंहारहंसिनी ॥ ६६ ॥
मन्दवायुप्रिया यस्य कल्पनार्थे च वीरहा ।
सा पाति जगतां लोकान् तस्याधीनमिदं जगत् ॥ ६७ ॥
नाकाले म्रियते कश्चिद् यदि जानाति वायवीम् ।
वायवी परमा शक्तिरिति तन्त्रार्थनिर्णयः ॥ ६८ ॥

सूक्ष्मागमनरूपेण सूक्ष्मसिद्धिं ददादि या ।
नराणां भजनार्थाय अष्टैश्वर्यजयाय च ॥ ६९ ॥
कथितं ब्रह्मणा पूर्वं शिष्याय तनुजाय च ।
लोभमोहकामक्रोधमदमात्सर्यहाय च ॥ ७० ॥
तत्क्रमं परमं प्रीतिवर्धनं भूतले प्रभो ।
आज्ञाचक्रस्य मध्ये तु वायवी परितिष्ठति ॥ ७१ ॥
चन्द्रसूर्याग्निरूपा सा धर्माधर्मविवर्जिता ।
[1]मनोरूपा बुद्धिरूपा शरीरं व्याप्य तिष्ठति ॥ ७२ ॥
आज्ञाद्विदलमध्ये तु चतुर्दशमुदाहृतम् ।
वेददले वेदवर्णं वादिशान्तं महाप्रभम् ॥ ७३ ॥
तदग्निरूपसम्पन्नम् ऋग्वेदादिसमन्वितम् ।
शृणु तद्वेदमाहात्म्यं क्रमशः क्रमशः प्रभोः ॥ ७४ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे भावप्रश्नार्थनिर्णये आज्ञाचक्र-
सङ्केते वेदप्रकरणे भैरवीभैरवसंवादे
चतुर्दशः पटलः ॥



१. मनोरूपं शरीरं हि व्याप्य तिष्ठति खेचरी ख० ।

# पञ्चदशः पटलः

आनन्दभैरवी[1] उवाच—

देवकार्यं वेदशाखापल्लवं [2]प्रणवं परम् ।
वदामि परमानन्दभैरवाह्लादमाशृणु ॥ १ ॥
आद्यपत्रे अकारश्च ऋग्वेदं परमाक्षरम् ।
ब्रह्माणं तं विजानीयाद आद्यवेदार्थनिर्णयम् ॥ २ ॥
वेदेन लभ्यते सर्वं वेदाधीनमिदं जगत् ।
वेदमन्त्रविहीनो यः शक्तिविद्यां समभ्यसेत् ॥ ३ ॥
स भवेद्धि कथं योगी कौलमार्गपरायणः ।

श्रीआनन्दभैरव उवाच—

ब्रह्मस्तोत्रं हि किं देवि ! ब्रह्मविद्या च कीदृशी ॥ ४ ॥
ब्रह्मज्ञानी च को वा स्यात् को वा ब्रह्मशरीरधृक् ।
तत्प्रकारं कुलानन्दकारिणि प्रियकौलिनि ॥ ५ ॥
वद शीघ्रं यदि स्नेहदृष्टिश्चेन्मयि सुन्दरि ।

श्रीआनन्दभैरवी उवाच—

तदेव ब्रह्मणः स्तोत्रं वायवीशक्तिसेवनम् ॥ ६ ॥
[3]सूक्ष्मरूपेण मग्ना या ब्रह्मविद्या प्रकीर्तिता ।
[4]सदा वायू प्राणरससूक्ष्मोन्मत्तप्रसन्नधीः ॥ ७ ॥

---

१. आनन्दभैरव उवाच ख० ।

२. देवकार्यात् देवशाखा ख० ।

३. ऋग्वेदस्थं परमहंसमण्डलारूढमीश्वरम् ।
वेदवक्त्रं वेदविद्या वेदकायं प्रकाशकम् ॥
श्रुतिकन्या वेदकन्या सुन्दरानन्दमाश्रिता ।
वायुकृष्टशरीरे च प्राणिनां वायवी श्रुतिः ॥ क० अ० पाठः ।

४. पानरस सूक्ष्मा प्रसन्नधीः । ख० ।

एकान्तभक्तिः श्रीनाथे ब्रह्मविद्या प्रकीर्तिता ।
अष्टाङ्गन्यासनिरतः सूक्ष्मसंचारहृत् शुचिः ॥ ८ ॥
[1]सदा विवेकमाकुर्याद् ब्रह्मज्ञानी प्रकीर्तितः ।
ब्रह्मानन्दं हृदि श्रीमान् शक्तिमाधाय वायवीम् ॥ ९ ॥
सदा भजति यो ज्ञानी ब्रह्मज्ञानी प्रकीर्तितः ।
विजयारससारेण विना वाह्यासवेन च ॥ १० ॥
वायव्यानन्दसंयुक्तो ब्रह्मज्ञानी प्रकीर्तितः ।
सदानन्दरसे मग्नः परिपूर्णकलेवरः ॥ ११ ॥
आनन्दाश्रुजलोन्मत्तो ज्ञातो ब्रह्मशरीरधृक् ।
[2]शक्तिः कुण्डलिनी देवी जगन्मातास्वरूपिणी ॥ १२ ॥
प्राप्यते यैः सदा भक्तैः [3]मुक्तिरेवागमं फलम् ।
आद्यपत्रे प्रतिष्ठन्ति वर्णजालसमाश्रिताः ॥ १३ ॥
वायवीशक्तयः कान्ता ब्रह्माण्डमण्डलस्थिताः ।
राशिनक्षत्रतिथिभिः [4]सर्वदोज्वलनायिकाः ॥ १४ ॥
भवानी ब्रह्मशक्तिस्था सा अवश्यमेवमाश्रयेत् ।
मासेन जायते सिद्धिः खेचरी वायुशोषणी ॥ १५ ॥
द्विमासे वज्रदेहः स्यात् क्रमेण वर्धयेत् पुमान् ।
द्विमासे कल्पसंयुक्तो यस्य सम्बन्धरूपतः ॥ १६ ॥
चैतन्या कुण्डली शक्तिर्वायवी बलतेजसा ।
चैतन्यसिद्धिहेतुस्था ज्ञानमात्रं ददाति सा ॥ १७ ॥

---

१. विवेकमत् कुर्यातः । ख० ।
२. एकान्तभक्तिः श्रीनाथे जीवात्मपरमात्मनि ।
विवेकी विचरेदेको ज्ञातो ब्रह्मशरीरधृक् ॥
वायवीं शक्तिमाश्रित्य सदा ध्यानपरायणः ।
वशी ज्ञानवसाच्छन्नो ज्ञातो ब्रह्मशरीरधृक् ॥
३. सर्वदा जननायिकाः ख० ।
४. भान्ति ब्रह्म सिद्धये सा ख० ।

ज्ञानमात्रेण मोक्षः स्याद् वायवी ज्ञानमाश्रयेत् ।
महाबली महावाग्मी वर्धते च दिने दिने ॥ १८ ॥
आयुर्वृद्धिः सदा तस्य जरामृत्युविवर्जितः ।
कुण्डलीकृपया नाथ विना किञ्चिन्न सिद्ध्यति ॥ १९ ॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
ततः परशिवो देव वायवी परिकल्पिता ॥ २० ॥
एते षट्शङ्करा सर्वसिद्धिदाः चित्तसंस्थिताः ।
सर्वे तिष्ठन्ति [1]पत्राग्रेऽमृतधारारसाप्लुताः ॥ २१ ॥
अधोमुखाः सूक्ष्मरूपाः कोटिसूर्यसमप्रभाः ।
ब्रह्ममार्गस्थिताः सर्वे सन्ति षट्चक्रमण्डले ॥ २२ ॥
आज्ञया अध एवं हि चक्रं द्वादशकं स्मरेत् ।
गलितामृतधाराभिराप्लुतं कुण्डलीप्रियम् ॥ २३ ॥
आग्नेयीं कुण्डलीं मत्वा अधोधाराभितर्पणम् ।
प्रकुर्वन्ति परानन्दरसिकाः षट्शिवाः सदा ॥ २४ ॥
चन्द्रमण्डलसञ्जाता जीवरूपधरा यथा ।
आत्मज्ञानसमाशक्ताः शक्तितर्पणतत्पराः ॥ २५ ॥
द्वितीयदलरूपं हि यजुर्वेदं कुलेश्वर ।
अकस्मात् सिद्धिकरणं विष्णुना परिमीलितम् ॥ २६ ॥
वज्रकोटिमहाध्वानघोरनादसमाकुलम् ।
हरिमीश्वरमीशानं वासुदेवं सनातनम् ॥ २७ ॥
सत्त्वाधिष्ठानविनयं चतुर्वर्गफलप्रदम् ।
वाञ्छातिरिक्तदातारं कृष्णं योगेश्वरं प्रभुम् ॥ २८ ॥
राधिका राकिणी देवी वायवीशक्तिलालितम् ।
महाबलं महावीरं शंखचक्रगदाधरम् ॥ २९ ॥
पीताम्बरं सारभूतं यौवनामोदशोभितम् ।
श्रुतिकन्यासमाक्रान्तं श्रीविद्याराधिकाप्रभुम् ॥ ३० ॥

---

१. मन्त्राधिष्ठानविलमम् ख० ।

दैत्यदानवहन्तारं शरीरस्य सुखावहम् ।
भावदं भक्तिनिलयं यदा सागरचन्द्रकम् ॥ ३१ ॥
गरुडासनसमारूढं मनोरूपं जगन्मयम् ।
यज्ञकर्मविधानज्ञं आज्ञाचक्रोपरि स्थितम् ॥ ३२ ॥
अधः परामृतरसपानोन्मत्तकलेवरः ।
साधको योगनिरतः स्वाधिष्ठानगतं यथा ॥ ३३ ॥
तदाकारं विभाव्याशु सिद्धिमाप्नोति शंकर ।
को वैष्णवो वाजिकः को धार्मिको वापि को शुचि ॥ ३४ ॥
को वा भवति योगी च तन्मे वद सुरेश्वरि ।

आनन्दभैरवी उवाच—

शङ्कर शृणु वक्ष्यामि कालनिर्णयलक्षणम् ॥ ३५ ॥
वैष्णवानां वैष्णवत्वं आज्ञाचक्रे फलाफलम् ।
आज्ञाचक्रं महाचक्रं यो जानाति महीतले ॥ ३६ ॥
तस्याऽसाध्यं त्रिभुवने न किञ्चिदपि वर्तते ।
सदा शुचिर्ध्याननिष्ठो मुहुर्जाप्यपरायणः ॥ ३७ ॥
स्मृतिवेदक्रियायुक्तो विधिश्रुतिमनुप्रियः ।
[1]सर्वत्र समभावो यो वैष्णवः परिकीर्तितः ॥ ३८ ॥
समता शत्रुमित्रेषु कृष्णभक्तिपरायणः ।
योगशिक्षापरो नित्यं वैष्णवः परिकीर्तितः ॥ ३९ ॥
यजुर्वेदाभ्यासरतः सदाचारविचारवान् ।
सदा साधुषु संसर्गो वैष्णवः परिकीर्त्तितः ॥ ४० ॥
[2]विवेकधर्मविद्यार्थी कृष्णे चित्तं निधाय च ।
शिववत् कुरुते कर्म वैष्णवः परिकीर्तितः ॥ ४१ ॥

---

१. ध्यात्वा यः कुरुते कर्म ख० ।
२. शिवे विष्णौ तुल्यभावं दुर्गामन्त्रपरायणः ।
ध्यात्वा यः कुरुते कर्म वैष्णवः परिकीर्तितः ॥ ख० ।

यज्ञिको ब्राह्मणो धीरो भवः प्रेमाभिलाषवान् ।
वनस्थो घोरविपिने नवीनतरुशोभिते ॥ ४२ ॥

एकाकी कुरुते योगं जीवात्मपरमात्मनोः ।
वाय्वशी रेचकः सूर्यः पूरकश्चन्द्रमा तथा ॥ ४३ ॥

ज्वलच्छिखा सूर्यरूपा न च योजनमेव च ।
पुनः पूरकयोगश्च चन्द्रस्य तेजसा हविः ॥ ४४ ॥

ऊद्धूर्ध्वविषा ज्वलद्वह्नौ वायवीवलचञ्चले ।
योऽनिशं कुरुते होमं मौनी याज्ञिक उच्यते ॥ ४५ ॥

[1]जीवसूर्याग्निकिरणे आत्मचन्द्राद्यपूरकैः ।
काये यः कुरुते होमं याज्ञिकः परिकीर्त्तितः ॥ ४६ ॥

सुरा शक्तिः शिवो मांसं तद्भोक्ता भैरवः स्वयम् ।
शक्त्यग्नौ जुहुयान्मांसं याज्ञिकः परिकीर्तितः ॥ ४७ ॥

विधिवत् कुलकुण्डे च कुलवह्नौ शिवात्मकैः ।
पूर्णहोमं यः करोति याज्ञिकः परिकीर्तितः ॥ ४८ ॥

भूमण्डले धर्मशीलो निर्जने कामवेश्मनि[2] ।
दृढभक्त्या जीवसारं[3] यो जपेत् स हि धार्मिकः ॥ ४९ ॥

[4]मणौ लोष्टे समं ध्यानं धर्मेऽधर्मे जयेऽजये ।
कृत्वा त्यागी भवेद्यस्तु ब्रह्मज्ञानीससाधकः[5] ॥ ५० ॥

सदा ईश्वरचिन्ता च गुरोराज्ञा व्यवस्थितिः ।
सुशीलो दीनबन्धुश्च धार्मिकः परिकीर्तितः ॥ ५१ ॥

---

१. तीव्र ख० ।

२. कान्त क० ।

३. बीजसारम् ख० ।

४. रत्ने ख० ।

५. स धार्मिकः ख० ।

२१

कालज्ञो विधिवेत्ता च [1]अष्टाङ्गयोगविग्रहः ।
पर्वते कन्दरे मौनी भक्तो योगी प्रकीर्तितः ॥ ५२ ॥
ब्रह्मज्ञानी चावधूतः [2]पुण्यात्मा सुकृती शुचिः ।
वाञ्छाविहीनो धर्मात्मा स योगी परिकीर्तितः ॥ ५३ ॥
वाग्वादिनीकृपापात्रः षडाधारस्य भेदकः ।
ऊर्ध्वरेता स्त्रीविहीनः स योगी परिकीर्तितः ॥ ५४ ॥
यजुर्वेदपुरोगामी यजुःपत्रस्थवर्णधृक् ।
वर्णमाला चित्तजापो भावुकः स हि योगिराट् ॥ ५५ ॥
मासद्वादशकग्रस्तं राशिद्वादशकान्वितम् ।
तिथिवारन्तु नक्षत्रयुक्तमाज्ञाम्बुजं भजेत् ॥ ५६ ॥
दिक्कालदेशप्रश्नार्थं वायवीशक्तिनिर्णयम् ।
वालवृद्धास्तादिदण्डपलनिश्वाससंख्यया ॥ ५७ ॥
व्याप्तमाज्ञाचक्रसारं भजेत् परमपावनम् ।
चक्रे सर्वत्र सुखदं सतां हानिर्न च प्रभो ॥ ५८ ॥
खलानां विपरीतश्च निन्दकानां पदे पदे ।
दुःखानि प्रभवन्तीह पापिनाञ्च फलाफलम् ॥ ५९ ॥
पापी पञ्चत्वमाप्नोति ज्ञानी याति परं पदम् ।
यः श्वासकालवेत्ता च स ज्ञानी परिकीर्तितः ॥ ६० ॥
श्वासकालं न जानाति स पापी परिकीर्तितः ।
यजुर्वेदं सत्त्वगुणं सत्त्वाधिष्ठाननिर्मलम् ॥ ६१ ॥
गुरोराज्ञाक्रमेणैव अधस्तत्त्वेन कुण्डलीम् ।
महाशक्तिं समाप्नोति ऊर्द्ध्वाधःक्रमयोगतः ॥ ६२ ॥
[3]यजुर्वेदमहापात्रसत्वाधिष्ठानसेवया ।
ललाटामृतधाराभिश्चैतन्या कुण्डली भवेत् ॥ ६३ ॥

---

१. अष्टाङ्गोज्ज्वल क० ।
२. कृतः सिद्धो वशी ख० ।
३. पत्रे क० ।

विभाव्य द्विदलं चक्रं होमं कुर्यादहर्निशम् ।
शुद्धाज्यैर्जुहुयान्मन्त्री अधस्तुण्डे कुण्डलीम् ॥ ६५ ॥
भजन्ति रुद्रेन्द्रिशुद्धयोगं[1]
प्रचण्डरश्मिप्रगताङ्गसुन्दराः ।
आज्ञाम्बुजं चक्रवरं चतुर्दलं
यन्मध्यदेशे शतकोटितेजसम् ॥ ६६ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये पाशव-कल्पे आज्ञाचक्रसारसङ्केते सिद्धमन्त्रप्रकरणे वेद-प्रकरणोल्लासे भैरवभैरवीसंवादे
पञ्चदशः पटलः ॥



---

१. योगिनम् ख० ।

# षोडशः पटलः

आनन्दभैरवी उवाच—

शृणुष्वानन्दरुद्रेश तृतीयदललक्षणम् ।
सामवेदमधश्चक्रं तमोगुणनिराकुलम् ॥ १ ॥
वर्णजालादिनाक्रान्तं रुद्ररूपं महेश्वरम् ।
लयस्थानं कामरूपं परमानन्दमन्दिरम् ॥ २ ॥
[1]वह्निवृत्तिसुखस्थानं विभाव्य योगिराड् भवेत् ।
तत्स्थानं योगिनां धर्मो गुरोराज्ञाफलप्रदम् ॥ ३ ॥
तत्पदाब्जं श्रीगुरूणां भ्रूमध्ये द्विदलाम्बुजे ।
मुहुर्मुहुः शनैर्ध्यायेत् समीरास्पदभास्वरम् ॥ ४ ॥
विभाव्य मनसा वाचा कर्मणा सूक्ष्मवायुना ।
लीनं कृत्वा सदा ध्यायेत् सदा हर्षकलेवरः ॥ ५ ॥
सहस्रारे यथा ध्यानं तद्ध्यानं द्विदलाम्बुजे ।
गुरुमात्मानमीशानं देवदेवं सनातनम् ॥ ६ ॥
अकस्मात् सिद्धिदातारं योगाऽष्टाङ्गफलप्रदम् ॥ ७ ॥
नित्यं शब्दमयं [2]प्रमाणविषयं नित्योपमेयं गुरुं
चन्द्रोल्लासतनुप्रभं शतविधूल्लासास्यपङ्केरुहम् ।
सर्वप्राणगतं गतिस्थमचलं ज्ञानाब्धिनिर्लेपनं
रूढालास्यगुणालयं लयमयं स्वात्मोपलब्धिं भजे ॥ ८ ॥
यदि भजेज्जगताममलेश्वरं स्मरहरं गुरुमीश्वरमात्मनि ।
परमसुन्दरचन्द्रसमाकुलं निपतिताद्यकुलानलसञ्चयम्[3] ॥ ९ ॥

---

१. वाङ्निवृत्ति ख० ।

२. प्रभाविषयगम् ख० ।

३. कुलानन ख० ।

प्रणमतां समतां कुरुते गुरो यदि भवान् विफलं परिहन्ति मे ।
तव पदाम्बुजमङ्कुतलीलया परिभजे भवसागरपारगम् ॥ १० ॥
गुरुपदं सितपङ्कजराजितं कनकनूपुरसुन्दरखञ्जनम् ।
रचितचित्रितचारुनखेन्दुकं भुवनभावनपावनमाश्रये ॥ ११ ॥
सकलसत्फलपालनकोमलं विमलशोणितपङ्कजमण्डितम् ।
पदतलं खलनिग्रहपालनं खचितरत्नधराचलनं भजे ॥ १२ ॥
सुकनकाजडितासनपङ्कजे परिभवं भवसागरसम्भवम् ।
यदि कृपा विभवेन्मयि पामरे व्यवतु मां तव पादतलं भजे॥१३॥
परमहंसमनुं [1]हररूपिणं सकलमक्षवसङ्गुरुमीश्वरम् ।
सकललक्षणचन्द्रमसःकरं तरुगुरोर्मुखपङ्कजमाश्रये ॥ १४ ॥
गुरोराज्ञाचक्रं भुवनकरणं केवलमयं
सकारं [2]नादेन्दुकुमुदहृदयं कामकलया ।
[3]लयस्थाने वायोर्नवमधुरसामोदमिलिते
दले वेदक्षेत्रे विधुविरहिते तत्र पदके ॥ १५ ॥
तमोगुणसमाक्रान्ते अधोमण्डलमण्डिते ।
द्विविन्दुनिलये स्थाने द्विदले श्रीगुरोः पदम् ॥ १६ ॥
महावह्निशिखाकारं तन्मध्ये चिन्तयेत् सुधीः ।
एतद्योगप्रसादेन बीजवाग्भवकूटकैः ॥ १७ ॥
चिरजीवी भवेत् क्षुद्रो वागीशत्वमवाप्नुयात् ।
श्रीगुरोश्चरणाम्भोजनिःसृतं यत् परामृतम् ॥ १८ ॥
तत्परामृतधाराभिः सन्तर्प्य कुलनायिकाम् ।
पुनः पुनः समाकुञ्च्य[4] प्रबुद्धान्तां स्मरेत् सदा ॥ १९ ॥

---

१. तनुरुपिणं क० ।

२. कुमुदहृदयाङ्गे ख० ।

३. लयापाङ्गे ख० ।

४. समाकृत्य क० ।

पर्यायत्त्वापररसं धारयेन्मारुतं सुधीः ।
[1]तत्परामृतधाराभिः सन्तर्प्य कुलनायिकाम् ॥ २० ॥
[2]ततः पुनः पुनः पात्यं सर्वपुण्यफलं प्रिये ।
धनरत्नमहालक्ष्मीः प्राप्नोति साधकोत्तमः ॥ २१ ॥
सर्वत्र जयमाप्नोति युद्धे क्रोधे महाभये ।
महायुधि स्थितो याति सुशीलो मोक्षमाप्नुयात् ॥ २२ ॥
इति ते कथितं नाथ ब्रह्मज्ञानमनुत्तमम् ।
आज्ञाचक्रत्रिखण्डस्य दलस्य कामरूपतः ॥ २३ ॥
सत्फलं समवाप्नोति विचार्य भावयेद्यदि ।
आज्ञाचक्रे त्रिखण्डे च कामरूपं महेश्वरम् ॥ २४ ॥
[3]चीनाचारसमाक्रान्तं श्मशानाधिपवेष्टितम् ।
कालं कालकरं चक्रं महाकालं कलानिधिम् ।
पलानुपलविपलद्दण्डतिथ्यादिपदपक्षकैः ॥ २५ ॥
मासवत्सरादियुगैर्महाकालैः समन्वितम् ।
उल्काकोटिसमं नेत्रं तीक्ष्णद्रंष्टं सुरेश्वरम् ॥ २६ ॥
कोटिकोटिनेत्रजालशोभिताननपङ्कजम् ।
चिद्रूपं सदसन्मुक्तिरूपिणं बहुरूपिणम् ॥ २७ ॥

---

१. एतत् स्तोत्रं ततः पाठ्यं सर्वपुण्यफलाप्तये क० ।

२. तत्परामृतमित्यतः प्रिये पर्यन्तम् क० ।

३. महारुद्रं धर्मलिङ्गं सर्वधर्मबहिष्कृतम् ।
अधर्मध्वान्तमिहिरं कोटिकोटिविधूद्भवम् ॥
विद्यारमणकामेशं हेमवाराणसीपुरम् ।
शुद्धकामकलाचिह्नं कोटिकोटिकलेवरम् ॥
सामवेदमहामन्त्रमूलास्यानुगतं शिवम् ।
कामलिङ्गं विन्दुलिङ्गं विसर्गपदभूषणम् ॥
परशिवं देवदेवं हाकिनीशक्तिमुक्तिदम् ।
कुलचूडामणिं सिद्धं बुद्धरूपिणमीश्वरम् ॥

ध्यात्वा त्वतिसुखेनैव कालरुद्रं परेश्वरम् ।
नासिकोद्र्ध्वे भ्रुवोर्मध्ये आज्ञाचक्रे महाप्रभो ॥ २८ ॥
विभाव्य परमं स्थानं तत्क्षणात्तन्मयो भवेत् ।
हाकिनीं भावयेन्मन्त्री रौरवादिविनाशिनीम् ॥ २९ ॥
कोटिसौदामिनीभासाममृतानन्दविग्रहाम् ।
[1]अभातत्त्वपूर्णशोभां हेमवाराणसीस्थिताम् ॥ ३० ॥
नानालङ्कारशोभाङ्गीं नवयौवनशालिनीम् ।
[2]पीनस्तनीं बलोन्मत्तां सर्वाधारस्वरूपिणीम् ॥ ३१ ॥
दीर्घप्रणवजापेन तोषयन्तीं त्रिविक्रमम् ।
मौनां मनोमयीं देवीं सर्वविद्यास्वरूपिणीम् ॥ ३२ ॥
महाकालीं महानीलां पीतवर्णां शशिप्रभाम् ।
त्रिपुरां सुन्दरीं वामां वामकामदुघां[3] शिवाम् ॥ ३३ ॥
ध्यायेदेकासने वामे परनाथस्य पावनीम् ।
सर्वाधारात्मिकां शक्तिं दुर्निवार्यां दुरत्ययाम् ॥ ३४ ॥
श्वासमात्रेण वसयेत् कुलमार्गं न पण्डितः ।
कुलाकुलविभागेन आत्मानं नीयते परे ॥ ३५ ॥
श्वासाभ्यासं विना नाथ अष्टाङ्गाभ्यसनेन च ।
विना दमेन धैर्येण कुलमार्गो न सिद्ध्यति ॥ ३६ ॥
तथा पूरकयोगेन रेचकेनापि तिष्ठति ।
विना कुम्भकसत्त्वेन यथैतौ नापि तिष्ठतः ॥ ३७ ॥
तथा योगं विना नाथ अष्टाङ्गाभ्यसनं विना ।
कुलमार्गो महातत्त्वो न सिद्ध्यति कदाचन ॥ ३८ ॥

---

१. अयुतेन्दु ख० ।
२. नवीन यौवनोन्मत्ताम् क० ।
३. कामहराम् क० ।

कुलमार्गं विना मोक्षं कः प्राप्नोति महीतले ।
कुलमार्गं न जानाति योगवाक्यागमाकुलम् ॥ ३९ ॥
स कथं पूजयेद्देवीं तस्य योगः कुतः प्रभो ।
[1]अज्ञात्वा वीरनाथमाचारं यः करोति हि ॥ ४० ॥
[2]तेषां बहुदिने योगशिक्षा भवति निश्चितम् ।
प्राणायामं महाधर्मं वेदानामप्यगोचरम् ॥ ४१ ॥
सर्वपुण्यस्य सारं हि पापराशितुलानलम् ।
महापातककोटीनां तत्कोटीनाञ्च दुष्कृतम् ॥ ४२ ॥
पूर्वजन्मार्जितं पापं नानादुष्कर्मपातकम् ।
नश्यत्येव महादेव षण्मासाभ्यासयोगतः ॥ ४३ ॥
सन्ध्याकाले प्रभाते च यः करोत्यप्यहर्निशम् ।
वशी षोडशसंख्याभिः प्राणायामान् पुनः पुनः ॥ ४४ ॥
संवत्सरं वशी ध्यात्वा खेचरो योगिराड् भवेत् ।
योगी भूत्वा कौलमार्गं समाश्रित्यामरो भवेत् ॥ ४५ ॥
महाविद्यापतिर्भूत्वा विचारात् साधकोत्तमः ॥ ४६ ॥

इति रुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये पाशवकल्पे आज्ञाचक्रसारसङ्केते सिद्धमन्त्रप्रकरणे भैरवभैरवीसंवादे षोडशः पटलः ॥



१. योगाभ्यासं सदा कुर्यात् कुलमार्गप्रसिद्धये ।
आदौ भूत्वा महायोगी कुलीनः प्रभवेत् ततः ॥
आदौ कुलाचारभावं यः करोति नराधमः ।
योगाभ्यासं विहायापि स भवेद् ब्रह्मराक्षसः ॥ क० ।

२. वज्रानले ख० ।

# सप्तदशः पटलः

आनन्दभैरवी उवाच—

अथ वक्ष्ये महादेव अथर्ववेदलक्षणम् ।
सर्ववर्णस्य सारं हि शक्त्याचारसमन्वितम् ॥ १ ॥
अथर्ववेदादुत्पन्नं सामवेदं तमोगुणम् ।
सामवेदाद्यजुर्वेदं महासत्त्वसमुद्भवम् ॥ २ ॥
रजोगुणमयं ब्रह्मा ऋग्वेदं यजुषः स्थितम् ।
[1]मृणालसूत्रसदृशी अथर्ववेदरूपिणी ॥ ३ ॥
अथर्वे सर्ववेदाश्च जलखेचरभूचराः ।
निवसन्ति महा विद्या विद्या[2] कुलविद्या महर्षयः ॥ ४ ॥
समाप्तिपत्रशेषार्थं समीमं लोकमण्डले ।
शक्तिचक्रसमाक्रान्तं दिव्यभावात्मकं शुभम् ॥ ५ ॥
तत्रैव वीरभावश्च तत्रैव पशुभावकम् ।
सर्वभावात् परं तत्त्वमथर्वं वेदपत्रकम् ॥ ६ ॥
द्विबिन्दुनिलयस्थानं ब्रह्मविष्णुशिवात्मकम् ।
चतुर्वेदान्वितं तत्त्वं शरीरं दृढनिर्मितम् ॥ ७ ॥
चतुर्विंशतितत्त्वानि सन्ति गात्रे मनोहरे ।
ब्रह्मा रजोगुणाक्रान्तः पूरकेणाभिरक्षति ॥ ८ ॥
विष्णुः सत्त्वगुणाक्रान्तः कुम्भकैः स्थिरभावनैः ।
हरस्तमोगुणाक्रान्तो रेचकेणापि विग्रहम् ॥ ९ ॥
अथर्ववेदचक्रस्था कुण्डली परदेवता ।
एतन्माया तु यो नैव ब्रह्मविष्णुशिवेन च ॥ १० ॥

---

१. शूकसूत्रसदृशी क० ।

२. विद्या क० ख० ।

शरीरं देवनिलयं भक्तं ज्ञात्वा प्रवक्ष्यति ।
सर्ववेदमयी देवी सर्वमन्त्रस्वरूपिणी ॥ ११ ॥
सर्वयन्त्रात्मिका विद्या वेदविद्याप्रकाशिनी ।
चैतन्या सर्वधर्मज्ञा स्वधर्मस्थानवासिनी ॥ १२ ॥
अचैतन्या ज्ञानरूपा हेमचम्पकमालिनी ।
अकलङ्का निराधारा शुद्धज्ञानमनोजवा ॥ १३ ॥
सर्वसङ्कटहन्त्री च सा शरीरं प्रपाति हि ।
तस्याः कार्यमिदं विश्वं तस्याः पुण्यानि हन्ति हि ॥ १४ ॥
तस्याश्चैतन्यकरणे सदा व्याकुलचेतसः ।
महात्मनः प्रसिद्धयन्ति यदि कुर्वन्ति चेतनाम् ॥ १५ ॥
तस्या अनुग्रहादेव किं न सिद्धयति भूतले ।
षण्मासाभ्यासयोगेन चैतन्या कुण्डली भवेत् ॥ १६ ॥
सा देवी वायवी शक्तिः परमाकाशवाहिनी ।
तारिणी वेदमाता च वहिर्याति दिने दिने ॥ १७ ॥
द्वादशाङ्गुलमानेन आयुः क्षरति नित्यशः ।
द्वादशाङ्गुलवायुश्च क्षयं कुर्याद्दिने दिने ॥ १८ ॥
यावद् यावद् वहिर्याति कुण्डली परदेवता ।
तावत्तावत्खण्डलयं भवेद्धि पापमोक्षणम् ॥ १९ ॥
यदा यदा न क्षरति वायवी सूक्ष्मरूपिणी ।
बाह्यचन्द्रे महादेव आग्नेयी सोममण्डले ॥ २० ॥
मूलाधारे कामरूपे ज्वलन्ती चण्डिका शिखा ।
यदा शिरोमण्डले च सहस्रदलपङ्कजे ॥ २१ ॥
तेजोमयी सदा याति शिवं कामेश्वरं प्रभुम् ।
अच्युताख्यं महादेवं तदा ज्ञानी स योगिराट् ॥ २२ ॥
यदि क्षरति सा देवी बाह्यचन्द्रे मनोलये ।
तदा योगं समाकुर्यात् यावत् शीर्षेण गच्छति ॥ २३ ॥

यदि शीर्षे समागम्यामृतपानं करोति सा।
वायवी सूक्ष्मदेहस्था सूक्ष्मालयप्रिया सती ॥ २४ ॥
[1]तदेव परमा सिद्धिर्भक्तिमार्गो न संशयः।
चतुर्वेदज्ञानसारं अथर्वं परिकीर्तितम् ॥ २५ ॥
अथर्ववेदविद्या च देवता वायवी मता।
तस्याः सेवनमात्रेण रुद्ररूपी भवेन्नरः ॥ २६ ॥
केवलं कुम्भकस्था सा एका ब्रह्मप्रकाशिनी।

भैरव उवाच—

केन वा वायवी शक्तिः कृपा भवति पार्वति ॥ २७ ॥
स्थिरचेता भवेत् केन विवेकी वा कथं भवेत्।
मन्त्रसिद्धिर्भवेत् केन कायसिद्धिः कथं भवेत् ॥ २८ ॥
विस्तार्य वद चामुण्डे आनन्दभैरवेश्वरी।

आनन्दभैरवी[2] उवाच—

शृणुष्वैकमनाः शम्भो मम प्राणकुलेश्वर ॥ २९ ॥
एकवाक्येन सकलं कथयामि समासतः।
श्रद्धया परया भक्त्या मनोनियमतत्परः ॥ ३० ॥
स प्राप्नोति पराशक्तिं वायवीं [3]सूक्ष्मरूपिणीम्।
धैर्यक्षमामिताहारी शान्तियुक्तो यतिर्महान् ॥ ३१ ॥
सत्यवादी ब्रह्मचारी दयाधर्मसुखोदयः।
मनसः संयमज्ञानी दिगम्बरकलेवरः ॥ ३२ ॥
सर्वत्र समबुद्धिश्च परमार्थविचारवित्।
शरशय्या भूमितले वायवीं परमामृतम् ॥ ३३ ॥

---

१. रूपिणी ग०।
२. आनन्द भैरव ग०।
३. गामिनीम् ग०।

य एवं पिबति क्षिप्रं तत्रैव वायवी कृपा ।
गुरुसेवापरे धीरे[1] शुद्धसत्त्वतनुप्रभे ॥ ३४ ॥
भक्ते अष्टाङ्गनिरते वायवी सुकृपा भवेत् ।
अतिथिं भोजयेद्यस्तु न भुक्त्वा स्वयमेव च ॥ ३५ ॥
सर्वपापविनिर्मुक्तो वायवी सुकृपा ततः ।
अन्तरात्मा महात्मा यः कुरुते वायुधारणम् ॥ ३६ ॥
देवगुरौ[1] सत्यबुद्धिर्वायवी सुकृपा ततः ।
एककालो वृथा याति नैव यस्य महेश्वर ॥ ३७ ॥
वायव्यां चित्तमादाय तत्रानिलकृपा भवेत् ।
विचरन्ति महीमध्ये योगशिक्षानिबन्धनम् ॥ ३८ ॥
प्राणायामेच्छुको यो वा वायवी सुकृपा ततः ।
प्रतिवत्सरमानेन पीठे पीठे वसन्ति ये ॥ ३९ ॥
वायवीं प्रजपन्तीह वायवी सुकृपा ततः ।
अल्पाहारी निरोगी च विजयानन्दनन्दितः ॥ ४० ॥
वायवीं भजतो योगी वायवी सुकृपा भवेत् ।
अन्तर्यागे पीठचक्रे चित्तमाधाय यत्नतः ॥ ४१ ॥
नामनिष्ठो धारणाख्यो वायवी सुकृपा ततः ।
पशुभावसमाक्रान्तः सदा रेतोविवर्जितः ॥ ४२ ॥
शुक्रमैथुनहीनश्च वायवी सुकृपा ततः ।
अकालेऽपि सकालेऽपि नित्यं धारणतत्परः ॥ ४३ ॥
योगिनामपि संगी यो वायवी सुकृपा ततः ।
बन्धुबान्धवहीनश्च विवेकाक्रान्तमानसः ॥ ४४ ॥
शोकाशोकसमं भावं वायवी सुकृपा ततः ।
सर्वदानन्दहृदयः कालज्ञो भौतसाधनः ॥ ४५ ॥

---

१. परमाणु ग० ।

मौनधारणजापश्च वायवी सुकृपा ततः ।
[1]निर्जनस्थाननिरतो निश्चेष्टो दीनवत्सलः ॥ ४६ ॥
बहुजल्पनशून्यश्च स्थिरचेताः प्रकीर्तितः ।
हास्यसन्तोषहिंसादिरहितः पीठपारगः ॥ ४७ ॥
योगशिक्षासमाप्त्यर्थी स्थिरचेताः प्रकीर्तितः ।
मत्कुलागमभावज्ञो महाविद्यादिमन्त्रवित् ॥ ४८ ॥
शुद्धभक्तियुतः शान्तः स्थिरचेताः प्रकीर्तितः ।
मूलाधारे कामरूपे हृदि जालन्धरे तथा ॥ ४९ ॥
ललाटे पूर्णगिर्याख्ये उड्डीयाने तदूर्ध्वके ।
वाराणस्यां भ्रुवोर्मध्ये ज्वलन्त्यां लोचनत्रये ॥ ५० ॥
मायावत्यां सुखवृत्ते कण्ठेऽष्टपुरे तथा ।
अयोध्यायां नाभिदेशे कट्यां काञ्च्यां महेश्वर ॥ ५१ ॥
पीठेष्वेतेषु भूलोके चित्तमाधाय यत्नतः ।
उदरे पूरयेद् वायुं सूक्ष्मसङ्केतभाषया ॥ ५२ ॥
पादाङ्गुष्ठे च जङ्घायां जानुयुग्मे च मूलके ।
चतुर्दले षड्दले च तथा दशदले तथा ॥ ५३ ॥
दले द्वादशके चैव सिद्धिसिद्धान्तनिर्मले ।
कण्ठे षोडशपत्रे च द्विदले पूर्णतेजसि ॥ ५४ ॥
कैलासाख्ये [2]ब्रह्मरन्ध्रपदे निर्मलतेजसि ।
सहस्रारे महापद्मे कोटिकोटिविधुप्रभे ॥ ५५ ॥

---

१. सर्वशास्त्रार्थवेत्ता च विधिवेत्ता च धार्मिकः ।
सूक्ष्मवायुप्रसादज्ञो वायवी सुकृपा ततः ॥
सहसा बहुइष्टज्ञो निन्दाधर्मविवर्जितः ।
शिल्पकर्माभिमानी यो वायवी सुकृपा ततः ॥
इति क० अ० पु० पाठः ।

२. लोकमुखात् ग० ।

चालयित्वा महावायुं कुम्भयित्वा पुनः पुनः ।
पूरयित्वा रेचयित्वा रोमकूपाद्विनिर्गतम् ॥ ५६ ॥

तिस्रः कोट्यर्धकोटि च यानि लोमानि मानुषे ।
नाडीमुखानि सर्वाणि धर्मबिन्दुं च्यवन्ति हि ॥ ५७ ॥

यावत्तद्बिन्दुपातश्च तावत्कालं लयं स्मृतम् ।
तावत्कालं प्राणयोगात् प्रस्वेदाधमसिद्धिदम् ॥ ५८ ॥

सूक्ष्मवायुसेवया च किन्न सिद्ध्यति भूतले ।
लोमकूपे मनो दद्यात् लयस्थाने मनोरमे ॥ ५९ ॥

स्थिरचेता भवेत् शीघ्रं नात्र कार्या विचारणा ।
वायुसेवां विना नाथ कथं सिद्धिर्भवेद्भवे ॥ ६० ॥

स्थिरचित्तं विना नाथ मध्यमापि न जायते ।
स्थाने स्थाने मनो दत्त्वा वायुना कुम्भकेन च ॥ ६१ ॥

धारयेन्मारुतं मन्त्री कालज्ञानी दिवानिशम् ।
एकान्तनिर्जने[1] स्थित्वा स्थिरचेता भवेद् ध्रुवम् ॥ ६२ ॥

स्थिरचित्तं विना शम्भो सिद्धिः स्यादुत्तमा कथम् ॥ ६३ ॥

निवार्य पञ्चेन्द्रियसञ्ज्ञकानि
[2]यत्नेन धैर्यायतिरीश्वरस्त्वम् ।
प्राप्नोति मासत्रयसाधनेन
विषासवं भोक्तुमसौ समर्थः ॥ ६४ ॥

मासत्रयाभ्याससुसञ्चयेन
स्थिरेन्द्रियः स्यादधमादिसिद्धिः ।
सा खेचरी सिद्धिरत्र प्रबुद्धा
चतुर्थये मासे तु भवेद्विकल्पनम् ॥ ६५ ॥

तदाधिकारी पवनाशनोऽसौ
स्थिरासनानन्दसुचेतसा भुवि ।

प्रकल्पने सिद्धिं यथार्थगामिनी-
मुपैति शीघ्रं वरवीरभावम् ॥ ६६ ॥
सावयवी शक्तिरनन्तरूपिणी
लोभावलीनां कुहरे महासुखम् ।
ददाति सौख्यं गतिचञ्चलं जयं
स्थिराशयत्वं सति शास्त्रकोविदम् ॥ ६७ ॥
षण्मासयोगासननिष्ठदेहा[1]
वायुश्रमानन्दरसाप्तविग्रहः ।
विहाय कल्पान्वितयोगभावं
श्रुत्यागमान् कर्तुमसौ समर्थः ॥ ६८ ॥
स्थिरचेता महासिद्धिं प्राप्नोति नात्र संशयः ।
संवत्सरकृताभ्यासे महाखेचरतां व्रजेत् ॥ ६९ ॥
यावन्निर्गच्छति प्रीता वायवी शक्तिरुत्तमा ।
नासाग्रमवधार्यैव स्थिरचेता महामतिः ॥ ७० ॥
चण्डवेगा यदा क्षिप्रमन्तरालं न गच्छति ।
सर्वत्रगामी स भवेत् तावत्कालं विचक्षणः ॥ ७१ ॥
यदि शीर्षादूर्ध्वदेशे द्वादशाङ्गुलकोपरि ।
गन्तुं समर्थो भगवान् शिवतुल्यो गणेश्वरः ॥ ७२ ॥
सर्वत्रगामी प्रभवेत् खेचरो योगिराड् वशी ।
इति सिद्धिर्वत्सरे स्यात् स्थिरचित्तेन शङ्कर ॥ ७३ ॥
योगी भूत्वा मनःस्थैर्यं न करोति यदा भुवि ।
कृच्छ्रेण पद्मारुह्य प्रपतेन्नारकी यथा ॥ ७४ ॥
अत एव महाकाल स्थिरचेता भव प्रभो ।
तदा मां प्राप्स्यसि क्षिप्रं वायवीमष्टसिद्धिदाम् ॥ ७५ ॥
यदि सिद्धो भवेद् भूमौ वायवीसुकृपादिभिः ।
सदा कामस्थिरो भूत्वा गोपयेन्मातृजारवत् ॥ ७६ ॥

---

१. सर्वत्र गामिनो भावात् ग० ।

यदा यदा महादेव योगाभ्यासं करोति यः ।
शिष्येभ्योऽपि सुतेभ्योऽपि दत्वा कार्यं करोति यः॥ ७७ ॥
तदैव स महासिद्धिं प्राप्नोति नात्र संशयः ।
संवत्सरं चरेद्धर्मं योगमार्गं हि दुर्गमम् ॥ ७८ ॥
प्रकाशयेन्न कदापि कृत्वा मृत्युमवाप्नुयात् ।
योगयोगाद् भवेन्मोक्षो मन्त्रसिद्धिरखण्डिता ॥ ७९ ॥
न प्रकाश्यमतो योगं भुक्तिमुक्तिफलाय च ।
नित्यं सुखं महाधर्मं प्राप्नोति वत्सराद् बहिः ॥ ८० ॥
आत्मसुखं नित्यसुखं मन्त्रं यन्त्रं तथागमम् ।
प्रकाशयेन्न कदापि कुलमार्गं कुलेश्वर ॥ ८१ ॥
यद्येवं कुरुते धर्मं तदा मरणमाप्नुयात् ।
योगभ्रष्टो विधानज्ञोऽजडो मृत्युमवाप्नुयात् ॥ ८२ ॥
येन मृत्युवशो याति तत्कार्यं नापि दर्शयेत् ।
दत्तात्रेयो महायोगी शुको नारद एव च ॥ ८३ ॥
येन कृतं सिद्धिमन्त्रं वर्णजालं कुलार्णवम् ।
एकेन लोकनाथेन योगमार्गपरेण च ॥ ८४ ॥
तथा मङ्गलकार्येण ध्यानेन साधकोत्तमः ।
उत्तमां सिद्धिमाप्नोति वत्सराद् योगशासनात् ॥ ८५ ॥
आदौ वै ब्रह्मणो ध्यानं पूरकाष्टाङ्गलक्षणैः ।
कुर्यात् सकलसिद्ध्यर्थमम्बिकापूजनेन च ॥ ८६ ॥
ऋग्वेदं चेतसि ध्यात्वा मूलाधारे चतुर्दले ।
वायुना चन्द्ररूपेण धारयेन्मारुतं सुधीः ॥ ८७ ॥
अथर्वान्निर्गतं सर्वं ऋग्वेदादि चराचरम् ।
तेन पूर्णचन्द्रमसा जीवेनार्यामृतेन च ॥ ८८ ॥
जुहुयादेकभावेन कुण्डलीसूर्यगोऽनले ।
कुम्भकं कारयेन्मत्री यजुर्वेदपुरःसरम् ॥ ८९ ॥

सर्वसत्त्वाधिष्ठितं तत् सर्वविज्ञानमुत्तमम् ।
वायव्याः पूर्णसंस्थानं योगिनामभिधायकम् ॥ ९० ॥

पुनः पुनः कुम्भयित्वा सत्त्वे निर्मलतेजसि ।
महाप्रलयसारज्ञो भवतीति न संशयः ॥ ९१ ॥

रेचकं शम्भुना व्याप्तं तमोगुणमनोलयम् ।
सर्वमृत्युकुलस्थानं व्याप्तं धर्मफलाफलैः ॥ ९२ ॥

पुनः पुनः क्षोभनिष्ठो रेचकेन निवर्तते ।
रेचकेन लयं याति रेचनेन परं पदम् ॥ ९३ ॥

प्राप्नोति साधकश्रेष्ठो रेचकेनापि सिद्धिभाक् ।
रेचकं वह्निरूपश्च कोटिवह्निशिखोज्ज्वलम् ॥ ९४ ॥

द्वादशाङ्गुलमध्यस्थं ध्यात्वा बाह्ये[1] लयं दिशेत् ।
चन्द्रव्याप्तं सर्वलोकं सर्वपुण्यसमुद्भवम् ॥ ९५ ॥

रेचकाग्निर्दहतीह वायुसख्यो महाबली ।
तत् शशाङ्कजीवरूपं पीत्वा जीवति वायवी ॥ ९६ ॥

आग्नेयी दहति क्षिप्रं एष होमः परो मतः ।
एतत् कार्यं यः करोति स न मृत्युवशो भवेत् ॥ ९७ ॥

एतयोः सन्धिकालश्च कुम्भकं तत्त्वसाधनम् ।
तदेव भावकानाञ्च परमस्थानमेव च ॥ ९८ ॥

महाकुम्भकलाकृत्या स्थिरं स्थित्वा च कुम्भके ।
अथर्वगामिनीं देवीं भावयेदमरो महान् ॥ ९९ ॥

अनन्तभावनं शम्भोरशेषसृष्टिशोभितम् ।
अथर्वं भावयेन्मत्री शक्तिचक्रक्रमेण तु ॥ १०० ॥

आज्ञाचक्रे वेददले चतुर्दलसुमन्दिरे ।
अथर्वयोगिनीं ध्यायेत् समाधिस्थेन चेतसा ॥ १०१ ॥

---

१. राज्ये ग० ।

ततोऽच्युताख्यं जगतामीश्वरं शीर्षपङ्कजे ।
प्रपश्यति जगन्नाथं नित्यसूक्ष्मसुखोदयम् ॥ १०२ ॥
आज्ञाचक्रे शोधनमशेषदलमथवं परिकीर्तितम् ।
ज्योतिश्चक्रञ्च तन्मध्ये योगमार्गेण सद्विलम् ॥ १०३ ॥
प्रपश्यन्ति महाज्ञानी बाह्यदृष्ट्या यथाम्बुजम् ।
कालेन सिद्धिमाप्नोति ब्रह्मज्ञानी च साधकः ॥ १०४ ॥
ततो भजेत् कौलमार्गं ततो विद्यां प्रपश्यति ।
महाविद्यां कोटिसूर्यज्वालामालासमाकुलम् ॥ १०५ ॥
एतत्तत्त्वं विना नाथ न पश्यति कदाचन ।
वशिष्ठो ब्रह्मपुत्रोऽपि चिरकालं सुसाधनम् ॥ १०६ ॥
चकार निर्जने देशे कृच्छ्रेण तपसा वशी ।
शतसहस्रं वत्सरं च व्याप्य योगादिसाधनम् ॥ १०७ ॥
तथापि साक्षाद्विज्ञानं न बभूव महीतले ।
ततो जगाम क्रुद्धोऽसौ तातस्य निकटे प्रभुः ॥ १०८ ॥
सर्वं तद् कथयामास स्वीयाचारक्रमं प्रभो ।
अन्यमन्त्रं देहि नाथ एषा विद्या न सिद्धिदा ॥ १०९ ॥
अन्यथा सुदृढं शापं तवाग्रे प्रददामि हि ।
ततस्तं वारयामास एवं न कुरु भो सुत ॥ ११० ॥
पुनस्तां भज भावेन योगमार्गेण पण्डित ।
ततः सा वरदा भूत्वा आगमिष्यति तेऽग्रतः ॥ १११ ॥
सा देवी परमा शक्तिः सर्वसङ्कटतारिणी ।
कोटिसूर्यप्रभा नीला चन्द्रकोटिसुशीतला ॥ ११२ ॥
स्थिरविद्युल्लताकोटिसदृशी कालकामिनी ।
[1]सा पाति जगतां लोकान् तस्याः कर्म चराचरम् ॥ ११३ ॥

---

१. सर्वस्वरूपा सर्वाख्या धर्माधर्मविवर्जिता ।
शुद्धचीनाचाररता शक्तिचक्रप्रवर्तिका ॥

भज पुत्र स्थिराऽनन्द कथं शप्तुं समुद्यतः ।
एकान्तचेतसा नित्यं भज पुत्र दयानिधे ॥ ११४ ॥
तस्या दर्शनमेवं हि अवश्यं समवाप्स्यसि ।
एतत् श्रुत्वा गुरोर्वाक्यं प्रणम्य च पुनः पुनः ॥ ११५ ॥
जगाम जलधेस्तीरे वशी वेदान्तवित् शुचिः ।
सहस्रवत्सरं सम्यक् जजाप परमं जपम् ॥ ११६ ॥
आदेशोऽपि न बभूव ततः क्रोधपरो मुनिः ।
व्याकुलात्मा महाविद्यां वशिष्ठः शप्तुमुद्यतः ॥ ११७ ॥
द्विराचम्य महाशापः प्रदत्तश्च सुदारुणः ।
तेनैव मुनिना नाथ मुनेरग्रे कुलेश्वरी ॥ ११८ ॥
आजगाम महाविद्या योगिनामभयप्रदा ।
अकारणमरे विप्र शापो दत्तः सुदारुणः ॥ ११९ ॥
मम सेवां न जानाति मत्कुलागमचिन्तनम् ।
कथं योगाभ्यासवशात् मत्पदाम्भोजदर्शनम् ॥ १२० ॥
प्राप्नोति मानुषो देवे मनध्यानमदुःखदम् ।
यः कुलार्थी सिद्धमन्त्री मद्वेदाचारनिर्मलः ॥ १२१ ॥
ममैव साधनं पुण्यं वेदानामप्यगोचरम् ।
बौद्धदेशेऽथर्ववेदे महाचीने तदा व्रज ॥ १२२ ॥
तत्र गत्वा महाभावं विलोक्य मत्पदाम्बुजम् ।
मत्कुलज्ञो महर्षे त्वं महासिद्धो भविष्यसि ॥ १२३ ॥
एतद्वाक्यं कथित्वा सा वायव्याकाशवाहिनी ।
निराकाराऽभवत् शीघ्रं ततः साकाशवाहिनी ॥ १२४ ॥
ततो मुनिवरः श्रुत्वा महाविद्यां सरस्वतीम् ।
जगाम चीनभूमौ च यत्र बुद्धः प्रतिष्ठति ॥ १२५ ॥

---

अनन्तानन्तमहिमा संसारावर्तनाशिनी ।
बुद्धेश्वरी बुद्धमाता अर्भकवेदश्लाधिनी ॥ क० ।

पुनः पुनः प्रणम्यासौ वशिष्ठः क्षितिमण्डले ।
रक्ष रक्ष महादेव सूक्ष्मरूपधराव्यय ॥ १२६ ॥
अतिदीनं वशिष्ठं मां सदा व्याकुलचेतसम् ।
ब्रह्मपुत्रो महादेवीसाधनायाजगाम च ॥ १२७ ॥
सिद्धिमार्गं न जानामि वेदमार्गपरो हर ।
तवाचारं समालोक्य भयानि सन्ति मे हृदि ॥ १२८ ॥
तन्नाशय मम क्षिप्रं दुर्बुद्धिं भेदगामिनीम् ।
वेदबहिष्कृतं कर्म सदा ते चालये प्रभो ॥ १२९ ॥
कथमेतत् प्रकारश्च मद्यं मांसं तथाङ्गनाम् ।
सर्वे दिगम्बराः सिद्धा रक्तपानोद्यता वराः ॥ १३० ॥
मुहुर्मुहुः प्रपिबन्ति रमयन्ति वराङ्गनाम् ।
सदा मांसासवैः पूर्णा मत्ता रक्तविलोचनाः ॥ १३१ ॥
निग्रहानुग्रहे शक्ताः पूर्णान्तःकरणोद्यताः ।
वेदस्यागोचराः सर्वे मद्यस्त्रीसेवने रताः ॥ १३२ ॥
इत्युवाच महायोगी दृष्ट्वा वेदबहिष्कृतम् ।
प्राञ्जलिर्विनयाविष्टो वद चैतत् कुलं प्रभो ॥ १३३ ॥
मनःप्रवृत्तिरेतेषां कथं भवति पावन ।
कथंवा जायते सिद्धिर्वेदकार्यं विना प्रभो ॥ १३४ ॥

श्रीबुद्ध उवाच—

वशिष्ठ शृणु वक्ष्यामि कुलमार्गमनुत्तमम् ।
येन विज्ञातमात्रेण रुद्ररूपी भवेत् क्षणात् ॥ १३५ ॥
साक्षेपेण सर्वसारं कुलसिद्ध्यर्थमागमम् ।
आदौ शुचिर्भवेद् धीरो विवेकाक्रान्तमानसः ॥ १३६ ॥
पशुभावस्थिरचेताः पशुसङ्गविवर्जितः ।
एकाकी निर्जने स्थित्वा कामक्रोधादिवर्जितः ॥ १३७ ॥

दमयोगाभ्यासरतो योगशिक्षादृढव्रतः ।
वेदमार्गाश्रयो नित्यं वेदार्थनिपुणो महान् ॥ १३८ ॥
एवं क्रमेण धर्मात्मा शीलो दार्ढ्यगुणान्वितः ।
धारयेन्मारुतं नित्यं श्वासमार्गे मनोलयम् ॥ १३९ ॥
एवमभ्यासयोगेन वशी योगी दिने दिने ।
शनैः शनैः क्रमाभ्यासाद् दहेद् स्वेदोद्गमोऽधमः ॥ १४० ॥
मध्यमः कल्पसंयुक्तो भूमित्यागः परो मतः ।
प्राणायामेन सिद्धिः स्यान्नरो योगेश्वरो भवेत् ॥ १४१ ॥
योगी भूत्वा कुम्भकज्ञो मौनी भक्तो दिवानिशम् ।
शिवे कृष्णे ब्रह्मपदे एकान्तभक्तिसंयुतः ॥ १४२ ॥
ब्रह्मविष्णुशिवा एते वायवीगतिचञ्चला ।
एवं विभाव्य मनसा कर्मणा वचसा शुचिः ॥ १४३ ॥
आदौ चित्तं समाधाय चिद्रूपायां स्थिराशयः ।
ततो महावीरभावं कुलमार्गमहोदयम् ॥ १४४ ॥
शक्तिचक्रं सत्त्वचक्रं वैष्णवं नवविग्रहम् ।
समाश्रित्य भजेन्मन्त्री कुलकात्यायनीं पराम् ॥ १४५ ॥
प्रत्यक्षदेवतां श्रीदां चण्डोद्वेगनिकृन्तिनीम् ।
चिद्रूपां ज्ञाननिलयां चैतन्यानन्दविग्रहाम् ॥ १३६ ॥
कोटिसौदामिनीभासां सर्वतत्त्वस्वरूपिणीम् ।
अष्टादशभुजां रौद्रीं शिवमांसाचलप्रियाम् ॥ १४७ ॥
आश्रित्य प्रजपेन्मन्त्रं कुलमार्गाश्रयो नरः ।
कुलमार्गात् परं मार्गं को जानाति जगत्त्रये ॥ १४८ ॥
एतन्मार्गप्रसादेन ब्रह्मा स्रष्टा स्वयं महान् ।
विष्णुश्च पालने शक्तो निर्मलः सत्त्वरूपधृक् ॥ १४९ ॥

सर्वसेव्यो महापूज्यो यजुर्वेदाधिपो महान् ।
हरः संहारकर्त्ता च वीरेशोत्तममानसः ॥ १५० ॥
सर्वेषामन्तकः क्रोधी क्रोधराजो महाबली ।
वीरभावप्रसादेन दिक्पाला रुद्ररूपिणः ॥ १५१ ॥
वीराधीनमिदं विश्वं कुलाधीनश्च वीरकम् ।
अतः कुलं समाश्रित्य सर्वसिद्धीश्वरो जडः ॥ १५२ ॥
मासेनाकर्षणं सिद्धिर्द्विमासे वाक्पतिर्भवेत् ।
मासत्रयेण संयोगाज्जायते सुखवल्लभः ॥ १५३ ॥
एवं चतुष्टये मासि भवेद् दिक्पालगोचरः ।
पञ्चमे पञ्चबाणः स्यात्षष्ठे रुद्रो भवेद् ध्रुवम् ॥ १५४ ॥
एतदाचारसारं हि सर्वेषामप्यगोचरम् ।
एतन्मार्गं कौलमार्गं कौलमार्गं परं नहि ॥ १५५ ॥
योगिनां दृढचिन्तानां भक्तानामेकमासतः ।
कार्यसिद्धिर्भवेन्नारी कुलमार्गप्रसादतः ॥ १५६ ॥
पूर्णयोगी भवेद् विप्रः षण्मासाभ्यासयोगतः ।
शक्तिं विना शिवोऽशक्तः किमन्ये जडबुद्धयः ॥ १५७ ॥
इत्युक्त्वा बुद्धरूपी च कारयामास साधनम् ।
कुरु विप्र महाशक्तिसेवनं मद्यसाधनम् ॥ १५८ ॥
महाविद्यापदाम्भोजदर्शनं समवाप्स्यसि ।
एतच्छ्रुत्वा गुरोर्वाक्यं स्मृत्वा देवीं सरस्वतीम् ॥ १५९ ॥
मदिरासाधनं कर्त्तुं जगाम कुलमण्डले ।
मद्यं मांसं तथा मांसं मुद्रा मैथुनमेव च ॥ १६० ॥
पुनः पुनः साधयित्वा पूर्णयोगी बभूव सः ।
योगमार्गं कुलमार्गमेकाचारक्रमं प्रभो ॥ १६१ ॥

योगी भूत्वा कुलं ध्यात्वा सर्वसिद्धीश्वरो भवेत् ।
सन्धिकालं कुलपथं योगेन जडितं सदा ॥ १६२ ॥
भगसंयोगमात्रेण सर्वसिद्धीश्वरो भवेत् ।
एतद्योगं विजानीयाज्जीवात्मपरमात्मनोः ॥ १६३ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावप्रश्नार्थनिर्णये
सिद्धमन्त्रप्रकरणे चतुर्वेदोल्लासे भैरवभैरविसंवादे
सप्तदशः पटलः ॥



# अष्टादशः पटलः

आनन्दभैरवी उवाच—

श्रृणु नाथ प्रवक्ष्यामि असाध्यसाधनं परम् ।
कामचक्रस्य वर्णानां वर्णनं प्रश्ननिर्णयम् ॥ १ ॥
आज्ञाचक्रमध्यभागे नाडीकोटिरसालिनी ।
तन्मध्ये भावयेन्मत्री कामचक्रं मनोरमम् ॥ २ ॥
कामचक्रे च पूर्वोक्तवर्णमालोक्य साधकः ।
न्यासमन्त्रे पुटीकृत्य जपित्वा योगिराड् भवेत् ॥ ३ ॥
एको मन्दिरमध्यस्थो मन्त्रमाश्रित्य यत्नतः ।
निजनामाक्षरं तत्र तत्कोष्ठमनुमाश्रयेत् ॥ ४ ॥
एतेषां कोष्ठसंस्थानां वर्णानां हि फलाफलम् ।
वद कान्ते रहस्यं मे कामचक्रफलोद्भवम् ॥ ५ ॥
कामचक्रं कालरूपं ततो वाराणसीपुरम् ।
तत्र सर्वपीठचक्रं चक्राणामुत्तमोत्तमम् ॥ ६ ॥
एतच्चक्रप्रसादेन ते पादाम्बुजदर्शनम् ।
प्राप्नोति साधकान् सत्यं सर्वं जानाति साधकः ॥ ७ ॥
कामनाफलसिद्ध्यर्थं मन्त्रार्थादिविचारणाम् ।
बुद्धमस्तमितं त्यक्त्वा गृह्णीयान्मन्त्रमुत्तमम् ॥ ८ ॥

आनन्दभैरव उवाच—

श्रृणु वर्णफलं नाथ असाध्यप्रश्ननिर्णयम् ।
वर्णानाञ्च नाथ राशिभेदेन संश्रृणु प्रभो ॥ ९ ॥
बाल्यादिषु स्थितान् वर्गान् आश्रयेत् साधकोत्तमः ।
वर्जयेद् वृद्धभावञ्च तथास्तमितमेव च ॥ १० ॥

आश्रयेद् राशिभावेन बाल्यकैशोरयौवनम् ।
अथ बाल्यं वर्गभेदं विचारे वामयोगतः ॥ ११ ॥
मन्त्राणाञ्चापि गणयेत् प्रश्नकर्माणि दक्षिणात् ।
मध्यकोणावधिं नाथ गणनीयं विचक्षणैः ॥ १२ ॥
ऊर्द्ध्वदक्षिणयोगेन गणयेत् प्रश्नकर्मणि ।
वामयोगेन गणयेद् मन्त्रादीनां विचारणे ॥ १३ ॥
शृणु तद्वर्गवर्गाणां फलमत्यन्तसुन्दरम् ।
वदामि परमानन्दरससिन्धुमधुव्रतः ॥ १४ ॥

कवर्गं कामाख्याभवनमणिपीठे त्रिजगतां
धरित्री सा धात्री वसति सततं सिद्धिनवके ।
[1]हुताशेष्वाकाशे जलदतनुसाकाशजननी
गभीरा खड्गाभा करहरकरा घोरमुखरा ॥ १५ ॥

अभ्यासयोगात् कलिकालपावनीं
कालीं[2] कुलानन्दमयीं रमेशीम् ।
महारसोल्लाससुवक्त्रलोचनां
कामेश्वरीं कूर्मपदं भजेज्जयी ॥ १६ ॥

कालागुरोरुत्तमसिद्धसेविता
मनोहरा खेचरसारशाखिनी ।
उल्कासमग्रा भवदीपवृत्ति-
स्तेजकूटामलनीलदेहा ॥ १७ ॥

खड्गायुधा खर्परधारिणी सा
चण्डोद्गमा वायुपथस्थ खेचरी ।
विद्याभयाखञ्जनलोचना गतिः
क्षितिक्षये खेचरवर्गधारिणी ॥ १८ ॥

---

१. हुताश्वेषाकाशे ग० ।

२. कुलानन्दरूपं रमेशीं महेशीम् ग० ।

खारी विहारी खलखेलनेन
खराखरोन्मत्तगतिप्रिया खगा ।
[1]महाखगारूप खलस्थिता सदा
प्रपाति विद्याबलविक्रमस्थिता ॥ १९ ॥
व्यापारनिद्रागहनार्थचिन्ताखरप्रभाभाति यदा यदा ॥ २० ॥
गायत्री गणनायिका मतिगतिग्लानिरगूढाशया
गीता गोकुलकामिनी गुरुतरा गर्ह्यग्निजेयोदया ।
गोरूपा गयहा गया गुणवती गाथापथस्थायिनी
श्रीगुर्वी प्रतिपालनं त्रिजगतां गायन्ति यां तां भजेत् ॥ २१ ॥
वायोर्घर्मकरानन्दमोहिनी घर्घरा घना ।
निद्रामाघ्याति घटना नीला घोटकवाहिनी ॥ २२ ॥
बिन्दुस्था विषभोजनानलकथा बीजश्रमायोप्रिया ।
पश्चाढ्यामनुनासिकासुखमयी वेदक्रिया षण्मुखी ॥ २३ ॥
[2]विचित्रवस्त्राचरणाब्जचालनम् ।
विचारचेष्टां मयि देहि चञ्चले ॥ २४ ॥
इति वर्णं चवर्गस्य महापातकनाशनम् ।
कामचक्रे स्थितं यद्यत् प्रश्ने मन्त्रगृहे यथा ॥ २५ ॥
चवर्गफलमत्यन्तनिष्कर्षं सूक्ष्मभावनम् ।
धिया सर्वाक्षरश्रेणीं भावयन्ति पुनः पुनः ॥ २६ ॥

---

१. रूपोढषादा खलसंस्थिता ग० ।

२. कृत्या भूतनिवारिणी करणगणने गात्रशिष्टामुखी ।
वरस्याहितकारिणी कलियुगे योगाटवी पातु वः ॥
चराचरत्वं चमरी चचार प्रचार चन्द्राननचञ्चला च । क० ।

[1]सर्वं जानाति शंभो त्वं परं किं कथयामि ते ।
तथापि वर्गमाहात्म्यं कामचक्रस्थनिर्मलम् ॥ २७ ॥
यो जानाति कामचक्रं यमो हन्ति न तं जनम् ।
तत्प्रकारं भावयुक्तं [2]भावनाध्याननिर्मलम् ॥ २८ ॥
[3]ध्यात्वा कामरूपस्था मूलाधारनिवासिनः ।
देवताः पार्थिवाः सर्वे आत्मानं परमेष्ठिनः ॥ २९ ॥
न जानन्ति बालका मे तेषां योगादिसिद्धये ।
कामचक्रं कामरूपं कामनाफलसिद्धिदम् ॥ ३० ॥
तन्मन्त्रग्रहणादेव साक्षादीशो भवेन्नरः ।
श्रुतिशास्त्राणि सर्वाणि करे तस्य न संशयः ॥ ३१ ॥
योगशिक्षादिकं सर्वं जानाति कामचक्रतः ।
कामचक्रप्रसादेन कामरूपी भवेद् ध्रुवम् ॥ ३२ ॥
तद्वर्णस्थं तदन्तःस्थं दशकोणस्थमेव च ।
अष्टदलस्थं तत्रापि विचार्य साधकोत्तमः ॥ ३३ ॥
अनुलोमविलोमेन शास्त्रस्यानुक्रमेण च ।
बाल्यं कैशोरमुल्लासं वृद्धिः सिद्धिश्च यौवने ॥ ३४ ॥
वृद्धो वृद्धत्वमाप्नोति अस्ते च निधनं भवेत् ।
नवग्रहास्तत्र मध्ये पञ्चप्राणाश्च सन्ति वै ॥ ३५ ॥
अनुलोमविलोमेन गणयेद्दशकोणके ।
दशकोणे सर्वसिद्धिरष्टसिद्धिश्च तत्र वै ॥ ३१ ॥

---

१. वृद्धास्तमितमेवं हि त्यक्त्वा मन्त्राणि दापयेत् ।
अन्यकोणस्य वर्णानां गृह्णीयान्मन्त्रमुत्तमम् ॥
चवर्गपुत्रजालस्था देवता दयिता प्रभो ।
तत्प्रकारं प्रवक्ष्यामि शृणुष्व विश्वभावन ॥ क० ।

२. ज्ञान् ग० ।

३. ज्ञात्वा ग० ।

४. ब्राह्मणाः शुद्ध ग० ।

अष्टपत्रे प्रशंसन्ति अधोऽनन्तमध्ये गृहे ।
ब्राह्मणमूर्ध्वगेहे च मन्त्रवर्णांश्च तत्तु तान् ॥ ३७ ॥
समाश्रित्य जपेद्विद्यां सूरयः क्रमरूपिणीम् ।
हस्वदेवीं हस्वबुद्धिं ददाति साधकाय च ॥ ३८ ॥
यदि क्रोधपरा विद्या भक्षयेत् साधकं लघु ।
अतः समवयोरूपां देवतामष्टसिद्धिदाम् ॥ ३९ ॥
देवो भूत्वा यजेद्देवं तदा मोक्षं समाप्नुयात् ।
यदि वर्णं न जानाति कौलपुत्रोऽप्यधो व्रजेत् ॥ ४० ॥
डाकिनी तं भक्षयन्ति दीक्षामन्त्रार्णहीनकम् ।
ततो वर्णविचारञ्च प्रवक्ष्यामि समासतः ॥ ४१ ॥
चापान् धृत्वा नरेन्द्रस्तमपि मनुजकं पालयन्तीह लोके
[1]सर्वं चन्द्रो विघातं प्रचुरमयभयं भास्करो हन्ति शोकान् ।
चातुर्थ्यां चक्रपाणेः पदमपि चपला सन्ददातीह माया-
योगोद्योगी चरुगतमनसा साधकायाऽऽशु योगम् ॥ ४२ ॥
छन्नाशा कमले स्थिता स्थितिलये वाञ्छाफलश्रीधरा
छायामण्डपमध्यगाच्छलगता छत्रञ्छटा तेजसा ।
त्रैलोक्यं प्रतिपाति पाशुपतिभिः क्षेत्राधिपैः श्रीधरैः
प्राणप्रेमविहारिणी भगवतीच्छत्रेण तं साधकम् ॥ ४३ ॥
जातिख्यातिरनुत्तमा प्रभवति प्रीतायमाभ्यासतां
जीवानामतिदुःखराशिहननात् एकार्थसञ्चारिणी ।
वज्रा जीवनमध्यगा गतिमती विद्या जया यामिनी
जाता जातनिवारिणी जनमनःसंहारचिन्तावतु ॥ ४४ ॥
झं झंत्वादविवादं झटिति झरझरा झारयावीजझंकां
गंगाहन्ति हता शुभा धनमुखी कैवल्यमुक्तिप्रदा ।
कृत्वा रक्षति साधकं झरझनत्कारेण सूक्ष्मानिला
कामक्रोधविनाशिनी शशिमुखी झंकारशब्दप्रिया ॥ ४५ ॥

१. चिन्ता ग० ।

अकारबीजामलभावसारैः बाणस्य पुञ्जं प्रतिहन्ति योगिनी ।
खड्गायुधा सा रसपानमत्ता संहारनिद्राकुलसाधुदुःखहा ॥४६॥
चन्द्रातपस्निग्धसुकान्तविग्रहा
टंकास्त्रवज्रास्त्रहतारिपुङ्गवाः ।
टिं टिं महामन्त्रजपेन सिद्धिदा
हन्ति श्रियं कापुरुषस्य पातकम् ॥ ४७ ॥
विशालनेत्रा यदि चारुकाङ्गी[1]
ठं ठं स्वबीजं परिपाति कक्षरी ।
मनोगतं दुःखसमूहमुर्वशी
रत्नाकरा सैन्यकुलं निहन्ति ॥ ४८ ॥
डामरा जगतामाद्या डं डां डिं डीं स्वरूपिणी ।
कामचक्रे सुखं दत्वा सारयैवं तनोति सा ॥ ४९ ॥
ढं ढां बीजात्मिका विद्या रत्नमन्दिरसंस्थिता ।
ढक्कारी पाशहस्ता च साधकं पाति सुन्दरी ॥ ५० ॥
णं णां णिं णीं जपति सुजनो जीवनीमध्यसंस्था
अष्टैश्वर्या प्रभवति हृदि क्षोभपुञ्जापहाय ।
वाराणस्यां सकलभयहा सन्ददातीह लक्ष्मीं
सूक्ष्मात्यन्तानलपथमुखी कालजालं निहन्ति ॥ ५१ ॥
तारारूपा तरुस्था त्रिनयनकुटिला तारकाख्या निहन्त्री
तन्त्रश्रेणी तरुवरकलात्राणहेतोरतीता ।
तालक्षेत्रा तडिदिव कलाकोटिसूर्यप्रकाशा
तोकादीनां बहलतरुणी तारकं पाति भक्तम् ॥ ५२ ॥
कालक्रमेणैव विमुक्तिदायिनी
मनोरमा नीरजनेत्रकोमला ।
स्थिता क्षकाराक्षरमालिनीस्थला
प्रपाति मुख्यं वरसाधकं शिवा ॥ ५३ ॥

---

१. चक्रवाङ्गी क० ।

दाली दरिद्रातिनिकृष्टदुःखहा
दान्तप्रिया दैत्यविदारिणी दहा ।
दानस्थलस्था दयिता जगत्पते-
र्दयां ददाति द्रवदेवदारा ॥ ५४ ॥

धात्री धराधारणतत्परा धनी-
धनप्रदा धर्मगतिर्धरित्री ।
दधार धीरं धनबीजमालिनी
ध्यानस्थिता धर्मनिरूपणाय ॥ ५५ ॥

नन्दस्य प्रतिपालनाय जगतामानन्दपुञ्जोदया
योगिन्यो नयनाम्बुजोज्ज्वलशिखाशोभाप्रमालाक्षरा ।
नीता नावपथस्थिता मतिमती याः पालयन्तीह ताः
पान्तु श्रीमुखतेजसा खलु यथा कालक्रमात् साधकम् ॥ ५६ ॥

पीता प्रेमविलासिनी वरपथज्ञानाश्रया पालनात्
पूज्या पायसपा परापरपदा पीताम्बरा पोषणा ।
प्रौढा प्रेमवती पुराणकथना पायात् पुरा पावनी
या कामेश्वरपावनं परजनं श्रीसाधकं प्रस्थिता ॥ ५७ ॥

फुत्फणिवरमाला फेरवी फेरुरूपा
फणधरमुखकुल्याम्भोजवाक्यामृताब्धौ ।
निरवधिहरिकण्ठे वाक्यरूपा फलस्था
फलगतफणिचूडा पातु फुल्लारविन्दे ॥ ५८ ॥

वज्राख्यां वशकारिणीं यदि जपेत् श्रीपादसंसेवनात्
बाल्यं वेदविनिर्गतां भगवतीश्रीरामदेवोर्व्वराम् ।
वश्या तस्य कराम्बुजे वसति सा वीरासनःस्था वशा
वक्त्राम्भोरुहकोमले भगवती भूतेश्वरी भूतगा ॥ ५९ ॥

माता मन्दिरमालिनी मतिमतामानन्दमालामला
मिथ्यामैथुनमोहिनी मनसि या मिला महन्मेलनी ।

मानी तं वदते महेश्वरमहित्वं तस्य वक्षःस्थले ?
स्थित्वा सा मरणं निहन्ति सहसा मौनावलम्बी भवेत् ॥ ६० ॥
[1]यातप्रिया या प्रतिभाति योगिनी
यामास्थिता योगमुखास्पदा यथा ।
योनिस्थले सा यतिसाधकं यशो-
यात्रा सदा पाति यमादिकं दहेत् ॥ ६१ ॥
रत्नस्था रतिराजिता रणमुखे राज्ञः [2]प्रियाभीतिहा-
रुक्मालङ्कृतरङ्गिणी रसवती रागापहा रोगहा ।
राजेन्द्रं रजनीस्थे प्रकुपिता राधामृता पाति तं
स्वाहारूपमनोरमा सुरमणी रामा रकाराक्षरी ॥ ६२ ॥
लक्ष्मीर्लाङ्गलिलक्षणा सुललना लोलामला निर्भया
[3]बालामूलमिवासतां लवणाकुला सिन्धूल्लासलीलाकुला ।
[4]लोलाकोलकुलान्नजानलमुखी लग्नालघूराकुला
[5]कौलार्काकुललोचना लयकरी लीलालयं पाति माम् ॥ ६३ ॥
विषासवस्थानरणस्थवासना
वश्यावहन्ती[6] ललनावशार्थम् ।
सा पाति वीरं यदि तां भजेद् वशी
विषाशनं ते निवसन्ति वारुणीम् ॥ ६४ ॥
शीतां शशीशोकविशेषनाशिनीं
भजेत् सुशीलां स भवेद्दिवाकरः ।
शिवां शचीं शौचशुभां शवप्रियां
शवस्थितां शीतलदेशशोभिताम् ॥ ६५ ॥

---

१. याति प्रिया ग० । २. रीतिहा ग० ।
३. मूलामूलनिरामतां सबलकुल्लासलोलाकुला क० ।
४. कुलानलमूलीलन्गालघूरा कुला—ग० ।
५. कौलालौलिलिलोचना नयबला वालोज्ज्वला पाति नः क०
६, सकला ग० ।

षट्चक्रे षट्पदाषाढी षडङ्गस्था षडानना ।
षट्चक्रे सिद्धिदा पाति साधकं षोडशी मुदा ॥ ६६ ॥
सा मा सूक्ष्मा [1]वहति सुजलं सप्तनाकस्थलाढ्या
सारा साक्षात् सुखसमरसोज्ज्वालसाह्लादसाम्या ।
साकारा साम्बुजमधुगिरा पूरयन्ती महार्थं
वेदा सौरा सुरमतिनिवहा सामवेदान्तरस्था ॥ ६७ ॥
हठात्कारेण सहारा हरति प्राणहं जनम् ।
निहारिणं न सा हन्ति हिरण्याहारमालिनी ॥ ६८ ॥
आलोका लक्षजपदा लाक्षरंल्लक्षणो[2] समा ।
आलग्दानाल सालापा ? पाति तं यो भजेल्लघु ॥ ६९ ॥
क्षयं क्षितौ याति सुसूक्ष्मभावनं
विहाय मन्त्री क्षयरोगहारिणी ।
सूक्ष्मातिसूक्ष्मान्यतमं विचिन्तयेत्
क्षोभादिकं पक्षकलाक्षयन्ती ॥ ७० ॥
षोडशस्वरभेदेन फलं शृणु महाप्रभो ।
संक्षेपेण प्रवक्तव्यमुत्कृष्टं फलकाङ्क्षिणाम् ॥ ७१ ॥
श्लोकत्रयेण तत्सर्वं फलमत्यन्तसाधनम् ।
ये कुर्वन्ति महादेव कामचक्रोत्सवं यथा ॥ ७२ ॥
आद्याष्टस्वरमङ्गलं जपति यः श्रीनाथवक्त्राम्बुजां
प्राप्य श्रीधरनायकः क्षितितले सिद्धो भवेत् तत्क्षणात् ।
राजा राजकुलेश्वरो जयपथे दीपोज्वलामालया
सम्पश्येत् परमां कलां जयति सः कामानलं ताडयेत् ॥ ७३ ॥
अ आ इ ई उ ऊ ऋ ॠ
शेषाष्टौस्वरपावनी [4]प्रियजनानन्देन मन्दोदरी
मन्त्रं हन्ति मदानना त्रिजगतां [4]साधूत्तमानां सुखम् ।

१. सा मासूक्ष्मा रस इति सुजनं सप्तलोकस्थलाद्या क० ।
२. आलोका लक्षजयदा लालाक्षराङ्कलोमशा क० ।
३. आलम्लोल्वान क० । ४. प्रियतम ग० ।

दत्त्वा पालयति प्रभाप्रबलये कौटिल्यविद्यापहा
[1]भक्तये क्षितिपालनं निजजपध्यानाकुलामङ्गलम् ॥ ७४ ॥
ऌ ॡ ए ऐ ओ औ अं अः ।
इति वर्णफलं ज्ञात्वा यो गृह्णाति मनूत्तमम् ।
स भवेत् कुलयोगार्थी सिद्धज्ञानी महीतले ॥ ७५ ॥
वर्गे वर्गे फलं नाथ शृणु वक्ष्यामि अद्भुतम् ।
प्रश्नादीनाञ्च कथनं यो जानाति स साधकः ॥ ७६ ॥
कवर्गे कामसम्पत्तिं श्रिया व्याप्तं सुमन्दिरम् ।
प्राप्नोति कामचक्रार्थं राशिनक्षत्रसंमतम् ॥ ७७ ॥
चवर्गे दीर्घजीवी स्यात् दृढसम्पदसेव च ।
वृत्तिं प्राप्नोति गमनादनुद्दिश्य शरीरिणः ॥ ७८ ॥
समाचारं समाप्नोति गमने सर्वमुत्तमम् ।
टवर्गे संभवे नाथ महदुच्चाटनादिकम् ॥ ७९ ॥
पुत्राणामपि वृद्धिः स्यात् तवर्गे धनलाभकम् ।
पवर्गे मरणं नाथ यादिक्षान्ते महागुणी ॥ ८० ॥
कामचक्रफलं नाथ राशिदण्डेन योजयेत् ।
निजगेहस्थितं राशिं ज्ञात्वा हि दिनदण्डतः ॥ ८१ ॥
गणयित्वाशुभं ज्ञानी अनुलोमविलोमतः ।
घटस्थं सकलं [2]सन्धिकोणस्थं पार्श्वके शुभम् ॥ ८२ ॥
शुभमन्त्रं गृहीत्वा तु सिद्धिमाप्नोति साधकः ॥ ८३ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावप्रश्नार्थनिर्णये
पाशवकल्पे कामचक्रसारसङ्केते सिद्धिमन्त्रप्रकरणे
चतुर्वेदोल्लासे भैरवभैरवीसंवादे
अष्टादशः पटलः ॥



---

१. साध्योत्तमानाम् ग० ।

२. त्यक्त्वा यः ग० ।

# ऊनविंशः पटलः

आनदभैरवी उवाच—

इदन्तु शृणु वक्ष्यामि सर्वतन्त्रार्थगोपनम्।
तत्सर्वं प्रश्नचक्रे च षडाधारस्य भेदनम् ॥ १ ॥
कालचक्रफलं तत्र निर्विकल्पादिसाधनम्।
प्रश्नचक्रं कामरूपं चैतन्यं सर्वदात्मनोः ॥ २ ॥
षड्मन्दिरे षट्कलापं कैवल्यसाधनादिकम्।
नानाभोगं योगसिद्धिं हित्वा यो मन्त्रमाजपेत् ॥ ३ ॥
स भवेद् देवताद्रोही कोटिकल्पेन सिध्यति।
हृदि यस्य महाभक्तिः प्रतिभाति महोदया ॥ ४ ॥
क्षणादेव हि सिद्धिः स्यात् किं जपैर्मन्त्रसाधनैः।
अतो भक्तिः सदा कुर्याद् देवताभावसिद्धये ॥ ५ ॥

भैरव उवाच—

एतच्चक्रप्रसादेन को वा किं सिद्धिमाप्नुयात्।
एतस्य भावनादेव किं फलं भावनं शुभम् ॥ ६ ॥
को वा प्रश्नादिकथने क्षमो भवति सुन्दरि।
तत्प्रकारं विधानेन वद मे फलसिद्धये ॥ ७ ॥

आनन्दभैरवी उवाच—

यः करोति पूर्णहोमं पुत्रार्थं योगसिद्धये।
कुण्डलीक्रमयोगेन पुनः पुनः क्रमेण च ॥ ८ ॥
एतच्चक्रार्थभावज्ञः स एव नात्र संशयः।
यः करोति सदा नाथ वायुनिर्गमलक्षणम् ॥ ९ ॥
ऊर्ध्वं संस्थाप्य विधिवद् भावनां कुरुते नरः।
स एव सिद्धिमाप्नोति सिद्धमार्गो न संशयः ॥ १० ॥

---

१. कालस्थम् ग०।

फलमेतद्भावनार्थं कामक्रोधादिवर्जितः ।
भावनाफलसिद्धयर्थं वायुसंयोगसंक्रमात् ॥ ११ ॥
लेपयित्वा शोधयित्वा मन्त्रयित्वा पुनः पुनः ।
धर्माधर्मविरोधेन सूक्ष्मवायुक्रमेण च ॥ १२ ॥
प्राप्नोति महतीं सिद्धिमेतच्चक्रस्य तत्फलम् ।
फलञ्च द्विविधं प्रोक्तं स्थूलसूक्ष्मपरस्थितम् ॥ १३ ॥
स्थूलं त्यक्त्वा महासूक्ष्मे मनो याति यदा यदा ।
तदा हि महती सिद्धिर मरस्तत्क्षणात् भवेत् ॥ १४ ॥
एकवारं भावयेद्यः सिद्धचक्रस्य वर्णकान् ।
तस्यैव भावसिद्धिः स्याद् भावेन किं न सिद्धयति ॥ १५ ॥
महद्भावं विना नाथ कः सिद्धिफलकग्रही ।
योगभ्रष्टः स्थूलफले परजन्मनि सिद्धिभाक् ॥ १६ ॥
ऐहिके सिद्धिमाप्नोति सूक्ष्मफलक्रमेण च ।
यो जानाति सूक्ष्मफलं स योगी भवति ध्रुवम् ॥ १७ ॥
स एव प्रश्नकथने योग्यो भवति साधकः ।
यः सूक्ष्मफलभोक्ता स्यात् क्रियागोपनतत्परः ॥ १८ ॥
निरन्तरं प्रश्नचक्रं आज्ञाचक्रोपरि स्थितम् ।
विभाव्य कालसिद्धिः स्यात् सर्वज्ञो वेदपारगः ॥ १९ ॥
कालज्ञानी च सर्वज्ञ इति तत्त्वार्थनिर्णयः ।
प्रश्नचक्रस्थितं वर्णं सूक्ष्मकालफलावहम् ॥ २० ॥
मनोरूपं दण्डभेदं मासभेदं सवर्गकम् ।
मनसो भ्रम एवं हि काल एको न संशयः ॥ २१ ॥
मृत्युवशं करोत्येव कालज्ञानी स योगिराट् ।
कालेन लीयते सर्वं त्रैलोक्यं सचराचरम् ॥ २२ ॥
कालाधीनमिदं विश्वं तस्मात् कालवशं नयेत् ।
तत्कालं सूक्ष्मनिलयं[1] दुर्वाच्यं प्रश्नकं शृणु ॥ २३ ॥

१. दुर्भाव्यम् ग० ।

मेषं तुलाराशिमनुत्तमं सदा
वैशाखमासे फलसिद्धिकारणम् ।
कवर्गमावाप्य स्वरान् स एव
विभावयेत् स क्षितिनाथ आभवेत् ॥ २४ ॥
आज्ञाचक्रोपरि ध्यात्वा सर्वचक्रं महाप्रभो ।
एकक्षणेन सिद्धिः स्यात् परभावेन हेतुना ॥ २५ ॥
सिद्धेशचक्रचैतन्यं यो जानाति महीतले ।
वाक्सिद्धिर्जायते मासाद्दिवारात्रिक्रमेण च ॥ २६ ॥
वर्णमालासमाक्रान्तं राशिनक्षत्रसंयुतम् ।
ग्रहचक्रं भावयित्वा सर्वं जानाति साधकः ॥ २७ ॥
चवर्गं वृषमीनस्थं कैशोरसिद्धिकारणम् ।
द्विमाससाधनादेव सर्वज्ञो भवति ध्रुवम् ॥ २८ ॥
योगिनी खेचरी[1] भूत्वा प्रयाति निकटे सताम् ।
ग्रहचक्रप्रसादेन जीवन्मुक्तस्तु साधकः ॥ २९ ॥
यदि कर्म करोत्येव एकान्तचित्तनिर्मलः ।
तस्याऽसाध्यं त्रिभुवने न किञ्चिदपि वर्तते ॥ ३० ॥
प्रश्नचक्रप्रसादेन सर्वे वै योगिनो भुवि ।
यदि योगी भवेद् भूमौ तदा मोक्षमवाप्नुयात् ॥ ३१ ॥
विना योगसाधनेन कः सिद्धो भूमिमण्डले ।
साधनेन विना सिद्धिः कस्य भक्तस्य जायते ॥ ३२ ॥
भक्तानां निकटे सर्वे प्रतिष्ठन्ति महर्षयः ।
अतो भक्तिं सदा कुर्यात् सर्वधर्मान् विहाय च ॥ ३३ ॥
तत्कालं भक्तिमाप्नोति प्रश्नचक्रप्रसादतः ।
तत्प्रकारं महाधर्मं को वक्तुं क्षम एव हि ॥ ३४ ॥
कश्चित्तद्भावसारश्च प्रश्नचक्रे वदाम्यहम् ।
चवर्गभावनादेव भक्तिं प्राप्नोति साधकः ॥ ३५ ॥

---

१. विद्या आयाति ग० ।

समाधाय परं देवमाज्ञाचक्रोपरि प्रभो ।
विभाव्य नित्यभावं हि प्राप्नोति तत्कुलावपि ॥ ३६ ॥
आनन्दाश्रूणि पुलको देहावेशमनोलयम् ।
सर्वकर्म स्वयं त्यागी यः करोति स योगिराट् ॥ ३७ ॥
टवर्गे वासनासिद्धिः संसाररहितो भवेत् ।
बलवान् सर्वविज्ञानी त्रिमासे खेचरो भवेत् ॥ ३८ ॥
खेचरीमेलनं तस्य [1]परं प्राप्नोति चक्रतः ।
टवर्गं व्याप्य तिष्ठन्ति मिथुनं कुम्भयोनयः ॥ ३९ ॥
स्वनक्षत्रस्वयोगश्च विभाव्य योगिराड् भवेत् ।
चतुर्मासे पूर्णयोगी तवर्गसाधनादपि ॥ ४० ॥
[2]वेतालादिमहासिद्धिमिन्द्रसिद्धिं समाप्नुयात् ।
तवर्गं व्याप्य [3]तिष्ठन्ति मकरवृश्चिककर्कटाः ॥ ४१ ॥
चिरजीवी भवेदीश [4]इन्द्रतुल्यप्रियो भवेत् ।
तिष्ठेत् प्रलयपर्यन्तं महाप्रलयरूपवान् ॥ ४२ ॥
कृत्वा कालवशं मन्त्री महावायौ महालयम् ।
महाचक्रे सूर्यमध्ये वह्निमण्डलमध्यगे ॥ ४३ ॥
[5]वाग्देवता तस्य साक्षाद्भवतीति न संशयः ।
पवर्गं व्याप्य तिष्ठन्ति धनुःसिंहास्तु [6]चित्कलाः ॥ ४४ ॥

---

१. सुरम् क० ।

२. इन्दु क० ।

३. मकरावृक्षकर्कटा ? ग० ।

४. इन्दु क० ।

५. चन्द्र क० ।

६. महाप्रलयभावेन लीनं कुर्य्याद् महानिले ।
महाप्रलयपर्यन्तं सैव तिष्ठति निश्चितम् ॥
पञ्चमे मासि संप्राप्ते पवर्गशुभलक्षणे ।
मनो निधाय यो योगी ध्यानचिन्तापरो यदि ॥ क० ।

७. मित्कत्वाः क० ख० ।

विभाव्य परमस्थानं स नश्यति महानिलम् ।
त्रैलोक्यमष्टवर्गं च षट्चक्रं चक्षुषा क्षणात् ॥ ४५ ॥
यदि वान्तं ब्रह्मरूपं सर्वतीर्थपदाश्रयम् ।
महासत्त्वगुणाक्रान्तं मत्वा निर्मलचक्षुषा ॥ ४६ ॥
कन्यावृश्चिकराशिभ्यां ब्रह्ममार्गं विलोकयेत् ।
षण्मासेन सिद्धिः स्याद् महाकौलो भवेद् ध्रुवम् ॥ ४७ ॥
मौनी एकान्तभक्तः स्यात् श्रीपादाम्भोजदर्शनम् ।
प्राप्नोति साधकश्रेष्ठः सायुज्यपदवीं लभेत् ॥ ४८ ॥
ततो मध्ये प्रगच्छन्ति योगिनस्तत्त्वचिन्तकाः ।
शादिक्षान्ते चतुष्कोणे सर्वयोगाश्रये पदे ॥ ४९ ॥
विभाव्य याति शीघ्रं सः श्रीदेवीलोकमण्डले ।
महाकालो भवेद् धीमान् प्रश्नचक्रस्य भावकः ॥ ५० ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावप्रश्नार्थनिर्णये
पाशवकल्पे प्रश्नचक्रसारसङ्केते सिद्धमन्त्रप्रकरणे
चतुर्वेदोल्लासे भैरवीभैरवसंवादे
ऊनविंशः पटलः ॥



# विंशः पटलः

आनन्दभैरवी उवाच—

अथ वक्ष्ये महादेव सिद्धमन्त्रविचारणम् ।
जपित्वा भावयित्वा च नरो मुच्येत सङ्कटात् ॥ १ ॥

आनन्दभैरव[1] उवाच—

फलचक्रे सर्वमन्त्रं सर्वसारं तनुप्रियम् ।
क्रियायोगाद्भवेत् सिद्धिर्वायवीशक्तिसेवनात् ॥ २ ॥
वह्निबीजं त्रिकोणस्थं षट्कोणं तद् बहिः प्रभो ।
षट्कोणे षण्मनुं ध्यात्वा षण्मासाद्रुद्ररूपिणः ॥ ३ ॥
अष्टकोणे स्थितान् वर्णान् अङ्कभेदेन पण्डितः ।
अङ्कसंख्याक्रमेणैव ध्यात्वा तद् बहिरेव च ॥ ४ ॥
तत्संख्यासु गतान् वर्णान् विभाव्य खेचरो भवेत् ।
विना त्रिकोणयोगेन षट्कोणं तत्र वर्णकान् ॥ ५ ॥
आज्ञाचक्रमध्यदेशे कामचक्रं मनोरमम् ।
कामचक्रं मध्यदेशे महासूक्ष्मफलोदयम् ॥ ६ ॥
प्रश्नचक्रं षट्पदार्थं षट्चक्रफलसाधनम् ।
प्रश्नचक्रे फलचक्रं योगाष्टाङ्गफलप्रदम् ॥ ७ ॥
फलचक्रस्योदूर्ध्वभागे वर्णमालाक्रमेण तु ।
तद्वर्णान् मौनजापेन फलसारं समाप्नुयात् ॥ ८ ॥
फलचक्रप्रसादेन तत्त्वचिन्तापरो मतिः ।
स्थित्वा भ्रूमध्यकुहरे सदा भावयतीश्वरम् ॥ ९ ॥
भावज्ञानी भवेत् शीघ्रं मूढोऽपि भावनावशात् ।
आदौ सूक्ष्मफलं वक्ष्ये वर्णभेदेन शङ्कर ॥ १० ॥

---

१. इति क० ।

वह्निर्भाति निरन्तरं त्रिगजतां नाशाय रक्षाकरो
जीवः सर्वचलाचलस्थदहनं श्रीकालिकाविग्रहः।
सर्वव्यापक ईश्वरः क्षयति यः कामान् मनःपल्लवं
ध्यात्वा तं समरूपवान् परशिवज्ञानी भवेत्तत्क्षणात् ॥ ११ ॥

वह्निबीजं सूक्ष्मफलं साक्षात् प्रत्यक्षकारणम्।
त्रिकोणस्थं वह्निबीजं विधिविद्याप्रकाशकम् ॥ १२ ॥

अकस्मात् सिद्धिदातारं यो भजेत् स भवेत् सुखी।
षट्कोणस्थवर्णमन्त्रान् शृणुष्वानन्दभैरव ॥ १३ ॥

यज्ज्ञात्वा देवताः सर्वा दिग्विदिक्षु प्रपालकाः।
तद्भेदं रमणीयार्थं सङ्केतशुद्धिलाञ्छितम् ॥ १४ ॥
वह्निबीजस्योर्ध्वदेशे चन्द्रबीजमनुत्तमम्।
तत्र यो भावयेन्मन्त्री स सिद्धो नात्र संशयः ॥ १५ ॥

विधोर्बीजं सूक्ष्मं विमलकमलं कान्तकिरणं
सदा जीवस्थानं प्रलयनिलयं वायुजडितम्।
ततो वामे सूर्यं सकलविफलध्वंसनिकरं
महावह्निस्थानं भजति सुजनो भावविधिना ॥ १६ ॥
तदधः कोणगेहे च श्रीबीजं पञ्चमस्वरम्।
भावकल्पलतासारमकारादिकुलाक्षरम् ॥ १७ ॥
चतुःपञ्चाशदङ्कस्थं वायुबीजमधस्ततः।
विभाव्य वायवीसिद्धिमवाप्नोति नराधिपः ॥ १८ ॥
तदङ्गं दक्षिणे नाथ भवानीबीजमण्डलम्।
युग्मस्वरसमाक्रान्तं विभाव्य योगिराड् भवेत् ॥ १९ ॥
तद्दक्षिणोर्ध्वकोणे च सोमबीजमनुत्तमम्।
विभाव्य जगतामीशदर्शनं प्राप्नुयान्नरः ॥ २० ॥
तदूर्ध्वे परमं बीजं साक्षात्कारफलप्रदम्।
मासैकभावनादेव देवलोके गतिर्भवेत् ॥ २१ ॥

तदूर्ध्वकोणगेहे च रुक्मिणीबीजमद्भुतम्[1] ।
साधनादेव सिद्धिः स्याल्लक्ष्मीनाथो भवेदिह ॥ २२ ॥
अङ्कक्रमेण सर्वत्र ज्ञेयं स्वरविधानकम् ।
येन तेन स्वरेणापि वेष्टितं फलबीजकम् ॥ २३ ॥
[3]भवत्येव महादेव वायुसिद्ध्यादिकारणम् ।
अष्टकोणं तले नाथ षट्कोणे यानि सन्ति वै ॥ २४ ॥
तद्बीजानि सत्फलानि ध्यात्वा वाक्सिद्धिमाप्नुयात् ।
रेफोदूर्ध्वे कमलाबीजं भावकल्पद्रुमाकरम् ॥ २५ ॥
सर्वत्र तेजसा व्याप्तं विभाव्य योगिनीपतिः ।
तदधः शीतलाबीजं वामभागक्रमेण तु ॥ २६ ॥
विभाव्य परमानन्दरसे मग्नो महासुखी ।
तदधः कामबीजञ्च कामनाफलसिद्धिदम् ॥ २७ ॥
यो जपेत् परमानन्दो नित्यज्ञानी च वायुना ।
तदग्रे वेदकोणे च वारुणं बीजमुत्तमम् ॥ २८ ॥
विभाव्य भावको भूत्वा चिरजीवी स जीवति ।
[3]तदूर्ध्वे पञ्चमे कोणे वज्रबीजं वकारकम् ॥ २९ ॥
[4]अष्टसिद्धिकरं साक्षाद् भजतां शीघ्रसिद्धिदम् ।
षट्कोणे च तदूर्ध्वे च सुरबीजं महाफलम् ॥ ३० ॥

---

१. अद्भुतं कमनीयार्थम् ग० ।

२. मण्डितम् ग० ।

३. फलत्येव

४. अष्टसिद्धिकरं साक्षाद् भजतां शीघ्रसिद्धिदम् ।
षट्कोणे च तदूर्ध्वे च स्वरबीजं महाफलम् ॥
हृदि यो भावयेन्मन्त्री तस्य सिद्धिः प्रतिष्ठिता ।
अष्टकोणस्योर्ध्वदेशे वर्णमालाविधिं शृणु ॥
येन भावेन मात्रेण सर्वज्ञो जगदीश्वरः ।
ओ औ पवर्गमेवं हि यो नित्यं भजतेऽनिशम् ॥

हृदि यो भावयेन्मन्त्री तस्य सिद्धिः प्रतिष्ठिता ।
अष्टकोणस्योद्ध्र्वदेशे वर्णमालाविधिं शृणु ॥ ३१ ॥
येन भावनमात्रेण सर्वज्ञो जगदीश्वरः ।
ओ औ पवर्गमेवं हि यो नित्यं भजतेऽनिशम् ॥ ३२ ॥
तस्य सिद्धिः क्षणादेव वायवीरूपभावनात् ।
चन्द्रबीजस्योद्ध्र्वदेशे विभाति पूर्णतेजसा ॥ ३३ ॥
ऌ ए ऐ तवर्गश्च तद्दक्षिणविधानतः ।
तेजोमयी वायुशक्तिर्ददाति सर्वमङ्गलम् ॥ ३४ ॥
टवर्गं भावयेन्मन्त्री ऋ ॠ ऌ स्वरसंयुतम् ।
अष्टैश्वर्यप्रदं नित्यं कमलासनसिद्धिदम् ॥ ३५ ॥
तदधो भावयेद् यस्तु स भवेत् कल्पपादपः ।
भवानीबीजरूपस्य अधोगेहे विभावयेत् ॥ ३६ ॥
इ ई युग्मं चवर्गश्च भावयित्वामरो भवेत् ।
अ आ इ संयुतो नाथ कवर्गं कुरुते जयम् ॥ ३७ ॥

---

तस्य सिद्धिः क्षणादेव वायवीरूपभावनात् ।
चन्द्रबीजस्योर्ध्वदेशे विभाति पूर्णतेजसा ॥
ट ए ऐ तवर्गश्च तद्दक्षिणविधानतः ।
तेजोमयी वायुशक्तिर्ददाति सर्वमङ्गलम् ॥
टवर्गं भावयेन्मन्त्री ऋ ऋ ऌ स्वरसंयुतम् ।
अष्टैश्वर्यप्रदं नित्यं कमलामन्त्रसिद्धिदम् ॥
तदधो भावयेद् यस्तु स भवेत् कल्पपादपः ।
भवानीबीजरूपस्य ह्यधोगेहे विचारयेत् ॥
इ ई युग्मं चवर्गञ्च भावयित्वाऽमरो भवेत् ।
अ आ इ संयुतं चात्र कवर्गं चारुतेजसम् ॥
भावयेत् परया भक्त्या सोऽभीष्टं फलमाप्नुयात् ।
इत्येतत् कथितं ह्यत्र फलचक्रञ्च सारदम् ॥
एतच्चक्रभावनाभिः महाविद्यापतिर्भवेत् ।
कामरूपमहापीठे लिङ्गपीठे प्रयत्नतः ॥

भावयेत् परया भक्त्या सोऽभीष्टं फलमाप्नुयात् ।
इत्येतत् कथितं नाथ फलचक्रं च सारदम् ॥ ३८ ॥
एतच्चक्रभावनाभिर्महाविद्यापतिर्भवेत् ।
कामरूपे महापीठे लिङ्गपीठे प्रयत्नतः ॥ ३९ ॥
आज्ञाचक्रं चतुश्चक्रं भावयित्वाऽमरो भवेत् ।
महायोगी हिरण्याक्षो मासैकभावनावशात् ॥ ४० ॥
सप्तद्वीपेश्वरो भूत्वा अन्ते विष्णुर्बभूव सः ।
स्थिरचेताः स योगी स्यादिति तन्त्रार्थनिश्चयः ॥ ४१ ॥
एतानि चक्रसाराणि आज्ञाचक्रस्थितानि च ।
विभाव्य परमानन्दैरात्मसिद्धिर्भवेद्ध्रुवम् ॥ ४२ ॥
सूक्ष्मवायुप्रसादेन चिरजीवी भवेदिह ॥ ४३ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावप्रश्नार्थनिर्णये
पाशवकल्पे फलचक्रसारसङ्केते सिद्धमन्त्रप्रकरणे
चतुर्वेदोल्लासे भैरवीभैरवसंवादे
विंशः पटलः ॥



# एकविंशः पटलः

श्रीभैरव उवाच—

वद कान्ते रहस्यं मे येन सिद्धो भवेन्नरः ।
तत्प्रकारं विशेषेण देवानामपि दुर्लभम् ॥ १ ॥
वीरभावस्य माहात्म्यमकस्मात् सिद्धिदायकम् ।
करुणादृष्टिरानन्दा यदि चेदस्ति सुन्दरि ॥ २ ॥

आनन्दभैरवी उवाच—

परमानन्दसारज्ञो योगज्ञक्षेत्रपालक[1] ।
रहस्यं शृणु मे नाथ महाकालज्ञ भावग ॥ ३ ॥
योगमार्गानुसारेण वीरभावं श्रयेत कः ।
आनन्दोद्रेकपुञ्जं तत् शक्तिवेदार्थनिर्णयम् ॥ ४ ॥
वेदाधीनं महायोगं योगाधीना च कुण्डली ।
कुण्डल्यधीनं चित्तं तु चित्ताधीनं चराचरम् ॥ ५ ॥
मनसः सिद्धिमात्रेण शक्तिसिद्धिर्भवेद् ध्रुवम् ।
यदि शक्तिर्वशीभूता त्रैलोक्यञ्च तदा वशम् ॥ ६ ॥
अमरः स भवेदेव सत्यं सत्यं कुलेश्वर ।
सहस्रश्लोकयोगेन वीरयोगार्थनिर्णयम् ॥ ७ ॥
पटलैकादशक्षेमयोगेन योगमण्डलम् ।
षट्चक्रबोधनी विद्या सहस्रदलपङ्कजम् ॥ ८ ॥
कैलासाख्यं सूक्ष्मपथं ब्रह्मज्ञानाय योगिनाम् ।
कथयामि महावीर क्रमशः क्रमशः शृणु ॥ ९ ॥
वीराणामुत्तमानाञ्च भ्रष्टानां प्रहिताय च ।
साक्षात् सिद्धिकरं यद्यत् तत्सर्वं प्रवदामि ते ॥ १० ॥

---

१. क्षेत्रपारग ग० ।

[1]योगशास्त्रक्रमेणैव य सिद्धिफलमिच्छति ।
स सिद्धो भवति क्षिप्रं ब्रह्ममार्गे न संशयः ॥ ११ ॥
ब्रह्मविद्यास्वरूपेण जपहोमार्चनादिकम् ।
कुरुते फलसिद्ध्यै यः स ब्रह्मज्ञानवान् शुचिः ॥ १२ ॥
षट्चक्रभेदने प्रीतिर्यस्य साधनचेतसः ।
संसारे वा वने वापि स सिद्धो भवति ध्रुवम् ॥ १३ ॥
षट्चक्रार्थं न जानाति यो भजेदम्बिकापदम् ।
तस्य पापं क्षयं याति सप्तजन्मसु सिद्धिभाक् ॥ १४ ॥
ज्ञात्वा षट्चक्रभेदञ्च यः कर्म कुरुतेऽनिशम् ।
संवत्सरात् भवेत् सिद्धिरिति तन्त्रार्थनिर्णयः ॥ १५ ॥
प्रस्वेदनं समाप्नोति मासत्रयनिषेवणात् ।
अष्टमासात् कल्पनाशो वत्सरात् खेचरी गतिः ॥ १६ ॥
प्रस्वेदमधमं प्रोक्तं कल्पनं मध्यमं स्मृतम् ।
भूमेरुत्थापनं नाथ खेचरत्वं महासुखम् ॥ १७ ॥
द्वात्रिंशद्ग्रन्थिभेदञ्च मूलाधारावधिस्थितम् ।
मेरुदण्डाश्रितं देशं कृत्वा ब्रह्ममयो भवेत् ॥ १८ ॥
सुषुम्ना बाह्यदेशे च यद् यद् ग्रन्थिपदं प्रभो ।
क्रमशः क्रमशो भित्वा खेचरो भवति ध्रुवम् ॥ १९ ॥
अल्पकार्ये मनोदत्वा ध्यानज्ञानविवर्जितः ।
उन्मत्तः स भवेदेव शास्त्राणां योगिराड् भवेत् ॥ २० ॥
हिमकुन्देन्दुधवलां बालां शक्तिं महोज्ज्वलाम् ।
कलिकालफलानन्दां मूले ध्यात्वा भवेद् वशी ॥ २१ ॥
मूलपद्मं महाज्ञानी ध्यात्वा चारुचतुर्दले ।
कपिलाकोटिदानस्य फलं प्राप्नोति योगिराट् ॥ २२ ॥

१. मार्ग ग० ।

मूलपद्मे कोटिचन्द्रकलायुक्तं सरक्तकम् ।
गलत्सुधारसामोदवदनाब्जं फलं भजेत् ॥ २३ ॥
निर्मलं कोटिवीरोग्रतेजसं ब्रह्मरूपिणम् ।
वामपार्श्वे कुण्डलिन्या विभाव्य शीतलो भवेत् ॥ २४ ॥
ततः श्रीयामलं वीरं तदाकारं तदुद्भवम् ।
ललाटवह्निजं देव्या नाथं भजति योगिराट् ॥ २५ ॥
तत्र पद्मपूर्वदले सिन्धूरारुणविग्रहम् ।
वकारं कोटिचपलामालं भजति योगिराट् ॥ २६ ॥
तत्पार्श्वे शोणितदले आज्ञाचक्रं मनोरमम् ।
यथा ध्यानं कुण्डलिन्या आज्ञाचक्रे तथात्र च ॥ २७ ॥
भूमिचक्रक्रमं नाथ शृणु शङ्कर योगिनाम् ।
यं ध्यात्वा सिद्धिमाप्नोति सिद्धिदं षड्गृहं भवेत् ॥ २८ ॥
षड्गृहं त्रिकलागेहमेकत्रस्थं महाप्रभम् ।
ध्यायेद् योगिनीगेहं मध्यगेहे रवीजकम् ॥ २९ ॥
वकारं दक्षिणे गेहे हेममालिनमञ्जनम् ।
डाकिनीपरमाबीजं ब्रह्मबीजं विभावयेत् ॥ ३० ॥
वकारवामपार्श्वे च योगिनां योगसाधनम् ।
सदाशिवमहाबीजं विभाव्य योगिराड् भवेत् ॥ ३१ ॥
वं बीजं वारुणाध्यक्षं हिमकुन्देन्दुनिर्मलम् ।
तद्विष्णोर्जन्मसंस्थानं सत्त्वं द्रवमुपाश्रयेत् ॥ ३२ ॥
तदूर्ध्वपूर्वगेहे च लं बीजमिन्द्रपूजितम् ।
विद्युल्लताहेमवर्णं विभाव्य योगिनां पतिः ॥ ३३ ॥
इन्द्रबीजं दक्षपार्श्वे श्रीबीजं बिन्दुलाञ्छितम् ।
स्थिरविद्युल्लतारूपमिन्द्राण्याः साधु भावयेत् ॥ ३४ ॥
तद्वामपार्श्वभागे च प्रणवं ब्रह्मसेवितम् ।
विभाव्य कोटिमिहिरं योगिराड् भवति ध्रुवम् ॥ ३५ ॥

वं बीजाधोमन्दिरे श्रीविद्यायाः बीजतेजसम् ।
कोटिसूर्यप्रभाकारं विभाव्य सर्वगो भवेत् ॥ ३६ ॥
निजदेव्या वामभागे अधः कनकमन्दिरे ।
श्रीगुरो रमणं बीजं ध्यात्वा वाग्भवमीश्वरम् ॥ ३७ ॥
निजदेव्या दक्षपार्श्वे दीर्घप्रणवतेजसम् ।
कोटिसूर्यप्रभारूपं ध्यात्वा योगी भवेद् यतिः ॥ ३८ ॥
निजदेवीं तत्र पद्मे मनःसद्वाक्ययोगकैः ।
यथा ध्यानं तथा मौनं ध्यानं कुर्याज्जगत्पतेः ॥ ३९ ॥
ब्रह्मणः पूरकेणैव महायोगक्रमेण तु ।
सूक्ष्मवायुद्गमेनापि भूमिचक्रे जपश्चरेत् ॥ ४० ॥
चतुष्कोणं धरायास्तु नवभूमि गृहान्वितम् ।
अष्टगेहं विभेद्यादौ वसुशून्ये यजेद् यतिः ॥ ४१ ॥
धराबीजं वान्तवर्णं शक्रेण परिपूजितम् ।
विभाव्य कुण्डलीतत्त्वं सर्वसिद्धीश्वरो भवेत् ॥ ४२ ॥
भजेदिन्द्रं तत्र नाके श्वेतकुञ्जरवाहनम् ।
चतुर्बाहुं देवराजं विद्युत्पुञ्जं भवक्षयम् ॥ ४३ ॥
डाकिन्या मन्दिरे कान्तं ब्रह्माणं हंसहंसगम् ।
नवीनार्कं चतुर्बाहुं चतुर्वक्त्रं भजेद् वशी ॥ ४४ ॥
ब्रह्माणं डाकिनीयुक्तं सिन्दूराप्लुतभास्करम् ।
परमामोदमत्तं तं विभाव्य योगिराड् भवेत् ॥ ४५ ॥
विद्युल्लतावदुज्ज्वालां श्रीदेवडाकिनीं सुराट् ।
अभीक्ष्णं रक्तनयनां हंसस्थां भावयेद् वशी ॥ ४६ ॥
हंसोदूर्ध्वे कमलाबीजं सर्वालङ्कारभूषितम् ।
महालक्ष्मीस्वरूपं यत्तद् भजन्ति महर्षयः ॥ ४७ ॥
इन्द्रपृथ्वीबीजवामे प्रणवं ब्रह्मसेवितम् ।
प्राणायामसिद्धिदं यत्तद् भजन्ति महर्षयः ॥ ४८ ॥

तदधः प्राणनिलयं प्रेतबीजं शशिप्रभम् ।
विभाव्य शिवतुल्यः स्याद् भूमिचक्रे सदाशिवः ॥ ४९ ॥
तदधो वाग्भवं ध्यायेत् कोटिसौदामिनीप्रभम् ।
गुरुबीजं भूमिचक्रे महाविद्यागुरुर्भवेत् ॥ ५० ॥
दक्षिणे मध्यगेहे च श्रीविद्यानिर्मलं पदम् ।
विभाव्य मानसध्यानात् सिद्धो भवति साधकः ॥ ५१ ॥
तद्दक्षिणे शेषगेहे प्रणवान्तं मनूत्तमम् ।
सर्वाधारं ब्रह्मविष्णुशिवदुर्गापदं भवेत् ॥ ५२ ॥
एतत् श्रीभूमिचक्रार्थं सर्वं चैतन्यकारकम् ।
मूलाधारपूर्वदले वकारं व्याप्य तिष्ठति ॥ ५३ ॥
भूमिचक्रमण्डले तु वकारस्थं स्मरेद्यदि ।
ब्रह्माण्डमण्डलेशः स्यादण्डं व्याप्यैकपत्रकम् ॥ ५४ ॥
तदेकपत्रं पद्मस्य शोणितं निर्मलद्युतिम् ।
तन्मध्यान्ते भूमिचक्रे मध्ये वं भावयेद् वशी ॥ ५५ ॥
एतच्चक्रप्रसादेन वरुणो मदिरापतिः ।
अमृतानन्दहृदयः सर्वैश्वर्यान्वितो भवेत् ॥ ५६ ॥
द्वितीये दक्षिणे पत्रे वान्तबीजं महाप्रभम् ।
मनो विधाय योगीन्द्रो ध्यायेद् योगार्थसिद्धये ॥ ५७ ॥
तत्र ध्यायेत् स्वर्गचक्रं स्वर्गशोभासमाकुलम् ।
विभाव्य स्वर्गनाथः स्याद्देवेन्द्रसदृशो भुवि ॥ ५८ ॥
पञ्चकोणं विभेद्यापि पञ्चकोणं विभाति यत् ।
तन्मध्ये वृत्तयुगलं तत्र षट्कोणगं भजेत् ॥ ५९ ॥
एतत् स्वर्गाख्यचक्रन्तु भूपुरद्वयमध्यके ।
दक्षिणोत्तरपत्रस्थे विभाव्य वान्तमीश्वरम् ॥ ६० ॥
षट्कोणान्तर्गतं वान्तं विद्युत्कोटिसमप्रभम् ।
तमाश्रित्य सुराः सर्वे दशकोणे वशन्ति ते ॥ ६१ ॥

पूर्वकोणे महेन्द्रश्च सर्वदेवसमास्थितः ।
इन्द्राणीसहितं ध्यात्वा योगीन्द्रो भवति ध्रुवम् ॥ ६२ ॥
तद्दक्षिणे रक्तकोणे वह्निं स्वाहान्वितं स्मरेत् ।
कोटिकालानललोलं परिवारगणान्वितम् ॥ ६३ ॥
तद्दक्षिणे कालरूपी भाति शक्तियुतः प्रभुः ।
परिवारान्वितं ध्यात्वा तं मृत्युवशमानयेत् ॥ ६४ ॥
नैर्ऋतं विद्युदाकारं कन्दर्पदमनं प्रियम् ।
शक्तियुक्तं स्वरानन्दं विभाव्य योगिनीपतिः ॥ ६५ ॥
तदधो वरुणं ध्यात्वा सुशक्तिपरिलालितम् ।
जलानामधिपं सत्त्वं नित्यसत्त्वश्रियो भवेत् ॥ ६६ ॥
तद्वामे मरुतः कोणं मरुद्गणविभाकरम् ।
वायुस्थानं लयस्थानं वायुव्याप्तं भवेत् सुधीः ॥ ६७ ॥
तत्पश्चाद् गणनाथश्च मत्तं शक्तिसमन्वितम् ।
परिवारगणानन्दं विभाव्य स्याद् गणेश्वरः ॥ ६८ ॥
तत्पश्चात् परमं स्थानमीशं शक्तिसमन्वितम् ।
परिवारान्वितं ध्यात्वा कामरूपी भवेद्यतिः ॥ ६९ ॥
तत्पश्चात् कोणगेहे च चन्द्रसूर्याग्नितेजसम् ।
एकरूपमूर्द्ध्वसंस्थं ब्रह्माणं भावयेद्यतिः ॥ ७० ॥
इन्द्रवामकोणगेहे अनन्तं वह्निरूपिणम् ।
अनन्तसदृशं ध्यात्वा अनन्तसदृशो भवेत् ॥ ७१ ॥
एतत् स्वचक्रमध्ये तु वृत्तयुग्मं महाप्रभम् ।
सर्वदा वह्निना व्याप्तं ज्वलदग्निं विभावयेत् ॥ ७२ ॥
वृत्तमध्ये च षट्कोणं कोणे कोणे रिपुक्षयम् ।
लोभमोहादिषट्कञ्च हरेत् षट्कोणसंस्थितान् ॥ ७३ ॥
लोभं हरति इन्द्राणी मोहं हरति दण्डधृक् ।
कामं नैर्ऋतवरुणौ क्रोधं वायुश्च योगिनाम् ॥ ७४ ॥

मदं हरेदधीशश्च ब्रह्मानन्तौ हि योगिनाम् ।
मात्सर्यं संहरत्येव मासत्रयनिषेवणात् ॥ ७५ ॥
षट्कोणमध्यदेशस्थं वान्तबीजं शशिप्रभम् ।
स्वर्णालङ्कारजडितं भावयेद् योगसिद्धये ॥ ७६ ॥
सदा व्याप्तं कुण्डलिन्या पालितं मण्डितं सुधीः ।
तैले यथा दीपपुञ्जं विभाव्य योगिराड् भवेत् ॥ ७७ ॥
स्वयंभूलिङ्गं तत्रैव विभाव्य चन्द्रमण्डलम् ।
आप्लुतं कारयेन्मन्त्री कुण्डलीसहितं वशी ॥ ७८ ॥
एवं क्रमेण सिद्धः स्यात् कुण्डल्याकुञ्चनेन च ।
सदाभ्यासी महायोगी संस्थाप्य वायवीं ततः ॥ ७९ ॥
वायव्याभासयुक्तेन एतच्चक्राश्रयेण च ।
मूकोऽपि वाक्पतिर्भूयात् फलभागी दिने दिने ॥ ८० ॥
तृतीयदलमाहात्म्यं योगिज्ञानोदयं परम् ।
भावसिद्धिर्भवेत्तस्य यो भजेदात्मचिन्तनम् ॥ ८१ ॥
दलमध्ये तुलाचक्रं चतुष्कोणे गृहाणि च ।
द्वात्रिंशद्ग्रन्थिरूपाणि सन्ति ग्रन्थिविभेदने ॥ ८२ ॥
तुलाचक्रस्य नाडीभिर्द्वात्रिंशद्ग्रन्थिभेदनम् ।
गलदेशावधि ध्यानं मेरुमध्ये प्रकारयेत् ॥ ८३ ॥
द्वात्रिंशद्ग्रन्थिगेहस्य मध्ये वृत्तत्रयं शुभम् ।
तन्मध्ये च त्रिकोणे च खं मूर्द्धन्यं भजेद् वशी ८४ ॥
एतद्गेहे विभाव्यानि वर्णजालफलानि च ।
दक्षिणावर्तयोगेन विभाव्य वाक्पतिर्भवेत् ॥ ८५ ॥
अकारमाद्यगेहे च अनुस्वारं द्वितीयके ।
विसर्गन्तु तृतीये च यो भजेत्स भवेद्वशी ॥ ८६ ॥
एतदन्यमन्दिरेषु कादिहान्तं विभावयेत् ।
वादिसान्तं वर्जयित्वा सबिन्दुं स भवेद्वशी ॥ ८७ ॥

आज्ञाचक्रे यथानामफलं प्राप्नोति साधकः ।
वर्णानां मूलपद्मे तु तत्फलं हि तुलागृहे ॥ ८८ ॥
भजेन्मध्यं सकारस्य त्रिवृत्तस्थ त्रिकोणके ।
ज्वालामालसहस्राढ्यं स्वर्णालङ्कृतमाश्रयेत् ॥ ८९ ॥
प्रत्येकवर्णपुटितं तुलाचक्रे च मौनवान् ।
मौनं जपं यः करोति षकारं व्याप्य योगिराट् ॥ ९० ॥
एतद्योगप्रसादेन चैतन्या कुण्डली भवेत् ।
वाक्सिद्धिश्च भवेत्तस्य तापत्रयविनाशिनी ॥ ९१ ॥
सिद्धिर्मन्त्रस्य वर्णानां जपमात्रेण शङ्कर ।
तुलाचक्रान्तरस्थानं विभाव्य मन्त्रसिद्धिभाक् ॥ ९२ ॥
एतच्चक्रं विना नाथ कुण्डली नापि सिद्ध्यति ।
भावज्ञानं विना कुत्र योगी भवति भारते ॥ ९३ ॥
अथान्यदलमाहात्म्यं शृणु वक्ष्यामि तत्त्वतः ।
योगसञ्चारसारं यत् कुण्डलीशक्तिसाधनम् ॥ ९४ ॥
शक्तिबीजं बिन्दुयुक्तं अष्टकोणस्थनिर्मलम् ।
विद्युत्पुञ्जं स्वर्णमालावेष्टितं भावयेद्यतिः ॥ ९५ ॥
चतुष्कोणं विभेद्यापि चतुष्कोणं मनोहरम् ।
तन्मध्ये च चतुष्कोणं सबीजं भावयेत्ततः ॥ ९६ ॥
कोटिसूर्यसमां देवीं कुण्डलीदेवमातरम् ।
पादाङ्गुष्ठावधिं ध्यात्वा सर्वसिद्धीश्वरो भवेत् ॥ ९७ ॥
यदि वारिचक्रमध्ये ध्यानं कुर्वन्ति मानुषाः ।
अमराः सत्त्वयोगस्थाः षट्चक्रफलभोगिनः ॥ ९८ ॥
तच्चतुष्कं समावाप्य वारिव्याप्तं सुनिर्मलम् ।
वामावर्तस्थितं ध्यायेत् सप्तखण्डं महाबली ॥ ९९ ॥

सप्तवृत्तोपरि ध्यायेद् दलषोडशपङ्कजम् ।
दले दले महातीर्थं सिद्धो भवति निश्चितम् ॥ १०० ॥
तीर्थमालावृतं नाथ दलं षोडशशोभितम् ।
तदेकपत्रमध्ये तु भाति विद्युल्लतान्वितम् ॥ १०१ ॥
पूर्वादौ दक्षिणे पातु तीर्थमालाफलं शृणु ।
येषां दर्शनमात्रेण जीवन्मुक्तस्तु साधकः ॥ १०२ ॥
गङ्गा गोदावरी देवी गया गुह्या महाफला ।
यमुना कोटिफलदा बुद्धिदा च सरस्वती ॥ १०३ ॥
मणिद्वीपं श्वेतगङ्गा महापुण्या महाफला ।
श्वेतगङ्गामहापुण्या भर्गगङ्गा महाफला ॥ १०४ ॥
स्वर्गगङ्गामहाक्षेत्रं पुष्करं तीर्थपारणम् ।
कावेरी सिन्धुपुण्या च नर्मदा शुभदा सदा ॥ १०५ ॥
अष्टकोणे अष्टसिद्धिं वारिपूर्णां फलोदयाम् ।
सप्तकोणे सप्तसिन्धुं पूर्वादौ भावयेद् यतिः ॥ १०६ ॥
लवणेक्षुसुरासर्पिर्दधिदुग्धजलान्तकाः ।
सकारं व्याप्य तिष्ठन्ति महासत्त्वं स्मरेद् यतिः ॥ १०७ ॥
मध्ये चतुष्के शक्तिश्च कोटिसौदामिनीतनुः ।
विभाव्य वारिचक्रे तु कोटिविद्यापतिर्भवेत् ॥ १०८ ॥
शक्तिबीजं वामभागे आद्या प्रकृतिसुन्दरी ।
विभाति कामनाशाय योगिनी सा सताङ्गतिः ॥ १०९ ॥
शक्तिबीजं दक्षिणे च पुङ्कला पुंशिवात्मकम् ।
सदा भावनरूपाभं यो भजेदीशसिद्धये ॥ ११० ॥
शक्तिबीजस्योद्र्ध्वभागे पूर्णचन्द्रमनोहरम् ।
भजन्ति साधवः सर्वे धर्मकामार्थसिद्धये ॥ १११ ॥
शक्तिबीजतले गेहे श्रीसूर्यं कालवह्निजम् ।
उल्काकोटिसमं ध्यात्वा वाञ्छातिरिक्तमाप्नुयात् ॥ ११२ ॥

वारिचक्रप्रसादेन चिरजीवी भवेन्नरः ।
भूमौ महाकालरूपी मूलाधारे चतुर्द्दले ॥ ११३ ॥
चतुर्द्दलशेषदले वारिचक्रं सपान्तकम् ।
कोटिसौदामिनीभासं विभाव्य योगिराड् भवेत् ॥ ११४ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावार्थनिर्णये पाशवकल्पे मूलपद्मोल्लासे भूमिचक्र-स्वर्गचक्र-तुलाचक्र-वारिचक्र सारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे एकविंशः पटलः ॥



# द्वाविंशः पटलः

श्रीआनन्दभैरवी उवाच—

शृणु शंभो प्रवक्ष्यामि षट्चक्रस्य फलोदयम् ।
यज्ज्ञात्वा योगिनः सर्वे चिरं तिष्ठन्ति भूतले ॥ १ ॥
मूलाधारं महापद्मं चतुर्दलसुशोभितम् ।
वादिसान्तं स्वर्णवर्णं शक्तिब्रह्मप्रदं व्रजेत् ॥ २ ॥
क्षित्यप्तेजोमरुद्व्योममण्डलं षट्सु पङ्कजे ।
क्रमेण भावयेन्मन्त्री मूलविद्याप्रसिद्धये ॥ ३ ॥
मूलपद्मोर्द्ध्वदेशे च स्वाधिष्ठानं महाप्रभम् ।
षड्दलं राकिणीं विष्णुं कर्णिकायां स्मरेद्यतिः ॥ ४ ॥
षड्दलं बादिलान्तं च वर्णं ध्यात्वा सुराधिपः ।
कन्दर्पवायुना व्याप्तलिङ्गमूले भजेद्यतिः ॥ ५ ॥
तदूर्ध्वे नाभिमूले च मणिकोटिसमप्रभम् ।
दशदलं योगधर्मं डादिफान्तार्थगं भजेत् ॥ ६ ॥
लाकिनीसहितं रुद्रं ध्यायेद्योगादिसिद्धये ।
महामोक्षपदं दृष्ट्वा जीवन्मुक्तो भवेद् ध्रुवम् ॥ ७ ॥
बन्धूकपुष्पसंकाशं दलद्वादशशोभितम् ।
कादिठान्तार्णसहितमीश्वरं काकिनीं भजेत् ॥ ८ ॥
तदूर्ध्वे षोडशोल्लासपदे साक्षात् सदाशिवम् ।
महादेवीं साकिनीगं कण्ठे ध्यात्वा शिवो भवेत् ॥ ९ ॥
विशुद्धाख्यं महापुण्यं धर्मार्थकाममोक्षदम् ।
धूम्रधूमाकरं विद्युत्पुञ्जं भजति योगिराट् ॥ १० ॥
आज्ञानामोत्पलं शुभ्रं हिमकुन्देन्दुमन्दिरम् ।
हंसस्थानं बिन्दुपदं द्विदलं भ्रूकुटे भजेत् ॥ ११ ॥

लक्षवर्णद्वयाढ्यं यद् विन्दुयुक्तं मनोलयम् ।
तयोः स्त्रीपुंप्रकृत्याख्यं कोटिचन्द्रोज्ज्वलं भजेत् ॥ १२ ॥
कण्ठे षोडशपत्रे च षोडशस्वरवेष्टितम् ।
अकारादिविसर्गान्तं विभाव्य कुण्डलीं नयेत् ॥ १३ ॥
आज्ञाचक्रे समानीय कोटिचन्द्रसमोदयाम् ।
कण्ठाधारां कुण्डलिनीं जीवन्मुक्तो भवेदिह ॥ १४ ॥
यदि श्वासं न त्यजति बाह्यचन्द्रमसि प्रभो ।
भ्रूमध्ये चन्द्रनिकरे त्यक्त्वा योगी भवेदिह ॥ १५ ॥
सूक्ष्मवायूद्गमेनैव त्यजेद् वायुं मुहुर्मुहुः ।
सहस्रारागतं मूले मूलात्तत्रैवमानयेत् ॥ १६ ॥
चन्द्रः सूर्ये लयं याति सूर्यश्चन्द्रमसि प्रभो ।
यो बाह्ये नानयेत् शब्दं तस्य बिन्दुचयो भवेत् ॥ १७ ॥
यावद् बाह्ये चन्द्रमसि मनो याति रविप्लुते ।
अन्तर्गते चन्द्रसूर्ये न तस्य दुरितं तनौ ॥ १८ ॥
केवलं सूक्ष्मवायुस्थं वायवीशक्तिलालितम् ।
मानसं यः करोतीति तस्य योगादिवर्द्धनम् ॥ १९ ॥
प्राप्ते यज्ञोपवीते यः श्रीधरो ब्राह्मणोत्तमः ।
योगाभ्यासं सदा कुर्यात् स भवेद्योगिवल्लभः ॥ २० ॥
यावत्कालं स्थितं बिन्दुं बाल्यभावे यथा यथा ।
तथा तथा योगमार्गं विन्दुपातान्मरिष्यति ॥ २१ ॥
तथापि यदि मासं वा पक्षं वा दशभिर्दिनम् ।
यदि तिष्ठति विन्दूग्रः साक्षादभ्यासतो जयी ॥ २२ ॥
कामानलमहापीडाविशिष्टः पुरुषो यदा ।
तत्कामादिसंहरेण विना योगेन कः क्षमः ॥ २३ ॥
समसंसर्गगूढेन कामो भवति निश्चितम् ।
तत्कामात् क्रोध उत्पन्नो महाशत्रुर्विनाशकृत् ॥ २४ ॥

क्रोधाद्भवति संमोहः संमोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशाद् विनाशनम् ॥ २५ ॥
अतः सम्बुद्धिमाधार्य मूलादिब्रह्ममण्डले ।
ध्यात्वा श्रीनाथपादाब्जं सिद्धो भवति साधकः ॥ २६ ॥
ईश्वरस्य कृपाचिह्नमादौ शान्तिर्भवेद् हृदि ।
शान्तिभिर्जायते ज्ञानं ज्ञानान्मोक्षमवाप्नुयात् ॥ २७ ॥
शान्तिर्विद्या प्रतिष्ठा च निवृत्तिरिति ताः स्मृताः ।
चतुर्व्यूहस्ततो देवः प्रोच्यते परमेश्वरः ॥ २८ ॥
इदं ज्ञानमिदं ज्ञेयमिति चिन्तासमाकुलाः ।
पठन्त्यहर्निशं शास्त्रं परतत्त्वपराङ्मुखाः ॥ २९ ॥
शिरो वहति पुष्पाणि गन्धं जानाति नासिका ।
पठन्ति मम तन्त्राणि दुर्लभा भावबोधकाः ॥ ३० ॥
यज्ञोपवीतकाले तु पशुभावाश्रयो भवेत् ।
यावद्योगं न सम्प्राप्तं तावद् वीराचरं न च ॥ ३१ ॥
आचारो विनयो विद्या प्रतिष्ठा योगसाधनम् ।
तस्यैव जायते सिद्धिरिष्टपादाम्बुजे मतिः ॥ ३२ ॥
देवे गुरौ महाभक्तिर्यस्य नित्यं विवर्धते ।
संवत्सरात्तस्य सिद्धिर्भवत्येव न संशयः ॥ ३३ ॥
वेदागमपुराणानां सारमालोक्य यत्नतः ।
मनः संस्थापयेदिष्टपादाम्भोरुहमण्डले ॥ ३४ ॥
चेतसि क्षेत्रकमले षट्चक्रे योगनिर्मले ।
मनो निधाय मौनी यः स भवेद् योगवल्लभः ॥ ३५ ॥
मनः करोति कर्माणि मनो लिप्यति पातके ।
मनःसंयमनी भूत्वा पापपुण्यैर्न लिप्यते ॥ ३६ ॥

श्रीभैरव उवाच—

वद कान्ते रहस्यं मे येन सिद्धो भवेन्नरः ।
तत्प्रकारं विशेषेण योगिनामप्यगोचरम् ॥ ३७ ॥

यत्रैव [1]गोपयेद्यद्यदानन्देन निरीक्षयेत् ।
पूजयेद् भावयेच्चैव वर्जयेन्न जुगुप्सयेत् ।। ३८ ।।
क्रमेण वद तत्त्वञ्च यदि स्नेहोऽस्ति [2]मां प्रति ।
[3]नज्ञात्वापि च भूतत्त्वं योगी मोहाश्रितो भवेत् ।। ३९ ।।

आनन्दभैरवी उवाच—

त्रैलोक्ये योगयोग्योऽसि षट्चक्रभेदने रतः ।
त्वमेव परमानन्द महाधिष्ठाननिर्मल ।। ४० ।।
संघातयेन्महावीर एतान्दोषान्महाभयान् ।
कामक्रोधलोभमोहमदमात्सर्यसञ्ज्ञकान् ।। ४१ ।।
संघातयेन्महावीरो विकारं चेन्द्रियोद्भवम् ।
निद्रा लज्जा दौर्मनस्यं दशकालानलान् प्रभो ।। ४२ ।।
संगोपयेन्महावीरो महामन्त्रं कुलक्रियाम् ।
मुद्राक्षसूत्रतन्त्रार्थं गोपिनावीरसङ्गमम् ।। ४३ ।।
अत्याचारं भैरवाणां योगिनीनां च साधनम् ।
नाडीग्रथनमानञ्च गोपयेन्मातृजारवत् ।। ४४ ।।
न निन्देत् प्राणनिधने देवतां गुरुमीश्वरम् ।
सुरां विद्यां महाक्षेत्रं पीठं योगाधिकारिणम् ।। ४५ ।।
योगिनीं जडमुन्मत्तं जन्मकर्मकुलक्रियाम् ।
प्रयोगे धर्मकर्तारं न निन्देत प्राणसंस्थितौ ।। ४६ ।।
पत्नीं भ्रातृवधूञ्चैव बौद्धाचारञ्च योगिनीम् ।
कर्म शुभाशुभञ्चैव महावीरो न निन्दयेत् ।। ४७ ।।
निरीक्षयेन्न कदापि कन्यायोनिं दिने रतिम् ।
पशुक्रीडां [4]दिग्वसनां कामिनीं प्रकटस्तनीम् ।। ४८ ।।

---

१. घातयेत् क० ।
२. योगिनि ग० ।
३. अज्ञात्वा पीठतत्त्वं च ग० ।
४. विवसनाम् ग० ।

विग्रहं द्यूतपाशार्थं क्लीवं विष्ठादिकं शुचौ ।
अभिचारभारञ्च क्रियामप्रमत्तस्य[1] नेक्षयेत् ॥ ४९ ॥
पूजयेत्परया भक्त्या देवतां गुरुमीश्वरम् ।
शक्तिं साधुमात्मरूपं स्थूलसूक्ष्मं प्रयत्नतः ॥ ५० ॥
अतिथिं मातरं सिद्धं पितरं योगिनं तथा ।
पूजयेत् परया भक्त्या सिद्धमन्त्रं सुसिद्धये ॥ ५१ ॥
भावयेदेकचित्तेन साधूक्तं योगसाधनम् ।
गुरोर्वाक्योपदेशं च स्वधर्मं तीर्थदेवताम् ॥ ५२ ॥
कुलाचारं [2]वीरमन्त्रमात्मानं परमेष्ठिनम् ।
भावयेद्विधिविद्यां च तन्त्रसिद्धार्थनिर्णयम् ॥ ५३ ॥
वर्जयेत् साधकश्रेष्ठोऽगम्यागमनादिकम् ।
धूर्तसङ्गं वञ्चकञ्च प्रलापमनृताशुभम् ॥ ५४ ॥
वर्जयेत् पापगोष्ठीयमालस्यं बहुजल्पनम् ।
अवेदकर्मसञ्चारं [3]गोसवं ब्राह्मणस्य च ॥ ५५ ॥
जुगुप्सयेन्न कदापि विण्मूलं क्लेदशोणितम् ।
हीनाङ्गीं पिशितं नाथ कपालाहरणादिकम् ॥ ५६ ॥
सुरां गोपालनञ्चैव निजपापं रिपोर्भयम् ।
जुगुप्सयेन्न सुधर्म्मं यदि सिद्धिमिहेच्छति ॥ ५७ ॥
समयाचारमेवेदं योगिनां वीरभाविनाम् ।
गुर्वाज्ञया यः करोति जीवन्मुक्तो भवेद्भुवि ॥ ५८ ॥
वृथा धर्मं वृथा चर्यं वृथा दीक्षा वृथा तपः ।
वृथा सुकृतमाख्येति गुर्वाज्ञालङ्घनं नृणाम् ॥ ५९ ॥
ब्राह्मणक्षत्रियादीनामादौ योगादिसाधनम् ।
पश्चात् कुलक्रिया नाथ योगविद्याप्रसिद्धये ॥ ६० ॥

---

१. अज्ञस्य क० ।
२. तन्त्रम् ग० ।
३. गोरसम् ग० ।

विना भावेन वीरेण पूर्णयोगी कुतो भवेत् ।
आदौ कुर्यात् पशोर्भावं पश्चात् कुलविचारणम् ॥ ६१ ॥
मम तन्त्रे महादेव केवलं सारनिर्णयम् ।
अकस्माद्भक्तिसिद्ध्यर्थं कुलाचारं च योगिनाम् ॥ ६२ ॥
ब्राह्मणानां कुलाचारं केवलं ज्ञानसिद्धये ।
ज्ञानेन जायते योगी योगादमरविग्रहः ॥ ६३ ॥
भूत्वा योगी कुलीनश्च योगाभ्यासमहर्निशम् ।
षट्चक्रं भूतनिलयं भावयेद्भावसिद्धये ॥ ६४ ॥
मूलपद्मस्योर्द्ध्वदेशे लिङ्गमूले महाशुचिः ।
स्वाधिष्ठाने महापद्मं षड्दले वायुना यजेत् ॥ ६५ ॥
एतत् षड्दलवर्णानां भावनां यः करोति हि ।
तस्य साक्षाद्भवेद्विष्णुः राकिणीसहितः प्रभो ॥ ६६ ॥
स्वाधिष्ठानषड्दलस्य कर्णिकामध्यमण्डले ।
दलाष्टकं भावयित्वा नागयुक्तं स ईश्वरः ॥ ६७ ॥
अष्टौ नागा अष्टदले प्रतिभान्ति यथारुणाः ।
जलस्योपरि पद्मे च ध्यायेत्तन्नागवल्लभाम् ॥ ६८ ॥
अनन्तं वासुकिं पद्मं महापद्मं च तक्षकम् ।
कुलीरं कर्कटं शङ्खं दक्षिणादौ दले भजेत् ॥ ६९ ॥
अष्टदलोपरि ध्यायेत् कर्णिकावृत्तयुग्मकम् ।
तदूर्ध्वं षड्दलं वादिलान्तयुक्तं सबिन्दुकम् ॥ ७० ॥
पूर्वादिक्रमयोगेन दक्षिणावर्त्तवायुना ।
पुनः पुनः कुम्भयित्वा ध्यायेत् षड्वर्णवायवीम् ॥ ७१ ॥
केशरं युगलं ध्यायेत् कुलोर्ध्वे साकृतिं मुदा ।
अष्टदले षट्दले च विभाव्य योगिराड् भवेत् ॥ ७२ ॥
अष्टदलस्योर्ध्वदेशे वृत्तयुग्मं मनोहरम् ।
तस्योपरि पुनर्ध्यायेत् षड्दले वादिलान्तकम् ॥ ७३ ॥

दलाष्टकाधो ध्यायेद्यो वृत्तयुग्मं मनोहरम् ।
वृत्ताधोमण्डलाकारं वं बीजं व्याप्य तिष्ठति ॥ ७४ ॥
वृत्तलग्नं समाव्याप्तं यं बीजं विद्युदाकरम् ।
कोटिसूर्यसमाभासं विभाव्य योगिनां पतिः ॥ ७५ ॥
यान्तबीजकलानान्तु अधःषट्कोणमण्डलम् ।
षट्कोणे दक्षिणादौ च भावयेद् यादिलान्तकम् ॥ ७६ ॥
तत्षट्कोणमध्यदेशे षट्कोणं धूम्र[1]मण्डलम् ।
तत्कोणे दक्षिणादौ च द्रव्यादिषट्कमाश्रयेत् ॥ ७७ ॥
द्रव्यं गुणास्तथा कर्म सामान्यं सविशेषकम् ।
समवायं क्रमेणैव षट्कोणेषु विभावयेत् ॥ ७८ ॥
पूर्वादिक्रमयोगेन दक्षिणावर्तवायुना ।
सर्वत्र भावयेन्मन्त्री कुम्भयित्वा पुनः पुनः ॥ ७९ ॥
द्रव्यषट्कोणमध्ये तु षट्कोणं चारुतेजसम् ।
कोणे कोणे च षड्वर्गान् भावयेत् स्थिरचञ्चलान् ॥ ८० ॥
तन्मध्ये च त्रिकोणे च राकिणीसहितं हरिम् ।
कोटिचन्द्रमरीचिस्थं ध्यायेद्योगी विशालधीः ॥ ८१ ॥
षड्दलान्तर्गतं पद्मं योगिनामपि साधनम् ।
यो नित्यं कुरुतेऽभ्यासं तस्य योगः प्रसिद्ध्यति ॥ ८२ ॥
एतच्चक्रप्रसादेन नीरोगी निरहंकृतः ।
सर्वज्ञो भवति क्षिप्रं श्रीनाथपदभावनात् ॥ ८३ ॥
ज्योतीरूपं योगमार्गं सूक्ष्मातिसूक्ष्मनिर्मलम् ।
त्रैलोक्यकामनासिद्धिं षट्चक्रे भावयेद्धरिम् ॥ ८४ ॥
यो हरिः शेषशम्भुश्च यः शंभुः सूक्ष्मरूपधृक् ।
सूक्ष्मरूपस्थितो ब्रह्मा ब्रह्माधीनमिदं जगत् ॥ ८५ ॥

---

१. धूम्रतेजसम् क० ।
२. स समस्तश्च क० ।

एकमूर्त्तिस्त्रयो देवा ब्रह्मविष्णुपितामहाः ।
मम विग्रहसंश्लिष्टाः सृजत्यवति हन्ति च ॥ ८६ ॥
प्राणायामोद्गता एते योगविघ्नकराः सदा ।
प्राणायामेन निष्पीड्य प्रसभं सिद्धिमाप्नुयात् ॥ ८७ ॥
अकारं ब्रह्मणो वर्णं शब्दरूपं महाप्रभम् ।
प्रणवान्तर्गतं नित्यं योगपूरकमाश्रयेत् ॥ ८८ ॥
उकारं वैष्णवं वर्णं शब्दभेदिनमीश्वरम् ।
प्रणवान्तर्गतं सत्त्वं योगकुम्भकमाश्रयेत् ॥ ८९ ॥
मकारं शांभवं रूपं बीजभूतं विधूद्गतम् ।
प्रणवान्तस्थितं कालं लयस्थानं समाश्रयेत् ॥ ९० ॥
वर्णत्रयविभागेन प्रणवं परिकल्पितम् ।
प्रणवाज्जायते हंसो हंसः सोऽहं परो भवेत् ॥ ९१ ॥
सोहं ज्ञानं महाज्ञानं योगिनामपि दुर्लभम् ।
निरन्तरं भावयेद्यः स एव परमो भवेत् ॥ ९२ ॥
हं पुमान् श्वासरूपेण चन्द्रेण प्रकृतिस्तु सः ।
एतद्धंसं विजानीयात् सूर्यमण्डलभेदकम् ॥ ९३ ॥
विपरीतक्रमेणैव सोहं ज्ञानं यदा भवेत् ।
तदैव सूर्यगः सिद्धः [1]स्वधास्वरप्रपूजितः ॥ ९४ ॥
हकारार्णं सकारार्णं लोपयित्वा ततः परम् ।
सन्धिं कुर्यात्ततः पश्चात् प्रणवोऽसौ महामनुः ॥ ९५ ॥
एतद् हंसं महामन्त्रं स्वाधिष्ठाने मनोगृहे ।
मनोरूपं भजेद्यस्तु स भवेत् सूर्यमध्यगः ॥ ९६ ॥

१. स्यात् सुरासुरप्रपूजितः ग० ।

हंसं सूर्यं विजानीयात् सोऽहं चन्द्रो न संशयः ।
विपरीतो यदा भूयात्तदैव मोक्षभाग्भवेत् ॥ ९७ ॥

यदि हंसमनोरूपं स्वाधिष्ठाने हरेः पदे ।
विभाव्य श्रीगुरोः पादे नीयते नात्र संशयः ॥ ९८ ॥

सोऽहं यदा शक्तिकूटं अकाराकारसंपुटम् ।
कृत्वा जपति यो ज्ञानी स भवेत् कल्पपादपः ॥ ९९ ॥

जपहोमादिकं सर्वं हंसेन यः करोति हि ।
तदैव चन्द्रसूर्यस्यात् हंसमन्त्रप्रसादतः ॥ १०० ॥

एतज्जपं महादेव देहमध्ये करोम्यहम् ।
एकविंशसहस्राणि षट्शतानि च हंमनुः ॥ १०१ ॥

पुंरूपेण हकारश्च स्त्रीरूपेण सकारकम् ।
जप्त्वा रक्षां करोतीह [1]चन्द्रबिन्दुशतेन च ॥ १०२ ॥

प्रणवान्तं महामन्त्रं नित्यं जपति यो नरः ।
वायुसिद्धिर्भवेत्तस्य वायवी सुकृपा भवेत् ॥ १०३ ॥

बृहद्हंसं प्रवक्ष्यामि येन सिद्धो भवेन्नरः ।
कामरूपी [2]क्षणादेव वाक्सिद्धिरिति निश्चितम् ॥ १०४ ॥

आदौ प्रणवमुच्चार्य ततो हंसपदं लिखेत् ।
तत्पश्चात् प्रणवं ज्ञेयं ततः परपदं स्मरेत् ॥ १०५ ॥

[3]तर्पयामि पदस्यान्ते प्रणवं फडिति स्मरेत् ।
एतद्धि हंसमन्त्रस्तु वीराणामुदयाय च ॥ १०६ ॥

बृहद्हंसप्रसादेन षट्चक्रभेदको भवेत् ।
षट्चक्रे च प्रशंसन्ति सर्वे देवाश्चराचराः ॥ १०७ ॥

---

१. चन्द्रबिन्दु ग० ।

२. कुलादेव ग० ।

३. परमान्ते हंसपदं ततः प्रणवमेव च । क० ।

योगसिद्धिं विघाताय[1] भ्रमन्ति योगिनस्तनौ ।
यदि हंसं बृहद्हंसं जपन्ति वायुसिद्धये ॥ १०८ ॥
तदा सर्वे पलायन्ते राक्षसान्मानुषा यथा ॥ १०९ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये पाशवकल्पे षट्चक्रसारसङ्केते योगशिक्षाविधिनिर्णये सिद्धमन्त्र-प्रकरणे भैरवीभैरवसंवादे
द्वाविंशः पटलः ॥



१. विदाया मे भ्रमन्ति क्रोधिनस्तनौ ग० ।

## त्रिविंशः पटलः

[1]श्रीभैरवी उवाच—

अथातः सम्प्रवक्ष्यामि ब्रह्ममार्गमनुत्तमम् ।
यद् यज्ज्ञात्वा सुराः सर्वे जयाख्याः [2]परमं जगुः ॥ १ ॥
न तन्तेजःप्रकाशाय[3] महतां धर्मवृद्धये ।
योगाय योगिनां देव[4] भक्षप्रस्थनिरूपणम् ॥ २ ॥
योगाभ्यासं यः करोति न जानातीह भक्षणम् ।
कोटिवर्षसहस्रेण न योगी भवति ध्रुवम् ॥ ३ ॥
अतो वै भक्षमाहात्म्यं प्रवदामि[5] समासतः ।
यज्ज्ञात्वा सिद्धिमाप्नोति स्वाधिष्ठानादिभेदनम् ॥ ४ ॥
आदौ विवेकी यो भूयाद् भूतले परमेश्वर ।
स एव भक्षनियमं[6] गृहेऽरण्ये समाचरेत् ॥ ५ ॥
वाय्वासनदृढानन्दपरमानन्दनिर्भरः ।
मिताहारं सदा कुर्यात् पूरकाह्लादहेतुना ॥ ६ ॥
तदा पूरकसिद्धिः स्याद् भक्षणादिनिरूपणात् ।
उदरं पूरयेन्नित्यं कुम्भयित्वा पुनः पुनः ॥ ७ ॥
निजहस्तप्रमाणाभिः[7] पूरयेत् पूर्णमेव च ।
तत्पूरयेत् स्थापयेन्नाथ विश्वामित्रकपालके ॥ ८ ॥

---

१. भैरवी उवाच ग० ।
२. परमा जगुः क० ।
३. मनः स्थैर्यं क० ।
४. नाथ क० ।
५. प्रवक्ष्यामि क० ।
६. भक्षणीयञ्च क० ।
७. प्रमाणेनाभिप्रस्थं पूर्णमेव च क० ।

हंसद्वादशवारेण शिलायामपि घर्षयेत् ।
नित्यं तत्पात्रपूर्णं च [1]पाकेनैकेन भक्षयेत् ॥ ९ ॥
तण्डुलान् शालिसम्भूतान्कपालप्रस्थपूर्णकान् ।
दिने दिने क्षयं कुर्याद्भक्षणादिषु कर्मसु ॥ १० ॥
हंसद्वादशवारेण जपेन संक्षयं चरेत् ।
शिलायां तत्कपालं च वर्द्धयेत् पूरकादिकम्[2] ॥ ११ ॥
यावत्कालं क्षयं याति निजभक्षणनिर्णयम् ।
तत्कालं वायुनापूर्य [3]नोदरं कालचञ्चुभिः ॥ १२ ॥
आकुञ्चयेत् सदा मूले कुण्डली भक्षधारणात्[4] ।
[5]तत्र सम्पूरयेद्योगी भक्षप्रस्थावनाशनात् ॥ १३ ॥
कालक्रमेण तत् सिद्धिमवाप्नोति जितेन्द्रियः[6] ।
यत्स्थानं भक्षणस्यैव तत्स्थाने पूरयेत्सुखम् ॥ १४ ॥
पुनः[7] पुनर्भक्षणेन[8] भक्षसिद्धिमुपैति हि ।
विना पूरकयोगेन भक्षणं नापि सिद्ध्यति ॥ १५ ॥
अथवान्यप्रकारेण भक्तत्यागं विनिर्णयम् ।
येन हीना न सिद्ध्यन्ति [9]नाडीचक्रस्थदेवताः ॥ १६ ॥
द्वात्रिंशद्ग्रासमादाय त्रिपर्व्वणि यथास्थितम् ।
अर्द्धग्रासं विहायापि नित्यं भक्षणमाचरेत् ॥ १७ ॥

---

१. वायुनैकेन क० ।
२. पूरकानिलम् क० ।
३. सोदरम् क० ।
४. वारणात् क० ।
५. तत्र सम्पूरयेत् योगी भक्षणस्य विनाशनात् अ० पा० क० ।
६. निजेन्द्रियः क० ।
७. यत् स्थानं भक्षणस्यैव तत्स्थानं पूरयेत्सुखम् क० ।
८. प्रमादेव क० ।
९. चक्रस्य ग० ।

सदा सम्पूरयेद् वायुं भावको गतभीर्महान् ।
भक्षस्थाने समायोज्य पिबेद् वायुमहर्निशम् ॥ १८ ॥
चतुःषष्टिदिने सर्वं क्षयं कृत्वा ततः सुधीः ।
पयोभक्षणमाकुर्यात् स्थिरचेता जितेन्द्रियः ॥ १९ ॥
पयः प्रमाणं वक्ष्यामि हस्तप्रस्थत्रयं त्रयम् ।
शनैः शनैर्विजेतव्याः प्राणा मत्तगजेन्द्रवत् ॥ २० ॥
षण्मासाज्जायते सिद्धिः पूरकादिषु लक्षणम् ।
क्रमेणाष्टाङ्गसिद्धिः स्यात् यतीनां कामरूपिणाम् ॥ २१ ॥
बद्धपद्मासनं कृत्वा विजयानन्दनन्दितः ।
धारयेन्मारुतं मन्त्री मूलाधारे मनोलयम्[1] ॥ २२ ॥
अथासनप्रभेदञ्च शृणु मत्सिद्धिकाङ्क्षिणाम् ।
येन विना पूरकाणां सिद्धिभाक् न महीतले ॥ २३ ॥
अधो मुण्डासनं वक्ष्ये सर्वेषां प्राणिनां सुखम् ।
ऊर्द्ध्वमार्गे पदं दत्त्वा धारयेन्मारुतं सुधीः ॥ २४ ॥
सर्वासनानां श्रेष्ठं हि ऊर्द्ध्वपादो यदा चरेत् ।
तदैव महतीं सिद्धिं ददाति वायवी कला ॥ २५ ॥
एतत्पद्मासनं कुर्यात् प्राणवायुप्रसिद्धये ।
शुभासनं तदा ध्यायेत्पूरयित्वा पुनः पुनः ॥ २६ ॥
ऊरूमूले वामपादं पुनस्तद्दक्षिणं पदम् ।
वामोरौ स्थापयित्वा च पद्मासनमितिस्मृतम् ॥ २७ ॥
सव्यपादस्य[2] योगेन आसनं परिकल्पयेत् ।
तदैकासनकाले तु द्वितीयासनमाभवेत् ॥ २८ ॥
पृष्ठे करद्वयं नीत्वा वृद्धाङ्गुष्ठद्वयं सुधीः ।
कायसङ्कोचमाकृत्य[3] धृत्वा बद्धासनो भवेत् ॥ २९ ॥

---

१. नलोदयम् क० ।

२. सव्यापसव्य क० ।

३. माहृत्य क० ।

[1]बद्धपद्मासनं कृत्वा वायुबद्धं पुनः पुनः ।
चिबुकं स्थापयेद्यत्नाद् ह्लादितेजसि भास्करे ।। ३० ।।
इत्यासनं हि सर्वेषां प्राणिनां सिद्धिकारणम् ।
वायुवश्याय यः कुर्यात् स योगी नात्रसंशयः ।। ३१ ।।
स्वभावसिद्धिकरणं सर्वेषां स्वस्तिकासनम् ।
वामपादतले कुर्यात्पाददक्षिणमेव च ।। ३२ ।।
सव्यापसव्ययोगेन आसनद्वयमेव च ।
सर्वत्रैवं प्रकारं च कृत्वा नाडीव [2]सारमेत् ।। ३३ ।।
आसनानि [3]शृणु ह्येतत्त्रिंशतासंख्यकानि च ।
सव्यापसव्ययोगेन द्विगुणं प्रभवेदिह ।। ३४ ।।
चतुःषष्ट्यासनानीह वदामि वायुसाधनात् ।
द्वात्रिंशद्बिन्दुभेदाय[4] कल्पयेद् वायुवृद्धये ।। ३५ ।।
कार्मुकासनमाकृत्य[5] उदरे पूरयेत् सुखम् ।
तदा वायुवशो याति कालेन सूक्ष्मवायुना ।। ३६ ।।
कृत्वा पद्मासनं मन्त्री वेष्टयित्वा प्रधारयेत् ।
करेण दक्षिणेनैव वामपादान्तिकं तटम्[6] ।। ३७ ।।
सव्यापसव्यद्विगुणं कार्मुकासनमेव च ।
कार्मुकद्वययोगेन शरवद्वायुमानयेत् ।। ३८ ।।
कुक्कुटासनमावक्ष्ये नाडीनिर्मलहेतुना ।
मत्कुलागमयोगेन[7] कुर्याद् वायुनिषेवणम् ।। ३९ ।।

---

१. इति बद्धपद्मासनम् क० ।
२. सावसेत् क० ।
३. शृणुष्वैतत् द्वात्रिंशत् क० ।
४. ग्रन्थिभेदाय क० ।
५. माहृत्य क० ।
६. पादाङ्गुलि क० ।
७. मार्गेण क० ।

निजहस्तद्वयं भूमौ पातयित्वा जितेन्द्रियः[1] ।
पद्भ्यां बद्धं यः करोति कूर्परद्वयमध्यतः ॥ ४० ॥

सव्यापसव्ययुगलं कुक्कुटं ब्रह्मणा कृतम् ।
बद्धं कृत्वा अधःशीर्षं यः करोति खगासनम् ॥ ४१ ॥

खगासनप्रसादेन श्रमलोपो[2] भवेद् द्रुतम् ।
पुनः पुनः श्रमादेव[3] विषयश्रमलोपकृत् ॥ ४२ ॥

लोलासनं सदा कुर्याद् वायुलोलापघातनात् ।
स्थिरवायुप्रसादेन स्थिरचेता भवेद्द्रुतम्[4] ॥ ४३ ॥

पद्मासनं समाकृत्य पादयोः सन्धिगह्वरे ।
हस्तद्वयं मध्यदेशं नियोज्य कुक्कुटाकृतिः ॥ ४४ ॥

निजहस्तद्वयद्वन्द्वं[5] निपात्य हस्तनिर्भरम् ।
कृत्वा शरीरमुल्लाप्य[6] स्थित्वा पद्मासनेऽनिलः ॥ ४५ ॥

स्थित्वैतदासने मन्त्री अधःशीर्षं करोति चेत् ।
उत्तमाङ्गासनं ज्ञेयं योगिनामतिदुर्लभम् ॥ ४६ ॥

एतदासनमात्रेण शरीरं शीतलं भवेत् ।
पुनः पुनः प्रसादेन[7] चैतन्या कुण्डली भवेत् ॥ ४७ ॥

सव्यापसव्ययोगेन यः करोति पुनः पुनः ।
पूरयित्वा मूलपद्मे सूक्ष्मवायुं विकुम्भयेत्[8] ॥ ४८ ॥

---

१. द्विजोत्तमः क० ।

२. लेप ग० ।

३. श्रयादेव क० ।

४. ध्रुवम् क० ।

५. तत्रद्वन्द्वम् क० ।

६. मुत्थाप्य क० ।

७. श्रमादेव क० ।

८. निकुम्भयेत् क० ।

कृत्वा कुम्भकमेवं हि सूक्ष्यवायुलयं विधौ ।
मूलादिब्रह्मरन्ध्रान्ते स्थापयेल्लयगेपदे[1] ॥ ४९ ॥
एतत् शुभासनं कृत्वा सूक्ष्मरन्ध्रे मनोलयम् ।
[2]सूचीरन्ध्रे यथासूत्रं पूरयेत् सूक्ष्मवायुना ॥ ५० ॥
एतत् क्रमेण षण्मासान् पूरकस्यापि लक्षणम् ।
महासुखं समाप्नोति योगाष्टाङ्गनिषेवणात् ॥ ५१ ॥
अथ वक्ष्ये महादेव पर्वतासनमङ्गलम् ।
यत्कृत्वा स्थिररूपीस्याद् षट्चक्रादिविलोपनम्[3] ॥ ५२ ॥
योन्यासनं पर्वतेन योगं योगफलेऽनिलम्[4] ।
तत्कालफललन्तावत्[5] खेचरो यावदेव हि ॥ ५३ ॥
पादयोगेन[6] चक्रस्य लिङ्गाग्रं यो नियोजयेत् ।
अन्यत्पदसूरौ दत्वा तत्रयोऽन्यासनं शुचि ॥ ५४ ॥
तत्र मध्ये[7] महादेव बन्धयोन्यासनं शृणु ।
यत्कृत्वा खेचरो भूत्वा विचरेदीश्वरो यथा ॥ ५५ ॥
कृत्वा योन्यासनं नाथ लिङ्गगुह्यादिबन्धनम् ।
[8]मुखनासानेत्रकर्णकनिष्ठाङ्गुलिभिस्तथा ॥ ५६ ॥
ओष्ठाधरं कनिष्ठाभ्यामनामाभ्याञ्च नासिके ।
मध्यमाभ्यां[9] नेत्रयुग्मं तर्जनीभ्यां[10] परैः श्रुती ॥ ५७ ॥

---

१. लयगोपथे क० ।
२. शुचिरन्ध्रे क० ।
३. विलोडनम् क० ।
४. फलोल्वणम् क० ।
५. सफलस्तावत् क० ।
६. पादाङ्गुष्ठेन चाक्रस्य क० ।
७. एतन्नमध्ये क० ।
८. अथ क० ।
९. मध्यमाख्यम् क० ।
१०. छादयित्वा परैः श्रुतिम् क० ।

कृत्वा योन्यासनं नाथयोगिनामतिदुर्लभम् ।
कृत्वा यः पूरयेद् वायुं मूलमाकुञ्च्य स्तम्भयेत् ॥ ५८ ॥
सव्यापसव्ययोगेन सिद्धो भवति साधकः ।
शनैः शनैः समारुह्य कुम्भकं परिपूरयेत् ॥ ५९ ॥
अरुणोदयकालाच्च वसुदण्डे[1] सदाशिव ।
सव्यापसव्ययोगेन [2]गृह्णीयाद्वायुगानिलम् ॥ ६० ॥
द्वितीयप्रहरे कुर्याद् वायुपूजां[3] मनोरमाम् ।
एतदासनमाकृत्य[4] सिद्धो भवति साधकः ॥ ६१ ॥
अथान्यदासनं वक्ष्ये यत्कृत्वा सोऽमरो भवेत् ।
मत्साधकः शुचिः श्रीमान् कुर्याद्दत्त्वा निराविले ॥ ६२ ॥
[5]भेकानामासनं योगं निजवक्षसि सम्मुखम्[6] ।
निधाय पादयुगलं स्कन्धे बाहू पदोपरि ॥ ६३ ॥
[7]ध्यायेद्धि चित्पदं श्रान्तमासनस्थः सुखाय च ।
यदि सर्वाङ्गमुत्तोल्य गगने खेचरासनम् ॥ ६४ ॥
महाभेकासनं प्रोक्तं सर्वसिद्धिप्रदायकम् ।
महाविद्यां महामन्त्रं प्राप्नोति जपतीह यः ॥ ६५ ॥
एतत् प्रभेदं वक्ष्यामि करोति यः स चामरः ।
एकपादमूरौ वद्ध्वा स्कन्धेऽन्यत्पादरक्षणम् ॥ ६६ ॥
एतत्प्राणासनं नाम सर्वसिद्धिप्रदायकम् ।
वायुमूले समारोप्य ध्यात्त्वाऽऽकुञ्च्य प्रकारयेत् ॥ ६७ ॥

---

१. वत्स्वदण्डे ( दन्ते ) क० ।
२. गृह्णत्वं बाह्यगानिलम् क० ।
३. बाह्य पूजाम् क० ।
४. माहत्य क० ।
५. मेकनामासनम् क० ।
६. षण्मुखम् क० ।
७. ध्यायेदिष्टपदं श्रीमानासनस्थः क० ।

केवलं पादमेकञ्च स्कन्धे चारोप्य यत्नतः ।
एकपादेन गगने तिष्ठेत् स दण्डवत् प्रभो ॥ ६८ ॥
अपानासनमेतद्धि सर्वेषां पूरकाश्रयम् ।
कृत्वा सूक्ष्मे शीर्षपद्मे समारोप्य[1] च वायुभिः ॥ ६९ ॥
तदा सिद्धो भवेन्मर्त्यः प्राणापानसमागमः ।
अपानासनयोगेन कृत्वा योगेश्वरो भुवि ॥ ७० ॥
समानासनमावक्ष्ये सिद्धमन्त्रादिसाधनात् ।
एकपादमूरौ दत्त्वा गुह्येऽन्यल्लिङ्गवक्त्रके[2] ॥ ७१ ॥
एतद्वै वीरासनं नाथ समानासनसंज्ञकम् ।
इत्याकृत्य जपेन्मन्त्रं धृत्वा वायुं चतुर्दले ॥ ७२ ॥
कुण्डलीं [3]भावयेन्मन्त्रं कोटिविद्युल्लताकृतिम् ।
आत्मचन्द्रामृतरसैराप्लुतां योगिनीं सदा ॥ ७३ ॥
वीरासनन्तु वीराणां योगवायुप्रधारणम् ।
यो जानाति महावीरः स योगी भवति ध्रुवम् ॥ ७४ ॥
अथ वक्ष्ये महाकालसमानासनसाधनम्[4] ।
भेदक्रमेण यज्ज्ञात्वा वीराणामधिपो भवेत् ॥ ७५ ॥
समानासनमाकृत्य वृद्धाङ्गुष्ठं करेण च ।
एकेन सोऽधिकारी स्यात् स्वरयोगादिसाधने ॥ ७६ ॥
आसनं यो हि जानाति वायूनां हरणं तथा ।
कालादीनां निर्णयन्तु स कदाचिन्न नश्यति ॥ ७७ ॥
कालेन लभ्यते सिद्धिः कालरूपो महोज्ज्वलः ।
साधकैर्योगिभिर्ध्येयः सिद्धवीरासनात्मना ॥ ७८ ॥

---

१. स्वं समारोप्य क० ।
२. लिङ्ग रन्ध्रके क० ।
३. मन्त्री क० ।
४. सञ्ज्ञकम् क० ।

अथ वक्ष्ये नीलकण्ठ ग्रन्थिभेदासनं शुभम् ।
ज्ञात्वा रुद्रो भवेत् क्षिप्रं सूक्ष्मवायुनिषेवणात् ॥ ७९ ॥
कृत्वा पद्मासनं मन्त्री जङ्घयोः हृदये करौ ।
[1]कूर्परस्थानपर्यन्तं विभेद्यस्कन्धधारणम् ॥ ८० ॥
भित्त्वा पद्मासनं मन्त्री सहस्राद्धेन[2] घाटनम् ।
येन शीर्षं भावनम्रं[3] सर्वाङ्गुलिभिराश्रमम् ॥ ८१ ॥
ग्रन्थिभेदासनञ्चैतत् खेचरादिप्रदर्शनम् ।
कृत्वा सूक्ष्मवायुलयं परमात्मनि भावयेत् ॥ ८२ ॥
अथान्यासनमावक्ष्ये योगपूरकरक्षणात् ।
कृत्वा पद्मासनं पादा [4]अङ्गुष्ठजङ्घयोः स्थितम् ॥ ८३ ॥
हस्तमेकन्तु जङ्घायाः कार्मुकं कूर्परोर्द्धकम् ।
पद्मासने समाधाय अङ्गुष्ठं परिधावयेत् ॥ ८४ ॥
कार्मुकासनमेतद्धि सव्यापसव्ययोगतः ।
पद्मासनं वेष्टयित्वा अङ्गुष्ठाग्रं प्रधावयेत्[5] ॥ ८५ ॥
यः करोति सदा नाथ कार्मुकासनमुत्तमम् ।
तस्य रोगादिशत्रूणां क्षयं नीत्वा सुखी भवेत् ॥ ८६ ॥
अथ वक्ष्येऽत्र संक्षेपात् सर्वाङ्गासनमुत्तमम् ।
यत्कृत्वा योगनिपुणो विद्याभिः पण्डितो यथा ॥ ८७ ॥
अधोनिधाय शीर्षं च ऊर्द्ध्वपादद्वयं चरेत् ।
पद्मासनन्तु तत्रैव भूमौ कूर्परयुग्मकम् ॥ ८८ ॥
दण्डे-दण्डे सदा कुर्यात् श्रमशान्तिपरः सुधीः ।
नित्यं सर्वासनं हित्वा न कुर्याद्वु वायुधारणम् ॥ ८९ ॥

---

१. कूर्परस्तनपर्यन्तम् क० ।
२. हस्तोर्ध्वेन स्वघाटनम् क० ।
३. येन शीर्षं भनेन्नत्रं सर्वाङ्गुलिभिराश्रयम् क० ।
४. जङ्घा बहिःस्थितम् क० ।
५. प्रधारयेत् क० ।

मासेन[1] सूक्ष्मवायूनां गमनं चोपलभ्यते ।
[2]त्रिमासे देवपदवीं त्रिमासे शीतलो भवेत् ॥ ९० ॥

अथ वक्ष्ये महादेव मयूरासनमुत्तमम् ।
भूमौ निपात्य हस्तौ द्वौ कूर्परोपरि देहकम् ॥ ९१ ॥

कूर्परोपरि संस्थाप्य सर्वदेहं स्थिराशयः ।
केवलं हस्तयुगलं निपात्य भुवि सुस्थिरः ॥ ९२ ॥

एतदासनमात्रेण नाडीसंभेदनं भवेत् ।
पूरकेण दृढो याति सर्वत्राज्ञाश्रयेण च ॥ ९३ ॥

अथान्यदासनं कृत्वा[3] सर्वव्याधिनिवारणम् ।
योगाभ्यासी भवेत्क्षिप्रं ज्ञानासनप्रसादतः ॥ ९४ ॥

दक्षपादोरुमूले च वामपादतलन्तथा ।
दक्षपादतलं दक्षपार्श्वे संयोज्य धारयेत् ॥ ९५ ॥

एतज्ज्ञानासनं नाथ ज्ञानाद्विद्याप्रकाशकम् ।
निरन्तरं यः करोति तस्य ग्रन्थिः श्लथी भवेत् ॥ ९६ ॥

सव्यापसव्ययोगेन मुण्डासनमिति स्मृतम् ।
कृत्वा ध्यात्वा स्थिरो भूत्वा लीयते परमात्मनि ॥ ९७ ॥

गरुडासनमावक्ष्ये येन ध्यानं स्थिरं भुवि ।
सर्वदोषाद्विनिर्मुक्तो भवतीह महाबली ॥ ९८ ॥

एकपादमुरौ बद्ध्वा एकपादेन दण्डवत् ।
जङ्घापादसन्धिदेशे ज्ञानव्यग्रं व्यवस्थितम् ॥ ९९ ॥

एतदासनमाकृत्य पृष्ठे संहारमुद्रया ।
आराध्य योगनाथं च सदा सर्वेश्वरस्य च ॥ १०० ॥

---

१. यामेन क० ।

२. द्विमासे क० ।

३. वक्ष्ये क० ।

अथान्यदासनं वक्ष्ये येन सिद्धो भवेन्नरः ।
अकस्माद् वायुसंचारं कोकिलाख्यासनेन[1] च ॥ १०१ ॥
ऊद्र्ध्वे हस्तद्वयं कृत्वा तदग्रे पादयोः सुधीः ।
वृद्धाङ्गुष्ठद्वयं नाथ शनैः शनैः प्रकारयेत् ॥ १०२ ॥
पद्मासनं समाकृत्य कूर्परोपरिसंस्थितः[2] ।
अथ[3] वक्ष्ये वीरनाथ आनन्दमन्दिरासनम् ॥ १०३ ॥
यत्कृत्वा अमरो धीरो भवत्येवेह साधकः ।
हस्तयुग्मं पाददेशे पादयुग्मं प्रदापयेत् ॥ १०४ ॥
प्रकृत्य दण्डवत् कौल नितम्बाग्रे प्रतिष्ठति ।
खञ्जनासनमावक्ष्ये यत्कृत्वा सुस्थिरो भवेत् ॥ १०५ ॥
पृष्ठे पादद्वयं वद्ध्वा हस्तौ भूमौ प्रधारयेत् ।
भूमौ हस्तद्वयं नाथ पातयित्वानिलं पिबेत् ॥ १०६ ॥
पृष्ठे पादद्वयं बद्ध्वा खञ्जनेन जयी भवेत् ।
अथान्यदासनं वक्ष्ये साधकानां हिताय वै ॥ १०७ ॥
पवनासनरूपेण खेचरो योगिराड्भवेत् ।
स्थित्वा वद्धासने[4] धीरो नाभेरधःकरद्वयम् ॥ १०८ ॥
ऊद्र्ध्वमुण्डः पिबेद् वायुं निरुद्ध्येत[5] यमाविले ।
अथ सर्पासनं वक्ष्ये वायुपानाय केवलम् ॥ १०९ ॥

---

१. कोटिलाख्यामलेन च क० ।

२. रञ्जसम् क० ।

३. स्थापयेत् कौलिकानाञ्च कौलिकासनमुत्तमम् ।
एतदासनमाकृत्य वायुस्थम्माङ्गनिर्मलम् ॥
तिष्ठेत् ऊर्ध्वमुखो वीरः लिककासनमुत्तमम् ॥ क० अ० पा० ।

४. पद्मासने क० ।

५. निरुद्धेन्द्रियमारिणे क० ।

शरीरं दण्डवत्तिष्ठेद्रज्जुवद्धस्तु[1] पादयोः ।
वायवी कुण्डली देवी कुण्डलाकारमङ्गुले ॥ ११० ॥
मण्डिता भूषणाद्यैश्च वक्ष्ये सर्पासनस्थितम् ।
निद्रालस्यभयान् त्वक्त्वा रात्रौ कुर्यात्पुनः पुनः ॥ १११ ॥
सर्वान् विघ्नान्वशीकृत्य निद्रादीन् वायुसाधनात् ।
अथ वक्ष्ये [2]काकरूपस्कन्धासनमनुत्तमम् ॥ ११२ ॥
कलिपापात् प्रमुच्येत वायवीं वशमानयेत् ।
निजपादद्वयं बद्ध्वा स्कन्धदेशे च साधकः ॥ ११३ ॥
नित्यमेतत्[3] पदद्वन्द्वं भूमौ पुष्टिकरद्वयम् ॥ ११४ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावासननिर्णये पाशवकल्पे षट्चक्रसारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे त्रयोविंशः पटलः ॥



१. रज्वा क० ।
२. कालरूप कल्वदासनमनुत्तमम् क० ।
३. निपात्य क० ।

# चतुर्विंशः पटलः

आनन्दभैरवी उवाच—

अथ वक्ष्ये महादेव योगशास्त्रार्थनिर्णयम् ।
येन विज्ञानमात्रेण षट्चक्रग्रन्थिभेदकः ॥ १ ॥
पर्व्वातिरिक्तदिवसे कुर्यात् श्रीयोगसाधनम् ।
कालिकाकुलसर्वस्वं कला[1] कालसमन्वितम् ॥ २ ॥
आसनं विधिना ज्ञानं कोटिकोटिक्रियान्वितम् ।
शतलक्षसहस्राणि आसनानि महीतले ॥ ३ ॥
स्वर्गे पातालमध्ये तु संमुक्तानि महर्षिभिः ।
भेदाभेदक्रमेणैव कुर्यान्नित्यं सदासनम् ॥ ४ ॥
तत्प्रकारं च विविधं यत्कृत्वा सोऽमरो भवेत् ।
अमरः सिद्ध इत्याहुरष्टैश्वर्यसमन्वितम् ॥ ५ ॥
प्रतिभाति स एवार्थो मूलमन्त्रार्थवेदिनः ।
अमरास्ते प्रशंसन्ति सर्वलोकनिरन्तरम् ॥ ६ ॥
देवाः श्रीकामिनीकान्ताः प्रभवन्ति जगत्त्रये ।
कालं हि वशमाकर्त्तुं नियुक्तो यश्चभावकः ॥ ७ ॥
ते सर्वे विचरन्तीह कोटिवर्षं शतेषु च ।
तत्तदासननामानि शृणु तत्साधनानि च ॥ ८ ॥
येन विज्ञानमात्रेण साक्षादीशस्य भक्तिमान् ।
अथ कूर्मासनं नाथ कृत्वा वायुं प्रपूरयेत् ॥ ९ ॥
कामरूपी भवेत् क्षिप्रं कलिकल्मषनाशनम् ।
समानासनमाकृत्य लिङ्गाग्रे स्वीयमस्तकम् ॥ १० ॥
नितम्बे हस्तयुगलं भूमौ सङ्कोचितः पतेत् ।
कुंभीरासनमावक्ष्ये वायूनां धारणाय च ॥ ११ ॥

---

१. काली (?) क० ।

तिष्ठेत् कुण्डाकृतिर्भूमौ करौ शीर्षोपरिस्थितौ ।
पदोपरि पदं दत्त्वा शीर्षोपरि करद्वयम् ॥ १२ ॥
तिष्ठेत् कुण्डाकृतिर्भूमौ कुंभीरासनमेव तत् ।
अथ मत्स्यासनं पृष्ठे हस्तोपरि कराङ्गुलिः ॥ १३ ॥
पादयुग्मप्रमाणेन[1] वृद्धाङ्गुष्ठस्य योजनम् ।
मकरासनमावक्ष्ये वायुपानाय कुम्भयेत् ॥ १४ ॥
पृष्ठे पादद्वयं दत्त्वा हस्ताभ्यां पृष्ठबन्धनम् ।
अथ सिंहासनं नाथ कूर्परोपरि जानुनी ॥ १५ ॥
स्थापयित्त्वा ऊर्द्ध्वमुखो वायुपानं समाचरेत् ।
अथ वक्ष्ये महादेव कुञ्जरासनमुत्तमम् ॥ १६ ॥
करेणैकेन पादाभ्यां भूमौ तिष्ठेत् शिरः करः ।
व्याघ्रासनमथो वक्ष्ये क्रोधकालविनाशनम् ॥ १७ ॥
एकपादं शीर्षमध्ये मेरुदण्डोपरिस्थितम् ।
भल्लूकासनमावक्ष्ये यत्कृत्त्वा योगिराड् भवेत् ॥ १८ ॥
नितम्बे च पादगोष्ठी [2]हस्ताभ्यामङ्गुलीयकम् ।
अथ कामासनं वक्ष्ये कामसङ्गेन[3] हेतुना ॥ १९ ॥
गरुडासनमाकृत्य कनिष्ठाग्रं स्पृशोद्भवम्[4] ।
वर्त्तुलासनमावक्ष्ये यत्कृत्त्वा भैरवो भवेत् ॥ २० ॥
आकाशस्थितपादाभ्यां पृष्ठदेशं निबन्धयेत् ।
अथ मोक्षासनं वक्ष्ये यत्कृत्त्वा मोक्षमन्दिरम्[5] ॥ २१ ॥
दक्षहस्तं दक्षपादं केवलं स्थापयेत्सुधीः ।
अथ मालासनं नाथ यत्कृत्त्वा वायवीप्रियः ॥ २२ ॥

---

१. समानेन क० ।
२. अङ्गुलीद्वयम् क० ।
३. काममर्दनम् क० ।
४. भुवि क० ।
५. क्षेम क० ।

शुभयोगं समाप्नोति एकहस्तस्थितो नरः ।
अथ दिव्यासनं वक्ष्ये पृष्ठं हस्तेन बन्धयेत् ॥ २३ ॥

एकहस्तमध्यदेशं भूमिहस्तश्च नासया ।
अर्द्धोदयासनं नाथ सर्वाङ्गं खे नियोजयेत् ॥ २४ ॥

केवलं हस्तयुगलं भूमिमालोक्य[1] नासया ।
अथ चन्द्रासनं वक्ष्ये पादाभ्यां स्वशरीरकम् ॥ २५ ॥

पुनः पुनः धारयेद्[2] यो वायुधारणपूर्वकम् ।
अथ हंसासनं वक्ष्ये शरीरेण पुनः पुनः ॥ २६ ॥

भूमौ सन्ताडयेत् श्वासैः प्राणवायुदृढः[3] सुधीः ।
अथ सूर्यासनं वक्ष्ये पृष्ठात् पादेन बन्धनम् ॥ २७ ॥

[4]पृष्ठे भेदान्वितं पादं तस्य हस्तेन[5] बन्धयेत् ।
अथ योगासनं वक्ष्ये यत्कृत्वा योगिराड् भवेत् ॥ २८ ॥

सर्वाः[6] पादतलद्वन्द्वं स्वाङ्गे वद्ध्वा करद्वयम् ।
गदासनमतो वक्ष्ये गदाकृतिर्वसेद्भुवि ॥ २९ ॥

ऊद्ध्वर्वबाहुर्भवेद्येन कायशोधनहेतुना ।
अथ लक्ष्म्यासनं वक्ष्ये लिङ्गाग्रेऽङ्घ्रितलद्वयम् ॥ ३० ॥

गुह्यदेशे हस्तयुग्मं तलाभ्यां बन्धयेद्भुवि ।
अथ कुल्यासनं वक्ष्ये यत्कृत्वा कौलिको भवेत्[7] ॥ ३१ ॥

---

१. भुवि व्यालोक्य क० ।

२. भ्रामयेत् यो वायुधारण तत्परः क० ।

३. प्राण वायुं दृढं सुधीः क० ।

४. पृष्ठ क० ।

५. अन्यहस्तेन क० ।

६. उर्वो क० ।

७. कौलिको मुनि क० ।

एकहस्तं मस्तकस्थोऽधः शीर्षेऽभिन्नगे[1] करम् ।
ब्राह्मणासनमावक्ष्ये यत्कृत्वा ब्राह्मणो भवेत् ॥ ३२ ॥
एकपादमूरौ दत्त्वा तिष्ठेद्दण्डाकृतिर्भुवि ।
क्षत्रियासनमावक्ष्ये यत्कृत्वा धनवान् भवेत् ॥ ३३ ॥
केशेन पादयुगलं बद्ध्वा तिष्ठेदधोमुखः ।
अथ वैश्यासनं वक्ष्ये यत्कृत्वा सत्यवान्भवेत् ॥ ३४ ॥
वृद्धाङ्गुष्ठेन यस्तिष्ठेत्[2] हस्तयुग्मं स्वकोरसि[3] ।
अथ शूद्रासनं वक्ष्ये यत्कृत्वा सेवको भवेत् ॥ ३५ ॥
धृत्वाङ्गुष्ठद्वयं योज्यं नासाग्रपादमध्यके[4] ।
अथ जात्यासनं वक्ष्ये येन जातिस्मरो भवेत् ॥ ३६ ॥
हस्ताङ्घ्रियुग्मं भूमौ च गमनागमनं ततः ।
पाशवासनमावक्ष्ये कृत्वा पशुपतिर्भवति ॥ ३७ ॥
पृष्ठे हस्तद्वयं दत्त्वा कूर्पराग्रे स्वमस्तकम् ।
एतेषां साधनादेव चिरजीवी भवेन्नरः ॥ ३८ ॥
सम्वत्सरं साधनाद्वै जीवन्मुक्तो भवेद्ध्रुवम् ।
श्रीविद्यासाधनं पश्चात् कथितव्यं तव प्रभो ॥ ३९ ॥
आसनं योगसिद्ध्यर्थं [5]कायशोधनहेतुना ।
इदानीं शृणु देवेश रहस्यं कोमलासनम् ॥ ४० ॥
योगसिद्धिविचाराय[6] रहस्यं चर्मासनं शुभम् ।
अथ नरासनं वक्ष्ये षोडशादिप्रकारकम् ॥ ४१ ॥

---

१. एकहस्तमस्तकस्याऽधः शीर्षेऽतिगे करम् क० ।
२. सन्तिष्ठेत् क० ।
३. स्ववक्षसि क० ।
४ नासाग्रम् क० ।
५. कायसाधन क० ।
६. योगशिक्षा क० ।

येन साधनमात्रेण योगी भवति साधकः ।
प्रकारं षोडशप्रोक्तं मत्कुलागमसंभवम् ॥ ४२ ॥
येन साधनमात्रेण साक्षाद्योगी महीतले ।
एकमासाद्भवेत्कल्पो[1] द्विमासे द्रुतकल्पनम्[2] ॥ ४३ ॥
त्रिमासे योगकल्पः[3] स्याच्चतुर्मासे स्थिराशयः ।
पञ्चमासे सूक्ष्मकल्पे[4] षष्ठमासे विवेकगः ॥ ४४ ॥
सप्तमासे ज्ञानयुक्तो भावको भवति ध्रुवम् ।
अष्टमासेऽन्नसंयुक्तो[5] जितेन्द्रियकलेवरः ॥ ४५ ॥
नवमे सिद्धिमिलनो दशमे चक्रभेदवान् ।
एकादशे महावीरो द्वादशे खेचरो भवेत् ॥ ४६ ॥
इति योगासनस्थश्च[6] योगी भवति साधकः ।
नरासनं यः करोति स सिद्धो नात्र संशयः ॥ ४७ ॥
तत्प्रकारं प्रवक्ष्यामि येन सिद्धो भवेत्प्रभो ।
अधोमुखं महादेव नरासनस्य साधने ॥ ४८ ॥
करणीयं साधकेन्द्रैर्योगशास्त्रार्थसम्मतैः ।
अक्षोणं यौवनोद्दामं सुन्दरं [7]चारुकुन्तलम् ॥ ४९ ॥
लोकानां श्रेष्ठमेवं हि पतितं रणसम्मुखे ।
[8]तत्सर्वं हि समानीय मङ्गले वासरे निशि ॥ ५० ॥

---

१. कम्पो क० ।
२. कम्पनम् क० ।
३. कम्पः क० ।
४. सूक्ष्मकम्पो क० ।
५. अष्टमे सत्त्वसंयुक्तो क० ।
६. योगासनद्वन्द्वम् क० ।
७. मण्डलम् क० ।
८. शवम् क० ।

चन्द्रसूर्यासनं कृत्वा साधयेत्तत्र कौलिकः ।
अथान्यत् सम्प्रवक्ष्यामि सर्वसिद्धिप्रकारणम्[1] ॥ ५१ ॥
भेकासनं यः करोति स एव योगिनीपतिः ।
अथान्यत् सम्प्रवक्ष्यामि यत्कृत्वा योगिराड् भवेत् ॥ ५२ ॥
तत्सर्वोत्तरशिरसि[2] स्थित्वा चन्द्रासने जपेत् ।
अथान्यत् तत्प्रकारश्च महाविद्यादिदर्शनात् ॥ ५३ ॥
मत्सरे[3] गौरवर्णे च तत्र शैलासने जपेत् ।
अथान्यत्तत्प्रकारं योगिकौलो न संशयः ॥ ५४ ॥
यद्येवं म्रियते सोऽपि तदा भद्रासने जपेत् ।
तत्तत्साधनकाले च एवं कुर्याद्दिने दिने ॥ ५५ ॥
नृत्यवाद्यगीतरागभोगोनविंशतौ[4] दिने ।
चतुर्दशं न वीक्ष्येत[5] भैरवाणां भयार्दनात् ॥ ५६ ॥
मनोनिवेशमात्रेण योगी भवति भैरव ।
स्वेच्छासनं[6] समाकृत्य मन्त्रं जपति यो नरः ॥ ५७ ॥
महासारो[7] वीतरागः सिद्धो भवति निश्चितम् ।
अथान्यत् शवमाहात्म्यं शृणुष्वावहितो मम ॥ ५८ ॥
तत्सर्वं[8] गृहमानीयाच्छाद्य शार्दूलचर्मणा ।
तत्र मन्त्री महापूजां कृत्वा [9]प्रविश्य संजपेत् ॥ ५९ ॥

---

१. सर्वसिद्धि प्रकारणात् क० ।
२. शवोत्तरशिरसि क० ।
३. यत् शवे क० ।
४. भोगीन क० ।
५. न वेक्षेत् ( ना रक्षेत् ) क० ।
६, देहासनम् क० ।
७. महाशवे क० ।
८. तत् शवं गृहमानीयच्छाद्यं शादूलचर्मणा क० ।
९. कृत्वोपविश्य क० ।

पद्मासनस्थस्तस्यैव[1] झटिद् योगी न संशयः ॥ ६० ॥
एतत्प्रकारासनमाशु कृत्वा
जितेन्द्रियो योगफलार्थविज्ञः ।
भवेन्मनुष्यो मम चाज्ञया हि
सिद्धो गणोऽसौ[2] जगतामधीशः ॥ ६१ ॥
[3]मूलखड्गयष्टिपरडितरवारादिना युतम् ।
[4]...भूतसर्पराजव्याघ्रं सद्यो मृतं यजेत् ॥ ६२ ॥
यस्य मृत्युर्भवेन्नाथ भैरवस्य सुरापतेः ।
रणे सम्मुखयुद्धस्य तदानीय जपं चरेत् ॥ ६३ ॥
तत्र कौलासनं कृत्वा अथवा कमलासनम् ।
महाविद्यामहामन्त्रं जप्त्वा लिङ्गमवाप्नुयात्[5] ॥ ६४ ॥
एतत्सर्वं[6] न गृह्णीयाद्यदीच्छेदात्मनोहितम्[7] ।
कुव्याधिमरणं [8]कुष्ठं स्त्रीवश्यं पतितं [9]मृतम् ॥ ६५ ॥
दुर्भिक्षमृतमुन्मत्तमव्यक्तलिङ्गमेव च ।
हीनाङ्गं भूचरवृद्धं[10] पलायनपरं तथा[11] ॥ ६६ ॥

---

१. पद्मासनस्थस्तु सैव क० ।
२. गणेशो क० ।
३. ग० नास्ति ।
४. श्रृणु शङ्क......तव वारादिनायुतम् वृद्ध अथवा बहु क० ।
५. सिद्धिम् क० ।
६. शवम् क० ।
७. यदिच्छेत् क० ।
८. कुष्ठिम् क० ।
९. गुरुम् क० ।
१०. तु वरं वृद्धम् क० ।
११. परायण क० ।

[1]अन्यद् यो यद् विचारेण हत्वा लोकं जपन्ति ये ।
ते सर्वे व्याघ्रभक्षा[2] स्युः खादन्ति व्याघ्ररूपिणः ॥ ६७ ॥
पर्युषितं तथाश्वस्थमधिकाङ्गं[3] कुकिल्विषम् ।
ब्राह्मणं गोमयं वीरं धार्मिकं सन्त्यजेत् सुधीः ॥ ६८ ॥
स्त्रीजनं योगिनं त्यक्त्वा साधयेद्वीरसाधनम् ।
तदा सिद्धो भवेन्मन्त्री आज्ञया मे न संशयः ॥ ६९ ॥
तरुणं सुन्दरं शूरं मन्त्रविद्यं समुज्ज्वलम् ।
गृहीत्वा जपमाकृत्य सिद्धो भवति नान्यथा ॥ ७० ॥
मनुष्यशवहृत्पद्मे सर्वसिद्धिकुलाकुला:[4] ।
तत्र सर्वासनान्येव सिद्ध्यन्ति नात्र संशयः ॥ ७१ ॥
अथान्यत्तत्प्रकारन्तु यत्कृत्वा योगिराट्[5] भवेत् ।
कोमलाद्यासने स्थित्वा धारयन्[6] मारुतं सुधीः ॥ ७२ ॥
[7]तत्कोमलासनं वक्ष्ये शृणुष्व मम तद्वचः ।
[8]अवृद्धकं मृतं बालं षण्मासात् कोमलं परम् ॥ ७३ ॥
तद्विभेदं प्रवक्ष्यामि गर्भच्युतमहाशवम् ।
तद्धि व्याघ्रत्वचारूढं कृत्वा तत्र जपेत् स्थितः ॥ ७४ ॥
षण्मासानन्तरं यावद्दशमासाच्च पूर्वकम् ।
मृतं चारुमुखं बालं गर्भाष्टमपुरःसरम् ॥ ७५ ॥

---

१. अन्यायदविचारेण क० ।
२. व्याघ्रभक्षाः स्यात्--मूले क० ।
३. तथास्पृश्यम् क० ।
४. सर्वसिद्धिकलाकुला क० ।
५. योगिनी-मूले क० ।
६. धारयेन् मारुतं सुधीः क० ।
७. तत्कोमलादिमाहात्म्यं शृणुष्वासनं तत्त्वतः क० ।
८. अचूडकम् क० ।

एकहस्ते द्विहस्ते वा चतुर्हस्ते समन्ततः ।
विशुद्ध आसने कुर्यात् संस्कारं पूजनं ततः ॥ ७६ ॥
पूर्णे पञ्चमवर्षे च साधको वीतभीः स्वयम् ।
[1]हीनवीतोपनयनो यो मृतस्तं हि कोमलम् ॥ ७७ ॥
गर्भच्युतफलं नाथ शृणु तत्फलसिद्धये ।
अणिमाद्यष्टसिद्धिः स्यात् संवत्सरस्य साधनात् ॥ ७८ ॥
मृतासने जपेन्मन्त्री महाविद्यामनुं शुभम् ।
अचिरात्तस्य सिद्धिः स्यान्नात्र कार्या विचारणा ॥ ७९ ॥
अथान्यत् शवमाहात्म्यं शृणु सिद्धिश्च[2] साधनात् ।
साधको योगिराट् भूत्वा मम पादतले वसेत् ॥ ८० ॥
दशसंवत्सरे पूर्णे यो म्रियेत् शुभे दिने ।
शनौ मङ्गलवारे च तमानीय प्रसाधयेत् ॥ ८१ ॥
तत्र वीरासनं कृत्वा यो जपेद्भद्रकालिकाम् ।
अथवा बद्धपद्मे च स सिद्धो भवति ध्रुवम् ॥ ८२ ॥
अथ भावफलं वक्ष्ये येन शवादिसाधनम् ।
अकस्मात् प्राप्तिमात्रेण शवस्य विहितस्य च ॥ ८३ ॥
यं पञ्चदशवर्षीयं सुन्दरं पतितं रणे ।
तमानीय जपेद्विद्यां निशि वीरासने स्थितः ॥ ८४ ॥
शीघ्रमेव सुसिद्धिः स्यात् खेचरी वायुपूरणी ।
धारणाशक्तिसिद्धिः स्यात् यः करोतीह साधनम् ॥ ८५ ॥
अथ षोडशवर्षीयं सर्वसिद्धिकरं नृणाम् ।
भोगमोक्षौ करे तस्य शवेन्द्रस्य च साधनात् ॥ ८६ ॥
एवं क्रमेण पञ्चाशद् वर्षीयं सुन्दरं वरम् ।
आनीय साधयेद्यस्तु स योगी भवति ध्रुवम् ॥ ८७ ॥

---

१ हीनवृद्धोपनयनम् क० ।
२. तत् सिद्धिसाधनात् क० ।

शवं[1] रणस्थमानीय साधयेत्सुसमाहितः ।
इन्द्रतुल्यो भवेन्नाथ रणस्थशवसाधनात् ॥ ८८ ॥
यदि सम्मुखयुद्धे वा [2]शृणु पञ्चीशघातनम् ।
शवमानीय वीरेन्द्रो जपेद्वीरासनस्थितः ॥ ८९ ॥
तत् शवन्तु महादेव पूजार्थं निजमन्दिरे ।
देवालये निर्णये च स्थापयित्वा जपं चरेत् ॥ ९० ॥
तत्र वीरासनं किं वा योनिमुद्रासनादिकम् ।
पद्मासनं तथाकृत्य वायुं धृत्वा जपं चरेत् ॥ ९१ ॥
मासेकेन भवेद्योगी विप्रो गुणधरः शुचिः ।
सूक्ष्मवायुधारणज्ञो जपेद् यौवनगे शवे ॥ ९२ ॥
शवसाधनकालेन[3] यद्यत् कर्म करोति हि ।
तत्कर्मसाधनादेव योगी स्यादमरो नरः ॥ ९३ ॥

[4]आनन्दभैरवी उवाच —

कालक्रियादिकं ज्ञात्वा सूक्ष्मानिलनिधारणम् ।
साधको विचरेद्वीरो वीराचारविवेचकः ॥ ९४ ॥
[5]शवादेरणयातस्य क्रियामाहात्म्यमुत्तमम् ।
शृणु संकेतभाषाभिः शिवेन्द्रचन्द्रशेखर ॥ ९५ ॥
[6]एकहस्तार्द्धमाने तु भूम्यधोविधिमन्दिरे ।
संस्थाप्य सुशवं नाथ मायादवगतः प्रभो ॥ ९६ ॥
एकाहं जगदाधारा आधारान्तर्गता सती ।
पतिहीना सूक्ष्मरूपादधरादि चराचरम् ॥ ९७ ॥

---

१. एतत्रणस्थम् क० ।
२. शूल क० ।
३. वै क० ।
४. इति श्रीरुद्रयामले विंशति पटलः समाप्तः क० ।
५. रणधातस्य क० ।
६. हस्तोर्ध्वं क० ।

मदीयं साधकं पुण्यं धर्मकामार्थमोक्षगम् ।
[1]प्रकरोमि सदा रक्षां धात्रीरूपा सरस्वती ॥ ९८ ॥
केवलं तदभावेन[2] शम्भो योगपरायण ।
मग्ना संसारकरणात्त्वयि त्वञ्चाहमेव च ॥ ९९ ॥
यद्यत्पदार्थनिकरे तिष्ठसि त्वं सदा मुदा ।
तत्रैव संस्थिरा हृष्टा चाहमेव न संशयः ॥ १०० ॥
एतद्भावं त्वं करोषि कस्य हेतोस्तव प्रिया ।
वामाङ्गे संस्थिरा नित्यं कामक्रोधविवर्जिता ॥ १०१ ॥

आनन्दभैरव उवाच—

किं प्रयोजनमेवं हि शवादीनाञ्च साधनात् ।
यदि ते श्रीपदाम्भोजमधून्मत्तो भवेद्यतिः ॥ १०२ ॥
त्रैलोक्यपूजिते भीमे वाग्वादिनीस्वरूपिणी ।
शवसाधनमात्रेण केन योगी भवेद्वद ॥ १०३ ॥
आनन्दरसलावण्यमन्दहासमुखाम्बुजे ।
योगी भजति योगार्थं केन तत्फलमावद ॥ १०४ ॥

[3]आनन्दभैरवी उवाच—

यदि शङ्करभक्तोऽसि यदि मम जापपरायणः ।
तथापि शवभावेन शववत् शवसाधनम् ॥ १०५ ॥
रात्रियोगे प्रकर्त्तव्यं दिवसे न कदाचन ।
शवे स्थिरो यो बभूव स भक्तो मे न संशयः ॥ १०६ ॥
मे [4]शवाकृतिमद्द्रव्यं मम तुष्टिनिबन्धनम् ।
ममाज्ञापालने योग्यः कुर्याद् वीरः शवासनम् ॥ १०७ ॥

---

१. एकावामि क० ।
२. तवभावेन क० ।
३. आनन्दभैरवी क० ।
४. मे शवाइतिसद्द्रव्यम् क० ।

यद्यहं तत्र गच्छामि तदैव स शिवो भवेत् ।
निःशेषत्यागमात्रेण शवत्वं प्रलयं तनोः ॥ १०८ ॥
यः करोति भावराशिं मयि देव्यां महेश्वर ।
त्रैलोक्यपूजितायान्तु स शिवः शवमाश्रयेत् ॥ १०९ ॥
अधिकारी[1] तु भक्तस्य पालनं [2]परपृष्ठतः ।
करोमि कामिनीनाथ सन्देहो नात्र भूतले[3] ॥ ११० ॥
यदाहं त्यज्यते ? गात्रं पशूनां मारणाय च ।
तदैते च मृताः सर्वे [4]जीवन्ते ? केन हेतुना ॥ १११ ॥
[5]तदाहुतिमहाद्रव्यं शवेन्द्रं रणहानिगम् ।
आनीय साधयेद्यस्तु स स्थिरो मे सुभक्तिगः ॥ ११२ ॥
सदा क्रोधी भवेद्यस्तु स क्रूरो नात्र संशयः ।
स कथं [6]वीररात्रौ च साधयेद् विह्वलः शवम् ॥ ११३ ॥
भयविह्वलचेता यः स क्रोधी नात्र संशयः ।
नास्ति क्रोधसमं पापं पापात् क्षिप्तो भवेत् शवे ॥ ११४ ॥
यो भक्तः पापनिर्मुक्तो सिद्धरूपी निराश्रयः ।
विवेकी ध्याननिष्ठश्च स्थिरः संसाधयेत् शवम् ॥ ११५ ॥
यावत् कालं स्थिरचित्तं न प्राप्नोति जितेन्द्रियः ।
तावत्कालं नापि कुर्यात् शवेन्द्रस्यापि साधनम् ॥ ११६ ॥
शवमानीय तद्द्वारे तेनैव परिखन्य च ।
तद्दिनात्तद्दिनं यावत् यद्बद्ध्वा[7] व्याप्य साधयेत् ॥ ११७ ॥

---

१. अधिकालाय भक्तस्य क० ।

२. शव क० ।

३. नात्र विध्यते इति क० ।

४. केवलाकृति हेतुना क० ।

५. तदाकृति क० ।

६. घोररात्रौ क० ।

७. वत्सरं व्याप्य साधयेत् क० ।

एवं कृत्वा हविष्याशी महाविद्यादिसाधनम् ।
जितेन्द्रियो मुदा कुर्याद् अष्टाङ्गसाधनेन च ॥ ११८ ॥
तदष्टाङ्गफलं ह्येतत् यत्कृत्वा सिद्धिभाग् भवेत् ।
नाडीमुद्राभेदकञ्च कुलाचारफलान्वितम् ॥ ११९ ॥
अष्टाङ्गसाधनादेव सिद्धरूपी महीतले ।
पश्चादन्य[1] स्वर्गगामी भवेन्न भूतलं विना ॥ १२० ॥
आदौ भूतलसिद्धिः [2]स्याद्भुवो लोकस्य सिद्धिभाक् ।
[3]जनलोकस्य सिद्धांशस्तपोलोकस्य सिद्धिभाक् ॥ १२१ ॥
सत्यलोकस्य सिद्धीशः पश्चाद् भवति साधकः ।
एवं क्रमेण सिद्धिः स्यात् स्वर्गादीनां महेश्वर ॥ १२२ ॥
अष्टाङ्गसाधनार्थाय देवा भवन्ति भूतले ।
भूतले सिद्धिमाहृत्य गच्छन्ति ब्रह्ममन्दिरे ॥ १२३ ॥
क्रमेणैवं विलीनास्ते अतो भूतलसाधनम् ।
भूतले शवमास्थाय ब्रह्मचारी दिवा शुचि ॥ १२४ ॥
निशायां पञ्चतत्त्वेन दिवसेऽष्टाङ्गसाधनम् ।
जितेन्द्रियो [4]निर्विकारो वित्तवानपरोनरः ॥ १२५ ॥
शवं संसाधयेद्धीरश्चिन्तालस्यविवर्जितः ।
चिन्ताभिर्जायते लोभो लोभात् कामः प्रपद्यते ॥ १२६ ॥
कामाद्भवति संमोहो मोहादालस्यसञ्चयः ।
आलस्यदोषजालेन निद्रा भवति तत्क्षणात् ॥ १२७ ॥

---

१. शून्य क० ।
२. भुवोलोकस्य क० ।
३. पश्चात् स्वरलोकसिद्धिस्यात् महालोकस्य सिद्धिभाक् क० ।
४. वित्तध्यानपरो क० ।

महानिद्राविपाकेन मृत्युर्भवति निश्चितम् ।
[1]अपक्वनिद्राभङ्गेन क्रोधो भवति निश्चितम् ॥ १२८ ॥
तत्क्रोधाच्चित्तविकलो विकलात् श्वासवर्द्धनः ।
वृथायुः क्षयमाप्नोति विस्तरे श्वाससंक्षये ॥ १२९ ॥
बलबुद्धिक्षयं याति बुद्धिहीनो जडात्मकः ।
जडभावेन मन्त्राणां जपहीनो भवेन्नरः ॥ १३० ॥
जपहीने[2] श्वासनाशः श्वासनाशे तनुक्षयम् ।
अतस्तनुं समाश्रित्य जपनिष्ठो भवेत् शुचिः ॥ १३१ ॥
अष्टाङ्गधारणेनैव सिद्धो भवति नान्यथा ।
अष्टाङ्गलक्षणं वक्ष्ये साक्षात् सिद्धिकरं परम् ॥ १३२ ॥
जन्मकोटिसहस्राणां फलेन कुरुते नरः ।
यमेन लभ्यते ज्ञानं ज्ञानात् कुलपतिर्भवेत् ॥ १३३ ॥
यो योगेशः स कुलेशः शिशुभावस्थनिर्मलः ।
नियमेन भवेत् पूजा पूजया लभते शिवम् ॥ १३४ ॥
यत्र कन्या[3] न सम्पूर्णा सम्पूर्णः शुचिरुच्यते ।
आसनेन दीर्घजीवी रोगशोकविवर्जितः ॥ १३५ ॥
ग्रन्थिभेदनमात्रेण साधकः शीतलो भवेत् ।
प्राणायामेन शुद्धः स्यात् प्राणवायुवशेन च ॥ १३६ ॥
वशीभवति देवेश आत्मारामेऽपि[4] लीयते ।
प्रत्याहारेण चित्तन्तु चंचलं कामनाप्रियम् ॥ १३७ ॥
तत्कामनाविनाशाय स्थापयेत् पदपङ्कजे ।
धारणेन [5]वायुसिद्धिरष्टसिद्धिस्ततः परम् ॥ १३८ ॥

---

१. अपक्व क० ।

२. बलहीने क० ।

३. यत्रकल्याणसम्पूर्णः सम्पूर्णः शुचिरुच्यते क० ।

४. आत्मारामोऽपि क० ।

५. रिष्टसिद्धि क० ।

अणिमासिद्धिमाप्नोति अणुरूपेण वायुना ।
ध्यानेन लभते मोक्षं मोक्षेण लभते सुखम् ॥ १३९ ॥
सुखेनानन्दवृद्धिः स्यादानन्दो ब्रह्मविग्रहः ।
समाधिना महाज्ञानी सूर्याचन्द्रमसोर्गतिः ॥ १४० ॥
महाशून्ये लयस्थाने श्रीपदानन्दसागरः ।
तत्तरङ्गे मनो दत्त्वा परमार्थविनिर्मले ॥ १४१ ॥
श्रीपादमूर्त्तिमाकल्प्य ध्यायेत् कोटिरवीन्दुवत् ।
श्रीमूर्तिं कोटिचपलां समुज्ज्वलां सुनिर्मलाम् ॥ १४२ ॥
ध्यायेद्योगी सहस्रारे कोटिसूर्येन्दुमन्दिराम् ॥ १४३ ॥
श्रीविद्यामतिसुन्दरीं त्रिजगतामानन्दपुंजेश्वरीं
कोट्यर्कायुततेजसि प्रियकरीं योगादरीं शांकरीम् ।
तां मालां स्थिरचञ्चलां गुरुघनां [1]व्यालाचलां केवलाम्
ध्यायेत्[2] सूक्ष्मसमाधिना स्थिरमतिः सश्रीपतिर्गच्छति ॥ १४४ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रेमहातन्त्रोद्दीपनेभावनिर्णये
पाशवकल्पे षट्चक्रसारसंकेते योगविद्याप्रकरणे
मन्त्रसिद्धिशक्त्युपाये भैरवीभैरवसंवादे
चतुर्विंशः पटलः ॥



१. व्यालोचनाय क० ।
२. यः सुसमाधिना क० ।

# पञ्चविंशः पटलः

आनन्दभैरव उवाच—

वद कान्ते रहस्यं मे तत्त्वावधानपूर्वकम् ।
यद् यज्ज्ञात्त्वा महायोगी प्रविशत्यनलाम्बुजे ॥ १ ॥
यदि स्नेहदृष्टिरस्ति मम ब्रह्मनिरूपणम् ।
योगसारं तत्त्वपथं निर्मलं वद योगिने ॥ २ ॥

आनन्दभैरवी उवाच—

शृणु प्राणेश वक्ष्यामि योगनाथ क्रियागुरो ।
योगाङ्गं योगिनामिष्टं तत्त्वब्रह्मनिरूपणम् ॥ ३ ॥
एतत्[1] सृष्टिप्रकारञ्च प्रपालनविधिन्तथा ।
असंख्यसृष्टिसंहारं वदामि तत्त्वतः शृणु ॥ ४ ॥
त्वमेव संहारकरो[2] वरप्रियः प्रधानमेषु त्रितयेषु शंकर ।
संहारभावं मलभूतिनाशनं[3] (सदा)प्रधानमाद्यस्य जगत्प्रपालनम् ॥ ५ ॥
तत्राधनं मेरुभुजङ्गमङ्गं[4] सृष्टिप्रकारं खलु तत्र मध्यमम् ।
तत्पालनञ्चेति[5] मयैव राज्ये संहाररूपं प्रकृतेर्गुणार्थकम् ॥ ६ ॥
एतत्त्रयं नाथ भयादिकारणं तन्नाशनाम्ने[6] प्रणवं गुणात्मकम् ।
त्रयंगुणातीतमनन्तमक्षरं संभाव्य योगी भवतीह साधकः ॥ ७ ॥
अव्यक्तरूपात् प्रणवाद्धिसृष्टिस्तल्लीयते व्यक्ततनोः समासा ।
सूक्ष्माद्यकारात् प्रतिभान्ति खे सदा प्रणश्यति स्थूलकलाभिरक्षरात्॥८॥

---

१. तत्र दृष्टिप्रकारञ्च क० ।

२. कलेवरप्रियः क० ।

३. भवभूति नाशनात् क० ।

४. तत्राधमम् क० ।

५. तत्पालनं चोत्तमेव बाह्ये क० ।

६. तन्नाशनाशे क० ।

अतीव चित्रं जगतां विचित्रं नित्यं चरित्रं कथितुं न शक्यते ।
हंसाश्रितास्ते भववासिनो जना ज्ञात्वा न देहस्थमुपाश्रियन्ते ॥ ९ ॥
देहाधिकारी प्रणवादिदेव मायाश्रितो निद्रित एष[1] कालः ।
प्रलीयते दीर्घपथे च काले तदा प्रणश्यन्ति जगत् स्थिता जनाः ॥ १० ॥
कालो[2] जगद्भक्षक ईशवेशो तरीस्तीर्णगात्रो प्रतिर्हीनमीनः ।
स एव मृत्युर्विहितं चराचरं प्रभुञ्जति श्रीरहितं पलायनम् ॥ ११ ॥
पञ्चेन्दुतत्त्वेन महेन्द्रसृष्टिः प्रतिष्ठिता यज्ञविधानहेतुना ।
सदैव यज्ञं कुरुते भवार्णवे निःसृष्टिकाले वरयज्ञसाधनम् ॥ १२ ॥
हिताहितं तत्र महार्णवे भयं विलोक्य लोकाभयविह्वलाः सदा ।
विशन्ति ते कुत्सितमार्गमण्डले अतो महानारकिबुद्धिहीनाः ॥ १३ ॥
मायामये धर्मकुलानले भवे लीनो हरेर्याति[3] पथानुसारी ।
म्रियेत् कालानलतुल्यमृत्युना कथन्तु योगी कथमेव साधकः ॥ १४ ॥
यः साधकः प्रेम-कलासुभक्त्या स एव मूर्खो यदि याति संसृतौ ।
संसारहीनः प्रियचारुकाल्याः सिद्धो भवेत् कामदचक्रवर्ती ॥ १५ ॥
वसेन्न सिद्धो गृहिणीसमृद्ध्यां महाविपद्दुःखविशोषिकायाम् ।
यदीह काले प्रकरोति वासनां तदा भवेन्मृत्युरतीव निश्चितम् ॥ १६ ॥
कृपावलोक्यं वदनारविन्दं तदैव हे नाथ ममैव चेद्यदि ।
सदैव यः साधुगणाश्रितो [4]नरो ध्यात्वा निगूढमतिभागगद्गतः॥ १७॥
स एव साधुः प्रकृतेर्गुणाश्रितः कृती वशी वेदपुराणवक्ता ।
सत्त्वं महाकाल इतीह चाहं प्रणिश्चयं ते कथितं प्रिये मया ॥ १८ ॥
गुणेन भक्तेन्द्रगणाधिकानां साक्षात् फलं योगजयाख्यसंगतिम् ।
अष्टाङ्गभेदेन शृणुष्व कामप्रेमाय भावाय जयाय[5] वक्ष्ये ॥ १९ ॥

---

१. एव क० ।

२. काले जगद्भक्षक ईशरोपात् विस्तीर्णगात्रो गतिहीनमीनः क० ।

३. यतो वेदपथानुसारी क० ।

४. अतिभावलग्नः क० ।

५ यमाय क० ।

मायादिकं यः प्रथमं वशं नयेत्
स एव योगी जगतां प्रतिष्ठितः ।
रविप्रकारं यमवासनावशे,
शृणुष्व तं कालवशार्थकेवलम् ॥ २० ॥
सर्वत्र कामादिकमाशु जित्वा
जेतुं समर्थो यमकर्मसाधकः ।
कामं तथा क्रोधमतीव लोभं
मोहं मदं मात्सरितं [1]सुदुष्कृतम् ॥ २१ ॥
अतो मया द्वादशशब्दघातकं
वशं समाकृत्य महेन्द्रतुल्यम् ।
सर्वत्र वायोर्वशकारणाय
करोति योगी सचलान्यथा भवेत् ॥ २२ ॥
अहिंसनं सत्यसुवाक्यसुप्रियम्
अस्तेयभावं कुरुते वशिष्ठवत् ।
सुब्रह्मचर्यं सुदृढार्जवं सदा
क्षमाधृतिं सेवसुसूक्ष्मवायुनः ॥ २३ ॥
तथा मिताहारमसंशयं मनः
शौचं प्रपञ्चार्थविवर्जनं प्रभो ।
करोति यः साधकचक्रवर्ती
[2]वाद्योत्सवाज्ञानविवर्जनं सदा ॥ २४ ॥
वशी यमद्वादशसंख्ययेति
करोति चाष्टाङ्गफलार्थसाधनम् ।
वरानना श्रीचरणारविन्दं
[3]सत्वादशाच्छन्नतिनेत्रगोचरम् ॥ २५ ॥

---

१. त्वहङ्कृतम् क० ।

२. बाह्योत्सवम् क० ।

३. सत्वादशाब्दमतिनेत्र गोचरम् क० ।

तपश्च सन्तोषमनस्थिरं सदा
आस्तिक्यमेवं द्विजदानपूजनम् ।
नितान्तदेवार्चनमेव भक्त्या
सिद्धान्तशुद्धश्रवणं च ह्रीर्मतिः ॥ २६ ॥

जपोहुतं तर्पणमेव सेवनं
तद्भावनं चेष्टनमेव नित्यम् ।
इतीह शास्त्रे नियमाश्चतुर्दशा
भक्तिक्रियामङ्गलसूचनानि ॥ २७ ॥

पूर्वोक्तयोन्यासनमेव सत्यं
भेकासनं वद्धमहोत्पलासनम् ।
वीरासनं भद्रसुभकासनं[1] च
पूर्वोक्तमेवासनमाशु कुर्यात् ॥ २८ ॥

सर्वाणि तन्त्राणि कृतानि नाथ
सूक्ष्मानि[2] नालं वशहेतुना मया ।
तथापि मूढो यदि वायुपान-
[3]माहृत्य योनौ भ्रमतीह पातकी ॥ २९ ॥

प्राणानिलानन्दवशेन मत्तो
गजेन्द्रगामी पुरुषोत्तमं[4] स्मृतम् ।
[5]तस्यैव सेवानिपुणो भवेद्वशी
ब्रह्माण्डलोकं परिपाति यो वली ॥ ३० ॥

---

१. भद्रसु भद्रकासनम् क० ।
२. सूक्ष्मानिलानाम् क० ।
३. नाहृत्य योनौ क० ।
४. पुरुषोत्तमः स्मृतः क० ।
५. भस्यैवमेवा निपुणो मूले ।

वदामि देवादिसुरेश्वर प्रभो,
सूक्ष्मानिलं प्राणवशेन धारयेत् ।
सिद्धो भवेत् साधकचक्रवर्ती
सर्वान्तरस्थं परिपश्यति प्रभुम् ॥ ३१ ॥

श्रीआनन्दभैरव उवाच—

वद कान्ते महाब्रह्मज्ञानं सर्वत्र शोभनम् ।
येन वायुवशं कृत्वा खेचरो भूभृतां पतिः ॥ ३२ ॥
साधको ब्रह्मरूपी स्यात् ब्रह्मज्ञानप्रसादतः ।
ब्रह्मज्ञानात् परं ज्ञानं कुत्रास्ति वद सुन्दरि ॥ ३३ ॥

श्री आनन्दभैरवी उवाच—

शृणुष्व योगिनां नाथ धर्मज्ञो ब्रह्मसञ्ज्ञक[1] ।
अज्ञानध्वान्तमोहानां निर्मलं ब्रह्मसाधनम् ॥ ३४ ॥
ब्रह्मज्ञानसमो धर्मो नान्यधर्मो विधीयते ।
[2]यदि ब्रह्मज्ञानधर्मी स सिद्धो नात्रसंशयः ॥ ३५ ॥
कोटिकन्याप्रदानेन कोटीजापेन किं फलम् ।
ब्रह्मज्ञानसमो धर्मो नान्यधर्मो विधीयते ॥ ३६ ॥
सरोवरसहस्रेण कोटिहेमाचलेन च ।
कोटिब्राह्मणभोज्येन कोटितीर्थेन किं फलम् ॥ ३७ ॥
कामरूपे महापीठे साधकैर्लभ्यते यदि ।
ब्रह्मज्ञानसमो धर्मो नान्यधर्मो विधीयते ॥ ३८ ॥

---

१. ब्रह्म साधक क० ।

२. गयायां पिण्डदानेन वाराणस्यां मृतेन किम्,
किं कुरुक्षेत्रदानेन प्रयागे वपनं यदि ।
अश्वमेधसहस्रेण राजसूयशतेन किम्,
ब्रह्मज्ञानसमो धर्मो नान्यधर्मो विधीयते ॥ क० ।

ब्रह्मज्ञानन्तु द्विविधं प्राणायामजमव्ययम् ।
भक्तिवाक्यं शब्दरसं स्वरूपं ब्रह्मणः पथम्[1] ॥ ३९ ॥
प्राणायामन्तु द्विविधं सुगर्भश्च निगर्भकम् ।
जपध्यानं सभर्गन्तु तदा[2] युक्तं निगर्भकम् ॥ ४० ॥
[3]अव्ययालक्षणाक्रान्तं प्राणायामं परात् परम् ।
ब्रह्मज्ञानेन जानाति साधको विजितेन्द्रियः ॥ ४१ ॥
तत्प्रकारद्वयं नाथ [4]मालावृत्तिं जपक्रमम् ।
[5]मालावृत्तिद्वादशकं जपक्रमन्तु षोडश ॥ ४२ ॥
नासिकायां महादेव लक्षणत्रयमनुत्तमम्[6] ।
पूरकं कुम्भकं तत्र रेचकं देवतात्रयम् ॥ ४३ ॥
एतेषामप्यधिष्ठानं ब्रह्मविष्णुशिवाः प्रजाः ।
त्रिवेणीसंगमे यान्ति सर्वपापापहारकाः ॥ ४४ ॥
ईड़ा च भारती गङ्गा पिङ्गला यमुना मता ।
ईडापिंगलयोर्मध्ये सुषुम्ना च सरस्वती ॥ ४५ ॥
त्रिवेणीसंगमो यत्र तीर्थराजः स उच्यते ।
त्रिवेणीसङ्गमे वीरश्चालयेत्तान् पुनः पुनः । ४६ ॥
सर्वपापाद्विनिर्मुक्तो सिद्धो भवति नान्यथा ।
पुनः पुनः [7]भ्रामयित्वा महातीर्थे निरञ्जने ॥ ४७ ॥

---

१. पदम् क० ।

२. तदयुक्तम् क० ।

३. अव्ययलक्षणाक्लान्तम् क० ।

४. मालावर्ति क० ।

५ मात्रावर्ति क० ।

६. लक्षणत्रयमुत्तमम् क० ।

७. भावयित्वा क० ।

वायुरूपं महादेवं सिद्धो भवति नान्यथा ।
चन्द्रसूर्यात्मिकामध्ये वह्निरूपे महोज्ज्वले ॥ ४८ ॥
ध्यात्वा कोटीवीरकरं कुण्डलीकिरणं वशी ।
त्रिवारभ्रमणं वायोरुत्तमाधममध्यमाः ॥ ४९ ॥
यत्र यत्र गतो वायुस्तत्र तत्र त्रयं त्रयम् ।
इडादेवी च चन्द्राख्या सूर्याख्या पिङ्गला तथा ॥ ५० ॥
सुषुम्ना जननी मुख्या सूक्ष्मा पङ्कजतन्तुवत् ।
सुषुम्ना मध्यदेशे च वज्राख्या नाडिका शुभा ॥ ५१ ॥
तत्र सूक्ष्मा चित्रिणी च तत्र श्रीकुण्डलीगतिः ।
तया संग्राह्य तं नाड्या षट्पद्मं सुमनोहरम् ॥ ५२ ॥
ध्यानगम्यापरं ज्ञानं षट्शरं शक्तिसंयुतम् ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ ५३ ॥
ततः परशिवो नाथ षट्शिवाः परिकीर्तिताः ।
डाकिनी राकिणी शक्तिर्लाकिनी काकिनी तथा ॥ ५४ ॥
[1]साकिनी तत्र षट्पद्मे शक्तयः षट्शिवान्विताः ।
मूलाधारं स्वाधिष्ठानं मणिपूरं सुपङ्कजम् ॥ ५५ ॥
अनाहतं [2]विशुद्धाख्यमाज्ञाचक्रं महोत्पलम् ।
आज्ञाचक्रादिमध्ये तु चन्द्रं शीतलतेजसम् ॥ ५६ ॥
प्रपतन्तं मूलपद्मे तं ध्यात्वा[3] पूरकानिलम् ।
यावत्कालं स्थैर्यगुणं तत्कालं कुम्भकं स्मृतम् ॥ ५७ ॥
पिङ्गलायां प्रगच्छन्तं रेचकं तं वशं नयेत् ।
अङ्गुष्ठैकपर्वणा च दक्षनासापुटं वशी ॥ ५८ ॥

---

१. शाकिनी हाकिनी तत्र षट्पद्मे षट् शिवात्मिका क० ।
२. आनाख्यं षण्मनोहरम् क० ।
३. ध्यायेत् क० ।

[1]धृत्वा षोडशवारेण प्रणवेन जपं चरेत् ।
एतत्पूरकमाकृत्य कुर्यात्कुम्भकमद्भुतम्[2] ॥ ५९ ॥
चतुःषष्टिप्रणवेन जपं ध्यानं समाचरेत् ।
कुम्भकानन्तरं नाथ रेचकं कारयेद् बुधः ॥ ६० ॥
द्वात्रिंशद्वारजापेन मूलेन प्रणवेन वा ।
द्विनासिकापुटं बद्ध्वा कुम्भकं सर्वसिद्धिदम् ॥ ६१ ॥
कनिष्ठानामिकाभ्यान्तु वाममङ्गुष्ठदक्षिणम् ।
पुनर्दक्षिणनासाग्रे [3]वायुमापूरयेद् बुधः ॥ ६२ ॥
[4]मनुषोडशजापेन कुम्भयेत् [5]पूर्ववत्ततः ।
ततो वामे रेचकञ्च द्वात्रिंशत्प्रणवेन तु ॥ ६३ ॥
पुनर्वामेन सम्पूर्य षोडशप्रणवेन तु ।
पुनर्दक्षिणनासाग्रे द्वादशाङ्गुलमानतः ॥ ६४ ॥
कुम्भयित्वा रेचयेद्यः सर्वत्र पूर्ववत् प्रभो ।
प्राणायामत्रयेणैव प्राणायामैकमुत्तमम् ॥ ६५ ॥
द्विवारं मध्यमं प्रोक्तं मध्यमं चैकवारकम् ।
त्रिकालं कारयेद्यत्नात् अनन्तफलसिद्धये ॥ ६६ ॥
प्रातर्मध्याह्नकाले च सायाह्ने नियतः शुचिः ।
जपध्यानादिभिर्युक्तं सगर्भं यः करोति हि ॥ ६७ ॥
मासात् सल्लक्षणं प्राप्य षण्मासे पवनासनः ।
तालुमूले समारोप्य जिह्वाग्रं योगसिद्धये ॥ ६८ ॥

---

१. ध्यात्वा क० ।
२. मुत्तमम् क० ।
३. सम्पूरयेत् ततः क० ।
४. मनोः षोडशजापेन क० ।
५. पूरयेत्ततः क० ।

त्रिकाले सिद्धिमाप्नोति प्राणायामेन षोडश ।
सदाभ्यासी वशीभूत्वा पवनं[1] जनयेत् पुमान् ॥ ६९ ॥
षण्मासाभ्यन्तरे सिद्धिरिति योगार्थनिर्णयः ।
योगेन लभ्यते सर्वं योगाधीनमिदं जगत् ॥ ७० ॥
तस्माद् योगं परं कार्यं यदा योगी तदा सुखी ।
विना योगं न सिद्धेऽपि कुण्डली परदेवता ॥ ७१ ॥
अथ योगं सदा कुर्यात् ईश्वरीपाददर्शनात् ।
योगयोगाद्भवेन्मोक्ष इतियोगार्थनिर्णयः ॥ ७२ ॥
मन्त्रसिद्धीच्छुको यो वा सैव योगं सदाभ्यसेत् ।
मात्रावृत्तिं प्रवक्ष्यामि काकचञ्चुपुटं तथा ॥ ७३ ॥
सूक्ष्मवायुभक्षणं तत् चन्द्रमण्डलचालनम् ।
[2]त्र्यावृत्तिश्चैव विविधं तन्मध्ये उत्तमं त्रयम् ॥ ७४ ॥
वर्णं सचन्द्रं संयुक्तं मूलं त्र्यक्षरमेव वा ।
जानुजङ्घामध्यदेशे तत्तत्सर्वासनस्थितः ॥ ७५ ॥
वामहस्ततालुमूलं भ्रामयेद्द्वादश क्रमात् ।
द्वादश क्रमशः कुर्यात् प्राणायामं हि पूर्ववत् ॥ ७६ ॥
मात्रावृत्तिक्रमेणैव जपमष्टसहस्रकम् ।
प्राणायामद्वादशैकैर्भवेत्तदष्टसहस्रकम् ।
कृत्वा सिद्धीश्वरो नाम निष्पापी चैकमासतः ॥ ७७ ॥
त्रिसन्ध्यं कारयेद्यत्नाद्ब्रह्मज्ञानी निरञ्जनः ।
भवतीति न सन्देहः सदाभ्यासी हि योगिराट् ॥ ७८ ॥
योगाभ्यासाद्भवेन्मुक्तो योगाभ्यासात् कुलेश्वरः ।
योगाभ्यासाच्च संन्यासी ब्रह्मज्ञानी निरामयः ॥ ७९ ॥

---

१. पवनः पाचयेत् क० ।
२. मात्रावृत्तिश्च क० ।

सदाभ्यासाद्भवेद्योगी सदाभ्यासात् परन्तपः ।
सदाभ्यासात् पापमुक्तो [1]विधिविद्याशकृत् शकृत् ॥ ८० ॥

काकचञ्चुपुटं कृत्वा पिवेद्वायुमहर्निशम् ।
सूक्ष्मवायुक्रमेणैव सिद्धो भवति [2]योगिराट् ॥ ८१ ॥

वद्धपद्मासनं कृत्वा योगिमुद्रां विभाव्य च ।
मूले सम्पूरयेद् वायुं काकचञ्चुपुटेन तु ॥ ८२ ॥

मूलमाकुञ्च्य सर्वत्र प्राणायामे मनोरमे ।
प्रबोधयेत् कुण्डलिनीं[3] चैतन्यां चित्स्वरूपिणीम् ॥ ८३ ॥

[4]ओष्ठाधरकाकतुलं दन्ते दन्ताः प्रगाढ़कम् ।
वद्ध्वा[5] वा यद् यजेद् योगी जिह्वां नैव प्रसारयेत् ॥ ८४ ॥

राजदन्तयुगं नाथ न स्पृशेज्जिह्वया सुधीः ।
काकचञ्चुपुटं कृत्वा वद्ध्वा वीरासने[6] स्थितः ॥ ८५ ॥

तालुजिह्वामूलदेशे चान्यजिह्वां प्रयोजयेत् ।
तदुद्भूतामृतरसं काकचञ्चुपुटे पिबेत् ॥ ८६ ॥

यः काकचञ्चुपुटके सूक्ष्मवायुप्रवेशनम् ।
करोति स्तम्भनं योगी सोऽमरो भवति ध्रुवम्[7] ॥ ८७ ॥

एतद्योगप्रसादेन जीवन्मुक्तस्तु साधकः ।
जराव्याधिमहापीडारहितो भवति क्षणात् ॥ ८८ ॥

---

१. विधिविद्यात् प्रकाशकृत् क० ।
२. नान्यथा क० ।
३. कुण्डलिनी चैतन्या चेन्न महा सुखी क० ।
४. ओष्टाधारं काकतुल्यम् क० ।
५. बद्धराजद्विजो योगी जिह्वां नैव क० ।
६. वद्धवीरासनस्थितः क० ।
७. सूक्ष्मवायुक्रमेणैव सिद्धो भवति योगिराट् ग० ।

अथवा मात्रया कुर्यात् षोडशस्वरसम्पुटम् ।
स्वमन्त्रं प्रणवं वापि जप्त्वा योगी भवेन्नरः ॥ ८९ ॥

[1]अथवा वर्णमालाभिः पुटितं मूलमन्त्रकम् ।
मालासंख्याक्रमेणैव जप्त्वा कालवशं नयेत् ॥ ९० ॥

वदने नोच्चरेद्वर्णं वाञ्छाफलसमृद्धये ।
केवलं जिह्वया जप्यं कामनाफलसिद्धये ॥ ९१ ॥

नाभौ सूर्यो वह्निरूपी ललाटे चन्द्रमास्तथा ।
अग्निशिखास्पर्शनेन गलितं चन्द्रमण्डलम् ॥ ९२ ॥

तत्परामृतधाराभिः दीप्तिमाप्नोति भास्करः ।
सन्तुष्टः पाति सततं पूरकेण च योगिनम् ॥ ९३ ॥

ततः पूरकयोगेन अमृतं श्रावयेत् सुधीः ।
कुर्यात्प्रज्वलितं वह्निं रेचकेन वराग्निना ॥ ९४ ॥

अथ मौनजपं कृत्वा ततः सूक्ष्मानिलं मुदा ।
सहस्रारे गुरुं ध्यात्वा योगी भवति भावकः ॥ ९५ ॥

प्राणवायुस्थिरो यावत् तावन्मृत्युभयं कुतः ।
ऊर्द्ध्वरेता भवेद्यावत्तावत्कालभयं कुतः ॥ ९६ ॥

यावद्विन्दुः स्थितो देहे विधुरूपी सुनिर्मलः ।
सदागलत्सुधाव्याप्तस्तावन्मृत्युभयं कुतः ॥ ९७ ॥

आनन्दभैरव उवाच—

वद कान्ते कुलानन्दरसिके ज्ञानरूपिणि ।
सर्वतेजोऽग्रदेवेन येन सिद्धो भवेन्नरः ॥ ९८ ॥

महामृता खेचरी च सर्वतत्त्वस्वरूपिणी ।
कीदृशी शांकरीविद्या श्रोतुमिच्छामि तत्क्रियाम् ॥ ९९ ॥

---

१. अथवं ग० ।

[1]अध्यात्मविद्यायोगेशी कीदृशी भवितव्यता ।
कीदृशी परमा देवी तत्प्रकारं वदस्व मे ॥ १०० ॥

आनन्दभैरवी उवाच —

यस्य नाथ मनस्थैर्यं महासत्त्वे सुनिर्मले ।
भक्त्या सम्भावनं यत्र विनावलम्बनं प्रभो ॥ १०१ ॥
यस्यामनश्चित्तवशं स्वमिन्द्रियम्,
स्थिरा स्वदृष्टिर्जगदीश्वरीपदे ।
न खेन्दुशोभे च विनावलोकनम्,
वायुःस्थिरो यस्य विना निरोधनम् ॥ १०२ ॥
त एव मुद्रा विचरन्ति खेचरी,
पापाद्विमुक्ताः प्रपिबन्ति वायुम् ।
यथा हि बालस्य च तस्य वेष्टी,
निद्राविहीनाः प्रतियान्ति निद्राम् ॥ १०३ ॥
पथापथज्ञानविवर्जिता ये,
धर्मार्थकामाद्धि विहीनमानसाः ।
विनावलम्बं जगतामधीश्वर,
एषैव मुद्रा विचरन्ति शांकरी ॥ १०४ ॥
ज्ञाने साध्यात्मविद्यार्थं जानाति कुलनायकम् ।
अध्याज्ञाचक्रपद्मस्थं शिवात्मानं सुविद्यया ॥ १०५ ॥
अध्यात्मज्ञानमात्रेण सिद्धो योगी न संशयः ।
षट्चक्रभेदको यो हि अध्यात्मज्ञः स उच्यते ॥ १०६ ॥
अध्यात्मशास्त्रसंकेतमात्मना मण्डितं शिवम् ।
कोटिचन्द्राकृतिं शान्तिं यो जानाति षडम्बुधे ॥ १०७ ॥
स ज्ञानी सैव योगी स्यात् सैव देवो महेश्वरः ।
स मां जानाति हे कान्त विस्मयो नास्ति शंङ्कर ॥ १०८ ॥

---

१. अध्याय ग० ।

मम सर्वात्मकं रूपं जगत्स्थावरजङ्गमम् ।
सृष्टिस्थितिप्रलयगं यो जानाति स योगिराट् ॥ १०९ ॥

अध्यात्मविद्यां विज्ञाप्य[1] नानाशास्त्रं प्रकाशितम् ।
तत्शास्त्रजालयुग्मा[2] ये तेऽध्यात्मज्ञाः कथं नराः ॥ ११० ॥

त्रिदण्डी स्यात्सदाभक्तो[3] वेदाभ्यासपरः कृती ।
वेदादुद्भवशास्त्राणि त्यक्त्वा मां भावयेद्यदि ॥ १११ ॥

वेदाभ्यासं समाकृत्य नानाशास्त्रार्थनिर्णयम् ।
समुत्पन्नां महाशक्तिं समालोक्य भजेद्यतिः ॥ ११२ ॥

सर्वत्र व्यापिकां शक्तिं कामरूपां[4] निराश्रयाम् ।
व्यक्ताव्यक्तां स्थिरपदां वायवीं मां भजेद्यतिः ॥ ११३ ॥

यस्या आनन्दमतुलं [5]ज्ञानं यस्य फलाफलम् ।
योगिनां निश्चयज्ञानमेकमेव न संशयः ॥ ११४ ॥

यस्याः प्रभावमात्रेण[6] तत्त्वचिन्तापरो नरः ।
तामेव परमां देवीं सर्पराजसु कुण्डलीम् ॥ ११५ ॥

तामेव वायवीं शक्तिं सूक्ष्मरूपां स्थिराशयाम् ।
आनन्दरसिकां गौरीं ध्यायेत् श्वासनिवासिनीम् ॥ ११६ ॥

आनन्दं ब्रह्मणो रूपं तत्त्वदेहे[7] व्यवस्थितम् ।
तस्याभिव्यञ्जकं द्रव्यं योगिभिः परिपीयते ॥ ११७ ॥

---

१. संगोप्य क० ।

२. मुग्धा क० ।

३. सदा भोक्ता क० ।

४. कालरूपाम् क० ।

५. ज्ञानात् क० ( ज्ञानाज्ञस्य ) क० ।

६. प्रसाद क० ।

७. तत्त्व क० ।

तद्‌द्रव्यस्थां महादेवीं नीलोत्पलदलप्रभाम् ।
मानवीं परमां देवीमष्टादशभुजैर्युताम् ॥ ११८ ॥
कुण्डलीं चेतनाकान्तिम् चैतन्यां परदेवताम् ।
आनन्दभैरवीं नित्यां घोरहासां[1] भयानकाम् ॥ ११९ ॥
तामेव परमां देवीं सर्ववायुवशंकरीम् ।
मदिरासिन्धुसंम्भूतां मत्तां रौद्रीं वराभयाम् ॥ १२० ॥
योगिनीं योगजननीं ज्ञानिनां मोहिनीसमाम्[2] ।
सर्वभूतसर्वपक्षस्थितिरूपां महोज्ज्वलाम् ॥ १२१ ॥
षट् चक्रभेदिकां सिद्धिं तासां नित्यां मतिस्थिताम् ।
विमलां निर्मलां ध्यात्त्वा योगी मूलाम्बुजे यजेत् ।। १२२ ॥
एतत्पटलपाठेतु पापमुक्तो विभाकरः ।
यथोदूर्ध्वरेता धर्मज्ञो विचरेत् ज्ञानसिद्धये ॥ १२३ ॥
एतत्क्रियादर्शनेन ज्ञानी भवति साधकः ।
ज्ञानादेव हि मोक्षः स्यान्मोक्षः समाधिसाधनः ।। १२४ ॥
यदुद्धरति[3] वायुश्च धारणाशक्तिरेव च ।
[4]तन्मन्त्रं वर्द्धयित्वा प्राणायामं समाचरेत् ॥ १२५ ॥
प्राणायामात् परं नास्ति पापराशिक्षयाय च ।
सर्वपापक्षये याते किन्न सिद्ध्यति भूतले ॥ १२६ ॥
प्राणवायुं महोग्रन्तु महत्तेजोमयं परम् ।
प्राणायामेन जित्वा च योगी मत्तगजं यथा[5] ॥ १२७ ॥

---

१. धीरहासाम् ग० ।
२. मोहिनीसुमाम् क० ।
३. यद् यद्धर्धति क० ।
४. तत्तन्मन्त्रम् ग० ।
५. तथा क० ।

प्राणायामं विना नाथ कुत्र सिद्धो भवेन्नरः ।
सर्वसिद्धिक्रियासारं प्राणायामं परं स्मृतम् ॥ १२८ ॥
प्राणायामं त्रिवेणीस्थं यः करोति मुहुर्मुहुः ।
तस्याष्टाङ्गसमृद्धिः स्याद्योगिनां योगवल्लभः ॥ १२९ ॥

इति श्रीरुद्रयामले महातन्त्रे उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये पाशवकल्पे षट्चक्रसारसंकेते सिद्धमन्त्र प्रकरणे प्राणायामोल्लासे भैरवीभैरव संवादे [1]सप्तविंशः पटलः



१. सप्तविंशति क० ।

# अष्टाविंशः पटलः

आनन्दभैरवी उवाच—

शृणु प्राणेश सकलं प्राणायामनिरूपणम् ।
प्राणायामे जपं ध्यानं तत्त्वयुक्तं वदामि तत् ॥ १ ॥
[1]प्रकारयेयमुल्लासं प्राणायामेषु शोभितम् ।
देवताविधिविष्णवीशास्ते तु मध्यममध्यमाः ॥ २ ॥
रजस्तमोगुणं नाथ सत्त्वे संस्थाप्य यत्नतः ।
कामक्रोधादिकं त्यक्त्वा योगी भवति योगवित् ॥ ३ ॥
रजोगुणं नृपाणान्तु तमोगुणमतीव च ।
अधिकन्तु पशूनां हि साधूनां सत्त्वमेव च ॥ ४ ॥
सत्त्वं विष्णुं वेदरूपं[2] निर्मलं द्वैतवर्ज्जितम् ।
आत्मोपलब्धिविषयं त्रिमूर्त्तिमूलमाश्रयेत् ॥ ५ ॥
सत्त्वगुणाश्रयादेव निष्पापी सर्वसिद्धिभाक् ।
जितेन्द्रियो भवेत् शीघ्रं ब्रह्मचारिव्रतेन च ॥ ६ ॥
प्राणवायुवशेनापि वशीभूताश्चराचराः ।
तस्यैव [3]कारणे नाथ जपं ध्यानं समाचरेत् ॥ ७ ॥
वक्ष्यामि तत्प्रकारं जपध्यानं विधिद्वयम् ।
एतत्करणमात्रेण योगी स्यान्नात्र संशयः ॥ ८ ॥
जपं च त्रिविधं प्रोक्तं व्यक्ताव्यक्तातिसूक्ष्मगम् ।
व्यक्तं वाचिकमुपांशुमव्यक्तं[4] सूक्ष्ममानसम् ॥ ९ ॥

---

१. प्रकारत्रयमुल्लासम् क० ।

२. विष्णुं वेदरूपम् क० ।

३. करणे क० ।

४. स व्यक्तम् ग० ।

तत्र ध्यानं प्रवक्ष्यामि प्रकारमेकविंशतिम् ।
ध्यानेन जपसिद्धिः स्यात् जपात् सिद्धिर्न संशयः ॥ १० ॥
आदौ विद्यामहादेवीध्यानं वक्ष्यामि शंकर ।
एषा देवी कुण्डलिनी [1]यस्या मूलाम्बुजे मनः ॥ ११ ॥
मनः करोति सर्वाणि धर्मकर्माणि सर्वदा ।
यत्र गच्छति स श्रीमान् तत्र वायुश्च गच्छति ॥ १२ ॥
अतो मूले समारोप्य मानसं वायुरूपिणम् ।
द्वादशाङ्गुलकं बाह्ये नासाग्रे चावधारयेत् ॥ १३ ॥
मनःस्थं रूपमाकल्प्य मनोधर्मं मुहुर्मुहुः ।
मनस्तत् [2]सदृशं याति गतिर्यत्र[3] सदा भवेत् ॥ १४ ॥
मनोविकाररूपन्तु एकमेव न संशयः ।
अज्ञानिनां हि देवेश ब्रह्मणो रूपकल्पना ॥ १५ ॥
अव्यक्तं ब्रह्मरूपं हि तच्च देहे व्यवस्थितम् ।
धर्मकर्मविनिर्मुक्तं मनोगम्यं भजेद्यतिः ॥ १६ ॥
पद्मं चतुर्दलं मूले स्वर्णवर्णं मनोहरम् ।
तत्कर्णिकामध्यदेशे स्वयंभूवेष्टितां भजेत् ॥ १७ ॥
कोटिसूर्यप्रतीकाशां सुषुम्नारन्ध्रगामिनीम्[4] ।
ऊर्द्ध्वं गलत्सुधाधारामण्डितां कुण्डलीं भजेत् ॥ १८ ॥
स्वयम्भूलिङ्गं परमं ज्ञानं [5]चिरविवर्द्धनम् ।
सूक्ष्मातिसूक्ष्ममाकाशं कुण्डलीजडितं भजेत् ॥ १९ ॥
पूर्वोक्तयोगपटलं तत्र मूले विभावयेत् ।
कुण्डलीध्यानमात्रेण षट्चक्रभेदको भवेत् ॥ २० ॥

---

१. अस्या क० ।

२. सदृशम् ग० ।

३. मतिर्यत्र ग० ।

४. वज्रगामिनीम् ग० ।

५. ज्ञानाङ्कुर क० ।

ध्यायेद्देवीं कुण्डलिनीं परापरगुरुप्रियाम् ।
[1]आनन्दां भुवि मध्यस्थां योगिनीं योगमातरम् ॥ २१ ॥
कोटिविद्युल्लताभासां सूक्ष्मातिसूक्ष्मवर्त्मगाम्[2] ।
ऊर्द्ध्वमार्गव्याचलन्तीं प्रथमारुणविग्रहाम् ॥ २२ ॥
प्रथमोद्गमने कौलीं[3] ज्ञानमार्गप्रकाशिकाम् ।
[4]प्रति प्रयाणे प्रत्यक्षाममृतव्याप्तविग्रहाम् ॥ २३ ॥
धर्मोदयां भानुमतीं जगत्स्थावरजङ्गमाम् ।
सर्वान्तस्थां निर्विकल्पाञ्चैतन्यानन्दनिर्मलाम् ॥ २४ ॥
आकाशवाहिनीं नित्यां [5]सर्ववर्णस्वरूपिणीम् ।
महाकुण्डलिनीं ध्येयां ब्रह्मविष्णुशिवादिभिः ॥ २५ ॥
प्रणवान्तःस्थितां शुद्धां शुद्धज्ञानाश्रयां शिवाम् ।
कुलकुण्डलिनीं सिद्धिं चन्द्रमण्डलभेदिनीम् ॥ २६ ॥
मूलाम्भोजस्थितामाद्यां जगद्योनिं जगत्प्रियाम् ।
स्वाधिष्ठानादिपद्मस्थां सर्वशक्तिमयीं पराम् ॥ २७ ॥
आत्मविद्यां शिवानन्दां पीठस्थामतिसुन्दरीम् ।
सर्पाकृतिं रक्तवर्णां [6]सर्वरूपविमोहिनीम् ॥ २८ ॥
कामिनीं कामरूपस्थां [7]मातृकामात्मदायिनीम् ।
कुलमार्गानन्दमयीं कालीं कुण्डलिनीं भजेत् ॥ २९ ॥
इति ध्यात्वा मूलपद्मे निर्मले योगसाधने ।
धर्मोदये ज्ञानरूपी साधयेत् परकुण्डलीम् ॥ ३० ॥

---

१. आनन्दार्णव क० ।
२. सूक्ष्मवर्णगाम् क० ।
३. प्रथमोद्गमने कौला ग० ।
४. प्रति प्रमाणे प्रत्यक्षाममृतव्याप्तविग्रहाम् ग० ।
५. निर्विवर्णं ग० ।
६. सर्पं ग० ।
७. मातृकामयंदायिनीम् क० ।

कुण्डलीभावनादेव खेचराद्यष्टसिद्धिभाक् ।
ईश्वरत्वमवाप्नोति साधको भूपतिर्भवेत् ॥ ३१ ॥
योगाभ्यासे भावसिद्धौ स्मृतो वायुर्महोदयः ।
प्राणानामादुर्निवार्यो यत्नेन तं प्रचालयेत् ॥ ३२ ॥
प्रतिक्षणं समाकृष्य मूलपद्मस्थकुण्डलीम् ।
तदा प्राणमहावायुर्वशो भवति निश्चितम् ॥ ३३ ॥
ये देवाश्चैव ब्रह्माण्डे क्षेत्रे पीठे सुतीर्थके ।
शिलायां[1]शून्यगे नाथ सिद्धाः स्युः प्राणवायुना ॥ ३४ ॥
ब्रह्माण्डे यानि संसन्ति तानि सन्ति कलेवरे ।
ते सर्वे प्राणसंलग्नाः प्राणातीतं निरञ्जनम् ॥ ३५ ॥
यावत्प्राणः स्थितो देहे तावन्मृत्युभयं कुतः ।
गते प्राणे समायान्ति देवताश्चेतनास्थिताः ॥ ३६ ॥
सर्वेषां मूलभूता सा कुण्डली भूतदेवता ।
वायुरूपा पाति सर्वमानन्दचेतनामयी ॥ ३७ ॥
जगतां चेतनारूपी कुण्डली योगदेवता ।
आत्ममनःसमायुक्ता ददाति मोक्षमेव सा ॥ ३८ ॥
अतस्तां भावयेन्मन्त्री भावज्ञानप्रसिद्धये ।
भवानीं भोगमोक्षस्थां यदि योगमिहेच्छसि ॥ ३९ ॥
वायुरोधनकाले च कुण्डली चेतनामयी[3] ।
ब्रह्मरन्ध्रावधि ध्येया योगिनं पाति कामिनी ॥ ४० ॥
वायुरूपां[4] परां देवीं नित्यां योगेश्वरीं जयाम् ।
निर्विकल्पां त्रिकोणस्थां[5] सदाध्यायेत् कुलेश्वरीम् ॥ ४१ ॥

---

१. मृण्मये क० ।
२. परदेवता क० ।
३. चेतनमुखी ग० ।
४. जयारूपाम् श० ।
५. त्रिलोकस्थाम् क० ।

अनन्तां कोटिसूर्याभां ब्रह्मविष्णुशिवात्मिकाम् ।
अनन्तज्ञाननिलयां यां भजन्ति मुमुक्षवः ॥ ४२ ॥
अज्ञानतिमिरे घोरे सा लग्ना मूढचेतसि ।
सुप्ता सर्पासना मौला पाति साधकमीश्वरी ॥ ४३ ॥
ईश्वरीं सर्वभूतानां ज्ञानाज्ञानप्रकाशिनीम् ।
धर्माधर्मफलव्याप्तां करुणामयविग्रहाम् ॥ ४४ ॥
नित्यां ध्यायन्ति योगेन्द्राः काञ्चनाभाः कलिस्थिताः ।
कुलकुण्डलिनीं देवीं चैतन्यानन्दनिर्भराम् ॥ ४५ ॥
वकारादिमान्तवर्णां मालाविद्युल्लतावृताम्[1] ।
हेमालङ्कारभूषाङ्गीं[2] ये मां संभावयन्ति ते ॥ ४६ ॥
ये वै[3] कुण्डलिनीं विद्यां कुलमार्गप्रकाशिनीम् ।
ध्यायन्ति[4] वर्षसंयुक्तास्ते मुक्ता नात्र संशयः ॥ ४७ ॥
ये मुक्ता[5] पापराशेस्तु धर्मज्ञानसुमानसाः ।
तेऽवश्यं ध्यानमाकुर्वन् स्तुवन्ति [6]कुण्डलीं पराम् ॥ ४८ ॥
कुलकुण्डलिनीध्यानं भोगमोक्षप्रदायकम् ।
यः करोति महायोगी भूतले नात्र संशयः ॥ ४९ ॥
त्रिविधं कुण्डलीध्यानं दिव्यवीरपशुक्रमम् ।
त्रिविधं कुण्डलीध्यानं दिव्यवीरपशुक्रमम् ।
पशुभावादियोगेन सिद्धो भवति योगिराट् ॥ ५० ॥
दिव्यध्यानं प्रवक्ष्यामि सामान्यानन्तरं प्रभो ।
आदौ सामान्यमाकृत्य दिव्यादीन् कारयेत्ततः ॥ ५१ ॥

---

१. च्युताम् ग० ।
२. मन्त्याम् क० ।
३. ये कुलीनाः कुलाधिस्थाम् क० ।
४. हर्षं क० ।
५. भक्ताः क० ।
६. कुलकुण्डलीम् क० ।

[1]कोटिचन्द्रप्रतीकाशां तेजोविम्बां[2] निराकुलाम् ।
[3]ज्वालामालासहस्राढ्यां कालानलशतोपमाम् ॥ ५२ ॥
दंष्ट्राकरालदुर्धर्षां जटामण्डलमण्डिताम् ।
घोररूपां महारौद्रीं सहस्रकोटिचञ्चलाम् ॥ ५३ ॥
कोटिचन्द्रसमस्निग्धां सर्वत्रस्थां भयानकाम् ।
अनन्तसृष्टिसंहारपालनोन्मत्तमानसाम् ॥ ५४ ॥
सर्वव्यापकरूपाद्यामादिनीलाकलेवराम् ।
अनन्तसृष्टिनिलयां ध्यायन्ति तां मुमुक्षवः ॥ ५५ ॥
वीरध्यानं प्रवक्ष्यामि यत्कृत्वा वीरवल्लभः ।
वराणां वल्लभो यो हि मुक्तो[4] भोगी स उच्यते ॥ ५६ ॥
[5]वीराचारे सत्त्वगुणं निर्मलं दिव्यमुत्तमम् ।
सम्प्राप्य च महावीरो योगी भवति तत्क्षणात् ॥ ५७ ॥
वीराचारं विना नाथ दिव्याचारं न लभ्यते ।
ततो वीराचारधर्मं कृत्वा दिव्यं समाचरेत् ॥ ५८ ॥
वीराचारं कोटिफलं वारैकजपसाधनम् ।
कोटिकोटिजन्मपापदुःखनाशं स भक्तकः ॥ ५९ ॥
कुलाचारं समाचारं वीराचारं महाफलम् ।
कृत्वा सिद्धिश्च[6] वै ध्यानं कुलध्यानं[7] मदीयकम् ॥ ६० ॥

---

१. सूयं क० ।
२. विध्याम्र ग० ।
३. प्राणायाम्र ग० ।
४. मुक्तिभागी क० ।
५. यदि वीराचारभावं करोति भूभृतां पतिः ।
सयोगी भोगवक्ता स्यादानन्द पूर्णं भावकः ॥
मुधि दाता विधाता विधाता वेदवाचकैः ।
वेदवक्ता महारुद्रो वीराचारेण संभवेत् ॥ क० अधिकः ।
६. सिद्धश्च क० ।
७. यद यद् क० ।

कुलकुण्डलिनीं देवीं मां ध्यात्वा पूजयन्ति ये ।
मूलपङ्के[1] महावीरो ध्यात्वा भवति योगिराट् ॥ ६१ ॥
कालीं कौलां कुलेशीं कलकल कलिजध्यानकालानलाक्षीम्,
कल्योल्कां कालकवलां किलिकिलिकलिकां केलिलावण्यलीलाम्।
सूक्ष्माख्यां संक्षयाख्यां क्षयकुलकमले सूक्ष्मतेजोमयीन्ता,
माद्यन्तस्थां भजन्ति प्रणतगतजनाः[2] सुन्दरीं चारुवर्णाम् ॥६२॥
अष्टादशभुजैर्युक्तां नीलेन्दीवरलोचनाम् ।
मदिरासागरोत्पन्नां चन्द्रसूर्याग्निरूपिणीम् ॥ ६३ ॥
चन्द्रसूर्याग्निमध्यस्थां सुन्दरीं वरदायिनीम् ।
कामिनीं कोटिकन्दर्पदर्पान्तकपतिप्रियाम् ॥ ६४ ॥
आनन्दभैरवाक्रान्तामानन्दभैरवीं पराम् ।
भोगिनीं कोटिशीतांशुगलद्गात्रमनोहराम् ॥ ६५ ॥
कोटिविद्युल्लताकारां सदसद्व्यक्तिवर्जिताम् ।
ज्ञानचैतन्यनिरतां तां वीरा भावयन्ति हि ॥ ६६ ॥
अस्या ध्यानप्रसादेन त्वं तुष्टो भैरवः स्वयम् ।
अहं च तुष्टा संसारे सर्वे तुष्टा न संशयः ॥ ६७ ॥
प्राणायामान् स करोति साधकः स्थिरमानसः ।
ध्यात्वा देवीं मूलपङ्के वीरो योगमवाप्नुयात् ॥ ६८ ॥
वीरभावं सूक्ष्मवायुधारणेन महेश्वर ।
साधको भुवि जानाति स्वमृत्युं जन्मसंकटम् ॥ ६९ ॥
मासादाकर्षणीसिद्धिर्वाक्सिद्धिश्चद्विमासतः ।
मासत्रयेण[4] संयोगाज्जायते देववल्लभः ॥ ७० ॥

---

१. मूलपङ्के महावीरां भैरवीं ते वशेन्द्रियाम् ग० ।

२. जलाम् ग० ।

३. भक्ति ग० ।

४. संयोगी ग० ।

एवञ्चतुर्थये मासि भवेद्दिक्पालगोचरः ।
पञ्चमे पञ्चवाणः स्यात् षष्ठे रुद्रो न संशयः ॥ ७१ ॥
वीरभावस्य माहात्म्यं कोटिजन्मफलेन च ।
जानाति साधकश्रेष्ठो [1]देवीभक्तः स योगिराट् ॥ ७२ ॥
वीराचारं महाधर्मं चित्तस्थैर्यस्य कारणम् ।
यस्य प्रसादमात्रेण दिव्यभावाश्रितो भवेत् ॥ ७३ ॥
स्वयं रुद्रो महायोगी महाविष्णुः कृपानिधिः ।
महावीरः स एवात्मा[2] मोक्षभोगी न संशयः ॥ ७४ ॥
अथ नाथ महावीर भावस्नानं कुलाश्रयम् ।
यत्कृत्वा शुचिरेव शुचिश्चेत् किं न सिद्ध्यति ॥ ७५ ॥
कुलस्नानं महास्नानं योगिनामतिदुर्लभम् ।
कृत्वा जितेन्द्रियो वीरः कुलध्यानं समाचरेत् ॥ ७६ ॥
स्नानन्तु त्रिविधं प्रोक्तं मज्जनं गात्रमार्जनम् ।
[3]मन्त्रज्ञानादिभिः स्नानमुत्तमं परिकीर्तितम् ॥ ७७ ॥
तत्प्रकारं शृणु प्राणवल्लभ प्रियकारक ।
स्नानमात्रेण मुक्तः स्यात् पापशैलादनन्तगः ॥ ७८ ॥
[4]स्नानञ्च विमले तीर्थे हृदयाम्भोजपुष्करे ।
बिन्दुतीर्थेऽथवा स्नायात् सर्वजन्माघमुक्तये ॥ ७९ ॥
इडासुषुम्ने शिवतीर्थकेऽस्मिन्
ज्ञानाम्बुपूर्णे वहतः शरीरे ।
ब्रह्मादिभिः[5] स्नाति तयोस्तु नीरे
किन्तस्य गाङ्गैरपि पुष्करैर्वा ॥ ८० ॥

---

१. देव ग० ।
२. सतु वात्मा ग० ।
३. मन्त्रजलादिभिः क० ।
४. स्नायाच्च क० ।
५. ब्रह्माबुभिः क० ।

इडामलस्थान[1]निवासिनी या
सूर्यात्मिकायां यमुना प्रवाहिका[2] ।
तथा सुषुम्ना मलदेशगामिनी[3]
सरस्वती मज्जति[4] भक्षणार्थकम् ॥ ८१ ॥

मनोगतस्नानपरो मनुष्यो
मन्त्रक्रियायोगविशिष्टतत्त्ववित् ।
महीस्थतीर्थे विमले जले मुदा
मूलाम्बुजे स्नाति स मुक्तिभाग् भवेत् ॥ ८२ ॥

सर्वादितीर्थे सुरतीर्थपावनी
गङ्गा महासत्त्वविनिर्गता सती ।
करोति पापक्षयमेव मुक्तिम्
ददाति साक्षादतुलार्थपुण्यदा ॥ ८३ ॥

सर्गस्थं यावदातीर्थं स्वाधिष्ठाने सुपङ्कजे ।
मनो निधाय योगेन्द्रः स्नाति गङ्गाजले तथा[5] ॥ ८४ ॥

मणिपूरे देवतीर्थे[6] पञ्चकुण्डं सरोवरम् ।
एतत् श्रीकामनातीर्थं स्नाति यो मुक्तिमिच्छति ॥ ८५ ॥

अनाहते सर्वतीर्थं सूर्यमण्डलमध्यगम् ।
विभवः[7] सर्वतीर्थानि स्नाति यो मुक्तिमिच्छति ॥ ८६ ॥

---

१. इडामलस्थाम्बुनि नाथ कन्या क० ।

२. प्रकाशिका क० ।

३. वासिनी क० ।

४. रक्षति मज्जनात्मकम् क० ।

५. यथा क० ।

६. देवतीर्थम् ग० ।

७. विभाव्य क० ।

विशुद्धाख्ये महापद्मे अष्टतीर्थं समुद्भवम्[1] ।
कैवल्यमुक्तिदं ध्यात्वा स्नाति वीरो विमुक्तये ॥ ८७ ॥
मानसं विन्दुतीर्थञ्च कालीकुण्डं [2]कलात्मकम् ।
[3]आज्ञाचक्रे सदा ध्यात्वा स्नाति निर्वाणसिद्धये ॥ ८८ ॥
एतत् कुले प्रियस्नानं कुर्वन्ति योगिनो मुदा ।
अतो वीराः सत्त्वयुक्ताः सर्वसिद्धियुताः सुराः ॥ ८९ ॥
नाना पापं सदा कृत्वा ब्रह्महत्याविनिर्गतम् ।
कृत्वा स्नानं महातीर्थे सिद्धाः स्युरणिमादिगाः ॥ ९० ॥
स्नानमात्रेण निष्पापी शक्तः स्याद्वायुसङ्ग्रहे ।
तीर्थानां दर्शनं येषां शक्तो योगी भवेद् ध्रुवम् ॥ ९१ ॥
अथ सन्ध्यां महातीर्थे कुलनिष्ठः समाचरेत् ।
कुलरूपां योगविद्यां योगयोगाद् यतीश्वरः ॥ ९२ ॥
शिवशक्तौ समायोगो यस्मिन् काले प्रजायते ।
सा सन्ध्या कुलनिष्ठानां समाधिस्थे प्रजायते ॥ ९३ ॥
शिवं सूर्यं हृदि ध्यात्वा भालशक्तीन्दुसङ्गमम् ।
सा सन्ध्या कुलनिष्ठानां समाधिस्थे प्रजायते ॥ ९४ ॥
अथवेन्दुं[4] शिवं ध्यात्वा हृत्सूर्यशक्तिसङ्गमम् ।
संयोगविद्या सा सन्ध्या समाधिस्थे प्रजायते ॥ ९५ ॥
[5]इति सन्ध्या च कथिता ज्ञानरूपा जगन्मयी ।
सा नित्या वायवी शक्तिः छिन्नभिन्ना विनाशनात् ॥ ९६ ॥

---

१. हस्ततीर्थमधूद्भवम् क० ।

२. कलाधरम् क० ।

३. आज्ञाचक्रम् क० ।

४. अथ विन्दुम् क० ।

५. किंवा देहस्थिता शक्तिर्वायवी सुशिवान्विता ।
नासाग्रसन्धिनिलया सा सन्ध्या वायुसङ्गमा ॥
किं वा बाह्यगता शक्तिः सुन्दरि शिवसङ्गमम् ।
सा सन्ध्या तत्त्वनिष्ठानां सामाधिस्थ प्रजायते ॥ क० ।

[1]तत्वतीर्थे महादेव तर्पणं यः करोति हि ।
त्रैलोक्यं तर्पितं तेन तत्प्रकारं शृणु प्रभो ॥ ९७ ॥
मूलाम्भोजे कुण्डलिनीं चन्द्रसूर्याग्निरूपिणीम् ।
समुत्थाप्य कुण्डलिनीं परं त्रिन्दुं निवेश्य च ॥ ९८ ॥
तदुद्भवामृतेनेह तर्पयेद्देहदेवताम् ।
कुलेश्वरीमादिविद्यां स सिद्धो भवति ध्रुवम् ॥ ९९ ॥
चन्द्रसूर्यमहावह्निसम्भूतामृतधारया ।
तर्पयेत् कौलिनीं नित्याममृताक्तां विभावयेत् ॥ १०० ॥
एतत्परपदा काली [2]स्त्रीविद्यादिप्रतर्पणम् ।
कृत्वा योगी भवेदेव सत्यं सत्यं कुलेश्वर ॥ १०१ ॥
मूले पात्रं चान्द्रमसं ललाटेन्द्वमृते न च ।
सम्पूर्य ज्ञानमार्गेण तर्पयेत्तेन खेचरीम् ॥ १०२ ॥
सुधासिन्धोर्मध्यदेशे कुलकन्यां प्रतर्पयेत् ।
मदिरामृतधाराभिः सिद्धो भवति योगिराट् ॥ १०३ ॥
तत्र तीर्थे महाज्ञानी ध्यानं कुर्यात् [3]प्रयत्नतः ।
[4]तद्गर्भमभ्यसेन्नित्यं ध्यानमेतद्धि योगिनाम् ॥ १०४ ॥
स्वीयां कन्यां भोजयेद्वै परकीयामथापि वा ।
परितोषाय सर्वेषां युवतीं वा प्रतोषयेत् ॥ १०५ ॥
स्तोत्रेणानेन[5] दिव्येन तोषयेत् शङ्कर प्रभो ।
सहस्रनाम्ना कौमार्याः स्तुत्वा देवीं प्रतोषयेत् ॥ १०६ ॥

---

१. तत्तु तीर्थे क० ।
२. श्रीविद्या क० ।
३. दहरनिशम् क० ।
४. प्राणायामपरो भूत्वा एतत्सर्वं विभावयेत् ।
किरणस्थं तदग्निस्थं चन्द्रभास्करमध्यगम् ॥
महाशून्ये त्वयं कृत्वा पूर्णः तिष्ठति योगिराट् ।
निरालम्बे पदे शून्ये यरोज उपद्यते ॥ क० ।
५. पूर्वोक्तस्तोत्रसारेण कवचाङ्गेन शङ्कर क० ।

यः करोति पूर्णयज्ञं पञ्चाङ्गं जपकर्मणि ।
पुरश्चरणकार्यं च प्राणायामेन[1] कारयेत् ॥ १०७ ॥
प्राणवायुः स्थिरो गेहे पूजाग्रहणहेतुना ।
येऽन्तरस्थं न कुर्वन्ति तेषां सिद्धिः कुतःस्थिता ॥ १०८ ॥
अतोऽन्तर्यजनेनैव[2] कुण्डलीतुष्टमानसा ।
यदि तुष्टा महादेवी तदैव सिद्धिभाक् पुमान् ॥ १०९ ॥
अभिषिञ्च्य जगद्धात्रीं प्रत्यक्षपरदेवताम् ।
मूलाम्भोजात्सहस्रारे पूजयेद्बिन्दुधारया ॥ ११० ॥
गलच्चन्द्रामृतोल्लासिधारयासिञ्च्य[3] पार्वतीम् ।
पूजयेत् परया भक्त्या मूलमन्त्रं स्मरन् सुधीः ॥ १११ ॥
अर्चयन्विषयैः पुष्पैस्तत्क्षणात्तन्मयो भवेत् ।
न्यासस्तन्मयताबुद्धिः सोऽहं भावेन पूजयेत् ॥ ११२ ॥
मन्त्राक्षराणि चित्शक्तौ प्रोतानि परिभावयेत् ।
तामेव[4] परमे व्योम्नि परमानन्दसंस्थिते[5] ॥ ११३ ॥
दर्शयत्यात्मसद्भावं[6] पूजाहोमादिभिर्विना[7] ।
तदन्तर्यजनं ज्ञेयं योगिनां शङ्कर प्रभो ॥ ११४ ॥
अन्तरात्मा महात्मा च परमात्मा स उच्यते ।
तस्य स्मरणमात्रेण साधुयोगी भवेन्नरः ॥ ११५ ॥
अमायमनहंकारमरागममदं तथा ।
अमोहकमदम्भञ्च [8]अनिन्दाक्षोभकौ तथा ॥ ११६ ॥

---

१. प्राणयामम् ग० ।
२. जलेनापि क० ।
३. ल्लास ग० ।
४. भासेव ग० ।
५. दर्शयेत्यात्म ग० ।
७. ध्यानपूजादिभिर्विना क० ।
८. अद्वेष्टा क० ।

अमात्सर्यमलोभश्च दशपुष्पाणि योगिनाम् ।
अहिंसा परमं पुष्पं पुष्पमिन्द्रियनिग्रहः ॥ ११७ ॥
दया पुष्पं क्षमा पुष्पं ज्ञानपुष्पं च पञ्चमम् ।
इत्यष्टसप्तभिःपुष्पैः पूजयेत् परदेवताम् ॥ ११८ ॥
अथ होमविधिं वक्ष्ये पुरश्चरणसिद्धये ।
सङ्केतभाषया नाथ कथयामि शृणुष्व तत् ॥ ११९ ॥
आत्मानमपरिच्छिन्नं विभाव्य सूक्ष्मवत् स्थितः ।
आत्मत्रयस्वरूपंतु चित्कुण्डं चतुरस्रकम् ॥ १२० ॥
आनन्दमेखलायुक्तं नाभिस्थज्ञानवह्निषु ।
अर्द्धमात्राकृतिर्योनि भूषितं जुहुयात् सुधीः ॥ १२१ ॥
इतिमन्त्रेण तद्वह्नौ सोऽहंभावेन होमयेत् ।
बाह्यनारीविधिं त्यक्त्वा मूलान्तेन स्वतेजसम् ॥ १२२ ॥
नाभिचैतन्यरूपाग्नौ हविषा मनसा स्रुचा ।
ज्ञानप्रदीपिते नित्यमक्षवृत्तिर्जुहोम्यहम् ॥ १२३ ॥
इति प्रथममाहुत्या मूलान्ते संचरेत्[1] क्रियाम् ।
द्वितीयाहुतदानेन होमं कृत्वा भवेद्वशी ॥ १२४ ॥
धर्माधर्मप्रदीप्ते[2] च आत्माग्नौ मनसा स्रुचा ।
सुषुम्ना वर्त्मना नित्यमक्षवृत्तिं जुहोम्यहम् ॥ १२५ ॥
[3]स्वाहान्तं मन्त्रमुच्चार्य आद्ये[4] मूलं नियोज्य च ।
जुहुयादेकभावेन मूलाम्भोरुहमण्डले ॥ १२६ ॥

---

१. मन्त्रमुच्चरेत् क० ।

२. हविर्दीप्तम् क० ।

३. द्वितीया हुतिमेतत्तु तृतीया हुतिमाश्रुणु ।
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा ॥
धर्माधर्मकलास्नेहपूर्णमग्नौ जुहोम्यहम् । क० ।

४. मूलान्ते सञ्चरेत् क्रियाम् क० ।

चतुर्थे पूर्णहवने एतन्मन्त्रेण कारयेत् ।
एतन्मन्त्रचतुर्थन्तु पूर्णविद्याफलप्रदम् ॥ १२७ ॥
अन्तर्निरन्तरनिरन्धनमेधमाने
मायान्धकारपरिपन्थिनि संविदग्नौ ।
कस्मिंश्चिदद्भुतमरीचिविकाशभूमौ
विश्वं जुहोमि वसुधादिशिवावसानम् ॥ १२८ ॥
इत्यन्तर्यजनं कृत्वा साक्षाद् ब्रह्ममयो भवेत् ।
न तस्य पुण्यपापानि जीवन्मुक्तो भवेद्ध्रुवम् ॥ १२९ ॥
ज्ञानिनां योगिनामेव अन्तर्यागो हि सिद्धिदः ।
अथान्तः पञ्चमकारयजनं शृणु शङ्कर ॥ १३० ॥
अन्तर्यजनकाले तु दृढभावे न भावयेत् ।
त्वां मां नाथैकतां ध्यात्वा दिवारात्र्यैकता यथा ॥ १३१ ॥
सुराशक्तिः शिवो मांसं तद्भक्तो भैरवः स्वयम् ।
तयोरैक्यसमुत्पन्न आनन्दो मोक्षनिर्णयः ॥ १३२ ॥
आनन्दं ब्रह्मकिरणं देहमध्ये व्यवस्थितम् ।
तदभिव्यञ्जकैर्द्रव्यैः कुर्याद् ब्रह्मादितर्पणम्[1] ॥ १३३ ॥
आनन्दं जगतां सारं ब्रह्मरूपं तनुस्थितम् ।
तदभिव्यञ्जकं द्रव्यं योगिभिस्तैः प्रपूजयेत्[2] ॥ १३४ ॥
[3]लिङ्गत्रयं च षट्पद्माधारमध्येन्दुभेदकः[4] ।
पीठस्थानानि चागत्य महापद्मवनं व्रजेत् ॥ १३५ ॥
मूलाम्भोजो ब्रह्मरन्ध्रं चालयेदसुचालयेत्[5] ।
गत्वा पुनः पुनस्तत्र चिच्चन्द्रः परमोदयः ॥ १३६ ॥

---

१. ब्रह्मामृतापर्णम् क० ।

२. प्रपूज्यते क० ।

३. लिङ्गत्रयज्ञः क० ।

४. भेदनः क० ।

५. दसुचालयेत् क० ।

चिच्चन्द्रः कुण्डलीशक्तिः सामरस्यमहोदयः ।
व्योमपङ्कजनिस्यन्दसुधापानरतो नरः ॥ १३७ ॥
मधुपानमिदं नाथ बाह्ये चाभ्यन्तरे सताम् ।
इतरन्मद्यपानन्तु योगिनां योगघातनात् ॥ १३८ ॥
इतरन्तु महापानं भ्रान्तिमिथ्याविवर्जितः ।
महावीरः संकरोति योगाष्टाङ्गसमृद्धये ॥ १३९ ॥
पुण्यापुण्यपशुं हत्वा ज्ञानखङ्गेन[1] योगवित् ।
[2]परशिवेन यश्चित्तं नियोजयति साधकः ॥ १४० ॥
[3]मांसाशी स भवेदेव इतरे [4]प्राणिघातकाः ।
शरीरस्थे महावह्नौ दग्ध मत्स्यानि पूजयेत् ॥ १४१ ॥
शरीरस्थजलस्थानि इतराण्यशुभानि च ।
महीगतस्निग्धसौम्योद्भवमुद्रामहाबलाः ॥ १४२ ॥
तत्सर्वं ब्रह्मकिरणे आरोप्य तर्पयेत्[5] सुधीः ।
तत्र मुद्राभोजनानि[6] आनन्दवर्द्धकानि च ॥ १४३ ॥
इतराणि च भोगार्थे एतद्धि योगिनां परम् ।
परशक्त्यात्ममिथुनसंयोगानन्दनिर्भराः ॥ १४४ ॥
मुक्तास्ते मैथुनं तत्स्यादितरे स्त्रीनिषेवकाः ।
एतत्पञ्चमकारेण पूजयेत् परनायिकाम् ॥ १४५ ॥

---

१. ज्ञानलम्यो क० ।

२. परे शिवे त्रयं चित्तं मांसाशी स महीतले क० ।

३. बाह्यस्थानं पशूनान्तु मासं वीरेन्द्रभोजनम् ।
यदि तद्बुद्धिमाप्नोति तदा तत्कर्ममाचरेत्
मानसेन्द्रियगणं संयम्यात्मनि योजयेत् क० ।

४. प्राण ग० ।

५. तंर्पयेत् क० ।

६. एतत्रमुद्रा क० ।

पुरश्चरणगूढार्थसारमन्त्रप्रपूजनम् ।
[1]एतद्योगं सदाभ्यसेद् निद्रालस्यविवर्जितः ॥ १४६ ॥

प्राणवायुरयं कुर्यात् [2]कालकारणवारणात् ।
एतत्क्रियां प्राणवशे यः करोति निरन्तरम् ॥ १४७ ॥

तस्य योगसमृद्धिः स्यात् कालसिद्धिमवाप्नुयात् ॥ १४८ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये सूक्ष्मयोग-
सिद्ध्यधिकरणे पाशवकल्पे षट्चक्रसारसङ्केते
सिद्धिमन्त्रप्रकरणे भैरवभैरवीसंवादे
षड्विंशः[3] पटलः ॥



१. एतद्योगसदाभ्यासात् ग० ।

२. वारणकारणात् ग० ।

३. अष्टाविंशः पटलः क० ।

# सप्तविंशः पटलः

आनन्दभैरव उवाच—

विविधानि त्वयोक्तानि योगशास्त्राणि भैरवि ।
सर्वरूपत्वमेवास्या[1] मम कान्ते प्रियंवदे ॥ १ ॥
योगाष्टाङ्गफलान्येव सर्वतत्त्वजलानि[2] च ।
इदानीं श्रोतुमिच्छामि शक्तितत्त्वक्रमेण[3] तु ॥ २ ॥
पूर्वोक्तप्राणवायूनां हरणं वायुधारणम् ।
प्रत्याहारं धारणाख्यं ध्यानं [4]समाधिमावद ॥ ३ ॥

आनन्दभैरवी उवाच—

शृणु लोकेश वक्ष्यामि प्राणायामफलाफलम् ।
न गृह्णीयाद्विस्तरन्तु [5]स्वल्पं नैव तु कुम्भयेत् ॥ ४ ॥
शनैः शनैः प्रकर्त्तव्यं संघातश्च[6] विवर्जयेत् ।
पूरकाह्लादसिद्धेश्च[7] प्राणायामशतं शतम् ॥ ५ ॥
[8]वृद्धयै प्राणलक्षणन्तु यस्मिन् यस्मिन् दिने गतिः ।
कृष्णपक्षे शुक्लपक्षे तिथित्रिंशत्फलोदयः ॥ ६ ॥
शुक्लपक्षे इडायान्तु कृष्णपक्षेऽन्यदेव हि ।
कुर्यात् सर्वत्र गमनं सुषुम्ना बहुरूपिणी ॥ ७ ॥

---

१. सर्वरूपा त्वमेवात्मा क० ।
२. सर्वं तत्त्वोज्ज्वलानि च क० ।
३. शान्ति क० ।
४. मादर ग० ।
५. आल्पम् क० ।
६. सहारश्च क० ।
७. सिद्धेश्च ग० ।
८. वक्ष्ये क० ।

तिथित्रयं सितस्यापि प्रतिपदादिसंभवम् ।
तद्द्वयं दक्षनासायां वायोर्ज्ञेयं महाप्रभो ॥ ८ ॥
चतुर्थीं पञ्चमीं षष्ठीं व्याप्योदयति देवता ।
वामनासापुटे ध्येया वायुधारणकर्मणि ॥ ९ ॥
सप्तमीमष्टमीञ्चैव नवमीं व्याप्य तिष्ठति ।
वामनासापुटे ध्येया साधकैः कुलपण्डितैः ॥ १० ॥
दशम्येकादशीं चैव द्वादशीं व्याप्य तिष्ठति ।
वायुर्दक्षिणनासाग्रे ध्येयो योगिभिरीश्वरः ॥ ११ ॥
त्रयोदशीं व्याप्य वायुः पौर्णमासीं चतुर्दशीम् ।
वामनासापुटे ध्येयः संहारहरणाय च ॥ १२ ॥
कृष्णपक्षफलं वक्ष्ये यज्ज्ञात्वा अमरो भवेत् ।
कालज्ञानी भवेत् शीघ्रं नात्र कार्या विचारणा ॥ १३ ॥
प्रतिपद्द्वितीयामस्य तृतीयामपि तस्य च ।
पिङ्गलायां समावाप्य वायुर्निःसरते सदा ॥ १४ ॥
चतुर्थीं पञ्चमीं षष्ठीं वामे व्याप्य प्रतिष्ठति ।
सप्तमीमष्टमीं वायुर्नवमीं दक्षिणे ततः ॥ १५ ॥
दशम्येकादशीं वायुर्व्याप्य भ्रमति[1] सर्वदा ।
वामे च दक्षिणेऽन्यानि तिथ्यादीनि सदानिशम् ॥ १६ ॥
यदा [2]एतद्व्यस्तभावं समाप्नोति नरोत्तमः ।
तदैव मरणं रोगं बन्धुनाशं त्रिपक्षके ॥ १७ ॥
भिन्नजन्मतिथिं ज्ञात्वा तस्मिन् काले विरोधयेत् ।
आरभ्य जन्मनाशाय प्राणायामं समाचरेत् ॥ १८ ॥
यदा प्रत्ययभावेन देहं त्यक्त्वा प्रयच्छति[3] ।
तदा निरुध्य श्वसनं कालाग्नौ धारयेदधः ॥ १९ ॥

---

१. जप्त्वा क० ।

२. दन्तभावम् क० ।

३. प्रगच्छति क० ।

यावत् स्वस्थानमायाति तावत्कालं[1] समभ्यसेत् ।
यावन्न चलते देहं यावन्न चलते मनः ॥ २० ॥
क्रमादभ्यसतः पुंसो देहे स्वेदोद्गमोऽधमः ।
मध्यमं कम्पसंयुक्तो भूमित्यागः परस्य तु ॥ २१ ॥
षण्मासाद्भूतदर्शी स्यात् दूरश्रवणमेव च ।
संवत्सराभ्यासयोगात् योगविद्याप्रकाशकृत् ॥ २२ ॥
योगी जानाति सर्वाणि तन्त्राणि स्वक्रमाणि च ।
यदि दर्शनदृष्टिः स्यात्तदा योगी न संशयः ॥ २३ ॥
प्रत्याहारफलं वक्ष्ये यत्कृत्वा खेचरो भवेत् ।
ईश्वरे भक्तिमाप्नोति धर्मज्ञानी भवेन्नरः ॥ २४ ॥
उत्तमस्य गुणप्राप्तिर्यावच्छीलनमिष्यते ।
तावज्जपेत् सूक्ष्मवायुः प्रत्याहारप्रसिद्धये ॥ २५ ॥
इन्द्रियाणां विचरतां [2]विषयेषु निवर्तनम् ।
बलादाहरणं तेभ्यः प्रत्याहारो विधीयते ॥ २६ ॥
नान्यकर्मसु धर्मेषु शास्त्रधर्मेषु योगिराट् ।
पतितं चित्तमानीय स्थापयेत् पादपङ्कजे ॥ २७ ॥
दुर्निवार्यं दृढचित्तं दुरत्ययमसम्मतम् ।
बलादाहरणं तस्य प्रत्याहारो विधीयते ॥ २८ ॥
एतत् प्रत्याहारबलात् योगी स्वस्थो भवेद्ध्रुवम् ।
अकस्माद्भावमाप्नोति भावराशिस्थिरो नरः ॥ २९ ॥
भावात् परतरं नास्ति भावाधीनमिदं जगत् ।
भावेन लभ्यते योगं तस्माद्भावं समाश्रयेत् ॥ ३० ॥
अथ धारणमावक्ष्ये यत्कृत्वा धैर्यरूपभाक् ।
त्रैलोक्यमुदरे कृत्वा पूर्णः तिष्ठति[3] योगिराट् ॥ ३१ ॥

१. तत्त्वमस्य ग० ।
२. विधायधनिवर्गनम् क० ।
३. स्रष्टति ग० ।

अङ्गुष्ठगुल्फजानूरुसीमनि लिङ्गनाभिषु ।
हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां तथा नसि[1] ॥ ३२ ॥
भ्रूमध्ये मस्तके मूर्ध्नि द्वादशान्ते यथाविधि ।
धारणं प्राणमरुतो धारणेति निगद्यते ॥ ३३ ॥
सर्वनाडीग्रन्थिदेशे षट्चक्रे देवतालये ।
ब्रह्ममार्गे धारणं यद् धारणेति निगद्यते ॥ ३४ ॥
धारणं मूलदेशे तु कुण्डली नासिकातटे ।
प्राणवायोः प्रशमनं[2] धारणेति निगद्यते ॥ ३५ ॥
तत्र श्रीचरणाम्भोजमङ्गले चारुतेजसि ।
भावेन स्थापयेच्चित्तं धारणाशक्तिमाप्नुयात् ॥ ३६ ॥
अथ ध्यानं प्रवक्ष्यामि यत् कृत्वा सर्वगो भवेत् ।
ध्यानयोगाद्भवेन्मोक्षो मत्कुलागमनिर्गमः ॥ ३७ ॥
समाहितेन मनसा चैतन्यान्तर्वर्तिना ।
आत्मन्यभीष्टदेवानां [3]योगध्यानमिहोच्यते ॥ ३८ ॥
श्रीपदाम्भोरुहद्वन्द्वे नखकिञ्जल्कचित्रिते ।
स्थापयित्वा मनः पद्मं ध्यायेदिष्टगणं[4] महत् ॥ ३९ ॥
अथ समाधिमाहात्म्यं वदामि तत्त्वतः शृणु ।
यस्यैव कारणादेव पूर्णयोगी भवेन्नरः ॥ ४० ॥
समत्वभावना नित्यं जीवात्मपरमात्मनोः ।
समाधिना जयी भूयादानन्दभैरवेश्वर ॥ ४१ ॥
संयोगसिद्धिमात्रेण समाधिस्थं महाजनम् ।
प्रपश्यति महायोगी समाध्यष्टाङ्गलक्षणैः ॥ ४२ ॥

---

१. निशि क० ।
२. प्रसम्बन्धो क० ।
३. ध्यानम् ग० ।
४. गुणम् ग० ।

एतत्समाधिमाकृत्य योगी योगान्वितो भवेत् ।
[1]अथ चन्द्रे मनः कुर्यात् समारोप्य विभावयेत् ।। ४३ ।।
एतदष्टाङ्गसारेण योगयोग्यो भवेन्नरः ।
योगयोगाद् भवेन्मोक्षो मन्त्रसिद्धिरखण्डिता ।। ४४ ।।
योगशास्त्रप्रकारेण सर्वे वै भैरवाः स्मृताः ।
योगशास्त्रात् परं शास्त्रं त्रैलोक्ये नापि वर्तते ।। ४५ ।।
त्रैलोक्यातीतशास्त्राणि योगाङ्गविविधानि च ।
ज्ञात्वा मां [2]पश्यति क्षिप्रं नानाध्यानेन शङ्कर ।। ४६ ।।
कामादिदोषनाशाय कथितं ज्ञानमुत्तमम् ।
इदानीं शृणु वक्ष्यामि मन्त्रयोगार्थनिर्णयम् ।। ४७ ।।
विश्वं [3]शरीरमाक्लेशं पञ्चभूताश्रयं प्रभो ।
चन्द्रसूर्याग्नितेजोभिः जीवब्रह्मैकरूपकम् ।। ४८ ।।
तिस्रः कोट्यस्तदर्धेन शरीरे[4] नाड्यो[5] मताः ।
तेषु मुख्या दशप्रोक्तास्तासु तिस्रो व्यवस्थिताः ।। ४९ ।।
प्रधाना मेरुदण्डेऽत्र सोमसूर्याग्निरूपिणी ।
नाडीत्रयस्वरूपेण योगमाता प्रतिष्ठिता ।। ५० ।।
इडा वामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी ।
शक्तिरूपा च सा नाडी साक्षादमृतविग्रहा ।। ५१ ।।
दक्षिणे पिङ्गलाख्या तु [6]पुंरूपा सूर्यविग्रहा ।
दाडिमीकुसुमप्रख्या विषाख्या परिकीर्तिता ।। ५२ ।।

---

१. क० नास्ति ।
२. सम्प्राप्यते क्षिप्तम् इति क० ।
३. माकाशम् इति ग० ।
४. दक्षिणतः इति ग० ।
५. शरीरेण तयोः इति ग० ।
६. स इति ग० ।

मरुमध्ये स्थिता या तु सुषुम्ना बहुरूपिणी ।
विसर्गाद्बिन्दुपर्यन्तं व्याप्य तिष्ठति तत्त्वतः ॥ ५३ ॥
मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके ।
मध्ये स्वयंभूलिङ्गन्तं कोटिसूर्यसमप्रभम् ॥ ५४ ॥
तदूर्ध्वे कामबीजन्तु कलाशान्तीन्दुनायकम् ।
तदूर्ध्वे तु शिखाकारा कुण्डली ब्रह्मविग्रहा ॥ ५५ ॥
तद्बाह्ये हेमवर्णाभं वसुवर्णचतुर्दलम् ।
द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ॥ ५६ ॥
तदूर्ध्वेऽग्निसमप्रख्यं [1]षड्दलं [2]हीरकप्रभम् ।
[3]वादिलान्तं तु षड्वर्णसहितं [4]रसपत्रकम् ॥ ५७ ॥
स्वाधिष्ठानाख्यममलं[5] योगिनां हृदयंगमम् ।
मूलमाधारषट्कानां[6] मूलाधारं प्रकीर्तितम् ॥ ५८ ॥
स्वशब्देन परं लिंगं स्वाधिष्ठानं स्वलिंगकम् ।
तदूर्ध्वे नाभिदेशे तु मणिपूरं महाप्रभम् ॥ ५९ ॥
मेघाभं विद्युताभं च बहुतेजोमयं ततः ।
मणिमद्भिन्नतत्पद्मं मणिपूरं शशिप्रभम् ॥ ६० ॥
कथितं [6]सकलं नाथ हृदयाब्जं शृणु प्रिय ।
दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् ॥ ६१ ॥
शिवेनाधिष्ठितं पद्मं विश्वालोकनकारकम् ।
तदूर्ध्वेऽनाहतं पद्मं हृदिस्थं [7]किरणाकुलम् ॥ ६२ ॥

---

१. सद्ग्रन्थम् इति ग० ।
२. लान्ताणं इति ग ।
३. वत्स इति ग० ।
४. सदनम् इति ग० ।
५. षड्कोणम् इति ग० ।
६. सफलम् इति क० ।
७. विकलाकुलम् इति ग० ।

उद्यदादित्यसंकाशं कादिठान्ताक्षरान्वितम् ।
दलद्वादशसंयुक्तमीश्वराद्यसमन्वितम् ॥ ६३ ॥
तन्मध्ये बाणलिंगन्तु सूर्यायुतसमप्रभम् ।
शब्दब्रह्ममयं [1]वक्ष्येऽनाहतस्तत्र दृश्यते ॥ ६४ ॥
तेनानाहतपद्माख्यं योगिनां योगसाधनम् ।
आनन्दसदनं तत्तु सिद्धेनाधिष्ठितं परम् ॥ ६५ ॥
तदूर्ध्वन्तु विशुद्धाख्यं दलषोडशपङ्कजम् ।
वर्णैः षोडशभिर्युक्तं धूम्रवर्णं महाप्रभम् ॥ ६६ ॥
योगिनामद्भुतस्थानं [2]सिद्धिवर्णं समभ्यसेत् ।
विशुद्धं तनुते यस्मात् जीवस्य हंसलोकनात् ॥ ६७ ॥
विशुद्धं पद्ममाख्यातमाकाशाख्यं महत्प्रभम् ।
आज्ञाचक्रं तदूर्ध्वे तु अर्थिनाधिष्ठितं परम् ॥ ६८ ॥
आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्तितम् ।
कैलासाख्यं तदूर्ध्वे तु तदूर्ध्वे बोधनन्ततः ॥ ६९ ॥
एवंविधानि चक्राणि कथितानि तव प्रभो ।
तदूर्ध्वस्थानममलं सहस्राराम्बुजं परम् ॥ ७० ॥
बिन्दुस्थानं परं ज्ञेयं गणानां मतमाश्रृणु ।
बौद्धा वदन्ति चात्मानमात्मज्ञानी न ईश्वरः ॥ ७१ ॥
सर्वं नास्तीति चार्वाका नानाकर्मविवर्जिताः ।
वेदनिन्दापराः सर्वे बौद्धाः शून्याभिवादिनः ॥ ७२ ॥
मम ज्ञानाश्रिताः कान्ताश्चीनभूमिनिवासिनः ।
आत्मानमपरिच्छिन्नं विभाव्य भाव्यते मया ॥ ७३ ॥
श्रीपदाब्जे बिन्दुयुग्मं नखेन्दुमण्डलं शुभम् ।
शिवस्थानं प्रवदन्ति शैवाः शाक्ता महर्षयः ॥ ७४ ॥

---

१. शब्दो ।
२. वर्गंयः इति ग० ।

परमं पुरुषं नित्यं वैष्णवाः [1]प्रीतिकारकाः ।
हरिहरात्मकं रूपं संवदन्ति परे जनाः ॥ ७५ ॥
देव्याः पदं नित्यरूपाङ्चरणानन्दनिर्भराः ।
वदन्ति मुनयो मुख्याः पुरुषं प्रकृतात्मकम् ॥ ७६ ॥
पुंप्रकृत्याख्यभावेन मग्ना भान्ति महीतले ।
इति ते कथितं नाथ मन्त्रयोगमनुत्तमम् ॥ ७७ ॥
योगमार्गानुसारेण भावयेत् सुसमाहितः ।
आदौ [2]महापूरकेण मूले संयोजयेन्मनः ॥ ७८ ॥
गुदमेढ्रान्तरे शक्तिं तामाकुञ्च्य प्रबुद्धयेत् ।
लिंगभेदक्रमेणैव प्रापयेद्बिन्दुचक्रकम् ॥ ७९ ॥
शम्भुलाभां परां [3]शक्तिमेकीभावैर्विचिन्तयेत् ।
तत्रोत्थितामृतरसं द्रुतलाक्षारसोपमम् ॥ ८० ॥
पाययित्वा परां शक्तिं कृष्णाख्यां योगसिद्धिदाम् ।
षट्चक्रभेदकस्तत्र सन्तर्प्यामृतधारया ॥ ८१ ॥
आनयेत्तेन मार्गेण मूलाधारं ततः सुधीः ।
एवमभ्यस्यमानस्य अहन्यहनि मारुतम् ॥ ८२ ॥
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात् ।
तन्त्रोक्तकथिता मन्त्राः[4] सर्वे सिद्ध्यन्ति नान्यथा ॥ ८३ ॥
स्वयं सिद्धो भवेत् क्षिप्रं योगे हि योगवल्लभा ।
ये गुणाः सन्ति देवस्य पञ्चकृत्यविधायिनः ॥ ८४ ॥
ते गुणाः साधकवरे भवन्त्येव न चान्यथा ।
इति ते कथितं नाथ मन्त्रयोगमनुत्तमम् ॥ ८५ ॥

---

१. प्रतिकारकाः इति क० ।
२. प्रकरणे इति ग० ।
३. भावम् इति क० ।
४. दूषिता इति क० ।

इदानीं धारणाख्यश्च शृणुष्व परमाञ्जनम् ।
दिक्कालाद्यनवच्छिन्नं त्वयि चित्तं निधाय च ॥ ८६ ॥
मयि वा साधकवरो ध्यात्वा तन्मयतामियात् ।
तन्मयो भवति क्षिप्रं जीवब्रह्मैकयोजनात् ॥ ८७ ॥
इष्टपादे मतिं दत्वा नखकिञ्जल्कचित्रिते ।
अथवा मननं चित्तं यदा क्षिप्रं न सिद्‍ध्यति ॥ ८८ ॥
तदावयवयोगेन योगी योगं समभ्यसेत् ।
पादाम्भोजे मनो दद्याद् नखकिञ्जल्कचित्रिते ॥ ८९ ॥
जंघायुग्मे तथाराम[1]कदलीकाण्डमण्डिते ।
ऊरुद्वये मत्तहस्तिकरदण्डसमप्रभे ॥ ९० ॥
गंगावर्त्तगभीरे तु नाभौ सिद्धिबिले ततः ।
उदरे वक्षसि तथा हस्ते श्रीवत्सकौस्तुभे ॥ ९१ ॥
पूर्णचन्द्रामृतप्रख्ये ललाटे चारुकुण्डले ।
शङ्खचक्रगदाम्भोजदोर्दण्डपरिमण्डिते ॥ ९२ ॥
सहस्रादित्यसंकाशे किरीटकुण्डलद्वये ।
स्थानेष्वेषु भजेन्मन्त्री विशुद्धः शुद्धचेतसा ॥ ९३ ॥
मनो निवेश्य श्रीकृष्णे वैष्णवो भवति ध्रुवम् ।
इति वैष्णवमाख्यातं ध्यानं सत्त्वं सुनिर्मलम् ॥ ९४ ॥
विष्णुभक्ताः प्रभजन्ति [2]स्वाधिष्ठानं मनःस्थिराः ।
यावन्मनोलयं याति कृष्णे [3]आत्मनि चिन्तयेत् ॥ ९५ ॥
तावत् स्वाधिष्ठानसिद्धिरिति योगार्थनिर्णयः ।
तावज्जपेन्मनुं मन्त्री जपहोमं समभ्यसेत् ॥ ९६ ॥
अतः परं न किञ्चिच्च कृत्यमस्ति मनोहरे ।
विदिते परतत्त्वे तु समस्तैर्नियमैरलम् ॥ ९७ ॥

---

१. सिद्धवने इति ग० ।
२. चन्द्रायुत इति ग० ।
३. स्वात्मनि चिन्तयेत् इति ग० ।

[1]अत एव सदा कुर्यात् ध्यानं योगं मनुं जपेत् ।
तमःपरिवृते गेहे घटो दीपेन दृश्यते ॥ ९८ ॥
एवं स यो वृतो ह्यात्मा मनुना गोचरीकृतः ।
इति ते कथितं नाथ मन्त्रयोगमनुत्तमम् ॥ ९९ ॥
कृत्वा पापोद्भवैर्दुःखैर्मुच्यते नात्र संशयः ।
दुर्लभं विषयासक्तैः सुलभं योगिनामपि ॥ १०० ॥
सुलभं न त्यजेद्विद्वान् यदि सिद्धिमिहेच्छति ।
ब्रह्मज्ञानं योगध्यानं मन्त्रजाप्यं क्रियादिकम् ॥ १०१ ॥
यः करोति सदा भद्रो वीरभद्रो हि योगिराट् ।
भक्तिं कुर्यात् सदा शंभोः श्रीविद्यायाः परात्पराम् ॥ १०२ ॥
योगसाधनकाले च केवलं भावनादिभिः ।
भजनं कीर्त्तनं ध्यानं स्मरणं पादसेवनम् ॥ १०३ ॥
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।
एतद्भक्तिप्रसादेन जीवन्मुक्तस्तु साधकः ॥ १०४ ॥
योगिनां वल्लभो भूत्वा समाधिस्थो भवेद्यतिः ॥ १०५ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये पाशवकल्पे षट्चक्रसारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे [2]सप्तविंशः पटलः ॥



---

१. तालवृन्तेन किं कार्यं लब्धे मलयमारुते ।
मन्त्राभ्यासेन योगेन ज्ञानं ज्ञानाय कल्प्यते ॥
न योगेन विना मन्त्रो न मन्त्रेण विना हि सः ।
द्वयोरभ्यासयोगो हि ब्रह्मत्वं सिद्धिकारणम् ॥ इति क० अधिकः पाठः ।

२. उनविंशः पटलः इति क० ।

# अष्टाविंशः पटलः

श्रीआनन्दभैरव उवाच—

त्रैलोक्यपूजिते कान्ते इदानीं सिद्धिहेतवे ।
मन्त्रसिद्धेर्लक्षणन्तु योगिनामतिदुर्लभम् ॥ १ ॥
त्वन्मुखाम्भोरुहोल्लासनिःसृतं परमामृतम् ।
पीत्वा चकार तन्त्राणि [1]यत्तत्र नास्ति तद् वद ॥ २ ॥

आनन्दभैरवी उवाच —

निश्चयं ते प्रवक्ष्यामि आनन्दभैरवेश्वर ।
मन्त्रसिद्धेर्लक्षणन्तु योगमार्गानुकूलतः ॥ ३ ॥
नित्यं चेतसि सुस्थिरे स्थितिपथक्लेशादिदोषक्षयं[2]
[3]सर्वश्चोत्तममन्त्रसिद्धिकलितं संलक्षणं शोभनम् ।
मृत्यूनां हरणं जगत्पतिमतिं सन्दर्शनश्चोत्तमं
योगोऽक्लेशविवर्द्धनं [4]समुदयाच्छेशप्रयोगेष्टभाक् ॥ ४ ॥
[5]नरेन्द्राणां काये प्रविशति हठात् [6]क्षोभयति तं
[7]पुरे तेषामूर्द्ध्वोत्क्रमणमचरस्यावरपुरे ।
[8]अधःछिद्रं पश्येत् खचरवनितामेलनमलं
शृणोति प्रध्माने[9] जगति जगतां कीर्तिरतुला ॥ ५ ॥

---

१. तत्र यत्र सारमावद इति क० ।

२. समम् इति क० ।

३. कलिता इति क०

४. समुदयाक्लेशप्रयोगेप्वभाक् इति ग०

५. नरेन्द्राणि इति ग० ।

६. क्षोभहरितम् इति ग० ।

७ पूरकेणामूर्ध्वोत्क्रमणसर्वंमुच्चे परपुरे इति ग० ।

८. अधः छिन्नम् इति ग० ।

९. प्राधान्य इति ग० ।

इतीह सिद्ध्यादिसुलक्षणेन[1]
प्रयाति वैकुण्ठपुरीं मनोरमाम् ।
हितं यदा पश्यति सत्त्वभूभृतां
जगद्विपक्षो निजपक्षमाश्रयेत् ॥ ६ ॥

[2]कीर्तिर्भूषणमादिभक्ति सफला मुक्तिक्रियासंयुता
देवानामतिभक्तियुक्तहृदयं सर्वक्रियादक्षता ।
त्रैलोक्यं निजदास्यकर्मनिपुणं जिव्हा चिरं जीवति
[3]अष्टाङ्गाभ्यसनं [4]जगद्वशकरं चैतन्यतामुत्तमम् ॥ ७ ॥

भोगेच्छारहितं जगज्जनचमत्कारानुकल्पान्वितं
रोगाणां दरणं विरक्तहृदयं [5]वैराग्यभक्तिप्रियम् ।
त्यागं संसरणं तथा [6]शमदयामायाब्धिजालस्य वा
ऐश्वर्यं कवितारसं धनजनं लक्ष्मीगणं जापनम् ॥ ८ ॥

उल्लासं हृदयाम्बुजे सुतधनं सम्माननं सत्पथं
[7]वाञ्छासागररत्नपूर्णघटितं कान्तागणान्मोदितम्[8] ।
संकेतादिमनुप्रियं हरिहरब्रह्मैकभावान्वितं
लोकानां गुरुतानिरन्तरशिवानन्दैकमुद्राधरम् ॥ ९ ॥

एतदुक्तं महादेवोत्तरतन्त्रनिरूपणम् ।
मन्त्रसिद्धिलक्षणं तदुत्तमाधममध्यमम् ॥ १० ॥

---

१. सुलक्षेन इति ग० ।
२. कीर्तिभ्रंसादिभक्तिः सदसि च इति ग० ।
३. ज्येष्टाङ्गाभ्यसनम् ( ह्यष्टाङ्गाभ्यसनम् ) ग० ।
४. जगद्वशंकरम् इति ग० ।
५. मूर्ति इति ग० ।
६. मात्रा निजालस्वया इति ग० ।
७ रत्नपुष्पविटितम् इति ग० ।
८. गणामोदितम् इति ग० ।

मुनयो देवमुख्याश्च नित्यं जन्मनि जन्मनि ।
दिव्यरूपं नरकुले धृत्वा तृप्यन्ति चानिशम् ॥ ११ ॥
तवैवापि ममैवापि तर्पणं होमभोजनम् ।
सर्वदा कुरुते साधु [1]तन्मनो भवति ध्रुवम् ॥ १२ ॥
एतत्प्राणवायुपाने सूक्ष्मचन्द्रनियोजने ।
कर्त्तव्यं प्रत्यहं कार्यं दिवारात्रौ मुहुर्मुहुः ॥ १३ ॥
अथैतत् कर्म संस्कुर्यात् योगसाधनमुत्तमम् ।
यः श्रीमान् साधु सद्भक्त्या [2]दुष्टमन्त्रोऽपि सिध्यति ॥ १४ ॥
[3]एतद्दोषसमूहन्तु वदामि तत्त्वतः शृणु ।
छिन्नादिदोषदुष्टानां योगतत्त्वेन सिध्यति ॥ १५ ॥
देवेन्द्रपाशदुष्टा च भुवनेशी सुसिद्धिदा ।
आराधिता महाविद्या वीर्यदर्पविवर्जिता ॥ १६ ॥
एकाक्षरी वीर्यहीना वाग्भवेन महोज्ज्वला ।
[4]तदवद्युत्तमा देवी तारसम्पुटहंसिनी ॥ १७ ॥
आविद्धा कामराजेन विद्या कामेश्वरी परा ।
शरेण पीडिता पूर्वं भुवनेश्याः प्रतिष्ठिता ॥ १८ ॥
या कुमारी महाविद्या [5]यया संसारिबोधिका ।
ताराचन्द्रस्वरूपाहं शिवशक्त्या च केवलम् ॥ १९ ॥
भैरवीणां [6]हि विद्यानां दोषजालं शृणु प्रभो ।
एतान्दोषान्प्रणश्यन्ति योगमार्गानुसारिणः ॥ २० ॥

---

१. चैतन्यम इति ग० ।
२. शास्त्रोऽपि इति ग० ।
३. तत्तद् इति ग० ।
४. तदवभ्रुवरसा इति क० ।
५. माया सन्नाविरोधिका इति ग० ।
६. श्री विद्या इति ग० ।

यतः कुण्डलिनी देवी योगेन चेतनामुखी ।
अतो योगं सदा कुर्यात् सर्वमन्त्रप्रसिद्धये ॥ २१ ॥
भैरवी विधिशप्ता च दग्धा च कीलिता तथा ।
सैव संहारकरी मोहिता चानुमोदिता ॥ २२ ॥
महामदोन्मत्तचित्ता मूर्च्छिता वीर्यवर्जिता ।
स्तम्भिता मारिता च्छिन्ना विद्धा रुद्धा च त्रासिता ॥२३॥
निर्वीजा शक्तिहीना च सुप्ता मत्ता च घूर्णिता ।
पराङ्मुखी नेत्रहीना [1]सा भीता दुःसंस्कृता ॥ २४ ॥
सुषुप्ता भेदिता प्रौढा बालिका [2]मालिनी क्षमा ।
भयदा युवती क्रूरा दाम्भिका शोकसंकटा ॥ २५ ॥
निस्त्रिंशका सिद्धिहीना कूटस्था मन्दबुद्धिदा ।
हीनकर्णा हीननासा [3]अतिक्रुद्धांगभङ्गुरा ॥ २६ ॥
कलहा कलहप्रीता भ्रष्टस्थानक्षयाकुला ।
धर्मभ्रष्टा [4]चातिवृद्धातिबाला सिद्धिनाशिनी ॥ २७ ॥
कृतवीर्या महाभीमा क्रोधपुंजा च ध्वंसिनी ।
कालविद्या सूक्ष्मधर्मा [5]विधर्मधर्ममोहिनी ॥ २८ ॥
दुर्गस्थिता क्षिप्तचित्ता प्रचण्डा चण्डगामिनी ।
[6]उल्कावच्चलती तीक्ष्णा [7]मन्दाहारा निरंशका ॥ २९ ॥

१. सुप्ता भीतानुसंस्कृता इति० क० ।
२. कामिनी क्रिया इति० ग० ।
३. तया इति० ग० ।
४. नातिवृद्धा इति० ग० ।
५. सूक्ष्मधर्मा च कोहिनि इति ग० ।
६. उच्चावच्चलति इति ग० ।
७. मन्दहासा इति ग० ।

तत्त्वहीना केकरा च [1]घूर्णितालिङ्गिता जिता ।
अतिगुप्ता क्षुधार्त्ता च धूर्त्ता [2]ध्यानस्थिरास्थिरा ॥ ३० ॥
[3]एता विद्याः प्रसन्नाः स्युर्योगकालनिरोधनात् ।
वीरभावेन सिद्धिः स्यात् पुरश्चरणकर्मणा ॥ ३१ ॥

आनन्दभैरवी उवाच—

[4]तत्र वीरो यजेत् कान्तां परकीयामथापि वा ।
[5]स्वीयामलङ्कारयुक्तां सुन्दरीं चारुहासिनीम् ॥ ३२ ॥
मदनानलतप्तांगीमासवानन्दविग्रहाम्[6] ।
योगिनीं कौलिनीं योग्यां धर्मशीलां कुलप्रियाम् ॥ ३३ ॥
दीक्षितां लोलवदनां वदनाम्भोजमोहिनीम् ।
नानादेशस्थितां कन्यां युवतीं परिपूजयेत् ॥ ३४ ॥
जापिकां मन्दहास्यां च मन्दमन्दगतिप्रियाम् ।
कृशाङ्गीमतिसौन्दर्यामलंकृतकलेवराम् ॥ ३५ ॥
कोटिकन्याप्रदानेन यत्फलं लभते नरः ।
तत्फलं लभते सद्यः कामिनीपरिपूजनात् ॥ ३६ ॥
ततः षोडशकन्याश्च योगिन्यो योगसिद्धये ।
पूजयेत् परया भक्त्या वस्त्रालंकारभूषणैः ॥ ३७ ॥
नानाविधैः पिष्टकान्नैः पक्वान्नैः प्राणसम्भवैः ।
दधिदुग्धघृतैश्चापि नवनीतैः सशर्करैः ॥ ३८ ॥
उपलाखण्डमिश्रान्नैः नानारसफलान्वितैः ।
चूडादिभिर्नारिकेलैः कपिलैर्नागरंगकैः ॥ ३९ ॥

---

१. धूतिता इति ग० ।
२. ध्याला इति ग० ।
३. तत्राविध्या इति ग० ।
४. अत्र इति ग० ।
५. स्त्रियालङ्कारसंयुक्ताम् इति ग० ।
६. मासवानन्द इति ग० ।

नानागन्धफलैश्चैव नानागन्धसमन्वितैः ।
मृगनाभिचन्दनैश्च श्रीखण्डैर्नवपल्लवैः ॥ ४० ॥
पूजयेत्ताः प्रयत्नेन जलजैः स्थलजैस्तथा ।
नानासुगन्धिपुष्पैश्च रक्तचन्दनकुङ्कुमैः ॥ ४१ ॥
पूजयेत् शून्यगृहे च निर्जने विपिने तथा ।
कुलदेवीं समानीय स्वागतं प्रवदेदनु ॥ ४२ ॥
अर्घोदकेन संशोध्यामृतीकरणमाचरेत् ।
शक्तिञ्चाभिमुखीं नीत्वा वीरयोगी भवेद्ध्रुवम् ॥ ४३ ॥
शक्तिं च षोडशीं देवीं कुलचक्रप्रियां शुभाम् ।
महाशक्तिं शृणु प्राणवल्लभे श्रीकलावतीम् ॥ ४४ ॥
ब्राह्मणी क्षत्रिया वैश्या शूद्रा वेश्या च सुन्दरी ।
कुलभूषासमाक्रान्ता मानिनी नातिपिङ्गला ॥ ४५ ॥
रजकी नटकी कौला श्यामाङ्गी स्थूलविग्रहा ।
संकेतागमना भार्या [1]विदग्धा रञ्जकी तथा ॥ ४६ ॥
[2]खटकी [3]कोलकन्या च कुलमार्गप्रवर्तिका ।
सर्वाङ्गसुन्दरी भव्या चारुनेत्रा हसन्मुखी ॥ ४७ ॥
यद्यदीक्षारतास्तास्तु देया दीक्षा तदा प्रभो ।
सूक्ष्मतन्त्रानुसारेण कथितं पूर्वसूचितम् ॥ ४८ ॥
सर्वाङ्गसुन्दरी शुद्धा शुद्धलोककुलोद्भवा ।
युवती योगनिरता सा देवी डाकिनी मता ॥ ४९ ॥
तामानीय महामन्त्रं दापयेदिष्टसिद्धये ।
ततस्ताः पूजनीयास्तु दीक्षाहीनास्तु नाचरेत् ॥ ५० ॥
श्रीकृष्णराममन्त्रन्तु दापयेत्सत्त्वसिद्धये ।
ताभ्य आदौ ततो मृत्युञ्जयमन्त्रं ततश्चरेत् ॥ ५१ ॥

---

१. वञ्चकी इति ग० ।
२. खल्वकी इति ग० ।
३. लोलकन्या इति ग० ।

आनन्दभैरवीबीजं देवीं शक्तिं स्वबीजकम् ।
अथवा सिद्धमन्त्रन्तु श्रीविद्यायाः प्रदापयेत् ॥ ५२ ॥
किंवा केवलमायान्तु क्रोधारुणकराकृतिम् ।
ज्वलन्तीं मूलपद्मे तु स्वयम्भूकुसुमाकराम् ॥ ५३ ॥
एतद्भूतां महामायां तस्मै दत्त्वा जयी भवेत् ।
आदौ वामकर्णपुटे अग्निवारं [1]परे त्रयम् ॥ ५४ ॥
अतः शिक्षां सदानन्ददीक्षान्ते कारयेद्बुधः ।
दीक्षामूलं जपं सर्वं दीक्षामूलं गुरोः कृपा ॥ ५५ ॥
दीक्षामाश्रित्य मायां या जपेत् सा खेचरी परा ।
तस्याः पूजनमात्रेण प्रसन्नाहं न संशयः ॥ ५६ ॥
जगतां जगदीशानां नारीरूपेण संस्थितिः ।
अहं नारी न सन्देहः सुन्दरी कुत्सिता परा ॥ ५७ ॥
सुन्दरीपालनार्थाय विनाशायाशु कुत्सिता ।
साधकस्य भ्रान्तिरूपा संहिताः परिभावयेत् ॥ ५८ ॥
या परा मोक्षदा विद्या सुन्दरी कामचारिणी ।
भाविनी सा भवानी च तां विद्यां परिपूजयेत् ॥ ५९ ॥
तस्या अङ्गे स्थिरा नित्यं देवताया अहं प्रभो ।
यश्च योगी सर्वसमः स सर्वात्मा नयेत् किल ॥ ६० ॥
अन्यथा सिद्धिहानिः स्याद्भावाभावविचारणात् ।
विना भावं न सिद्ध्येत्तु भावानां भावराशिग[2] ॥ ६१ ॥
कुलपुरश्चरणं कुर्यात् कुलाकुलविमुक्तये ।
योगी स्यादव्ययो धीरो विद्वान्मुक्तो हि जीवने ॥ ६२ ॥

---

१. परित्रयम् इति ग० ।
२. वीराणाम् इति० ग० ।

[1]ब्राह्मणीं सुन्दरीं चैव संस्थाप्य क्रमतो यजेत् ।
वामहस्ते महार्घ्यन्तु दक्षिणे आसनादिकम् ॥ ६३ ॥
दद्यात् पाद्यमासनानि तत्तन्नाम्ना च स्वागतम् ।
तत्तदा अर्घपात्रस्थजलेन प्रोक्षयेच्च ताः ॥ ६४ ॥
धेनुमुद्रां समाकृत्य वं मन्त्रेणामृतीक्रियाम् ।
अमृतीकरणान्ते च रूपभेदं समानयेत् ॥ ६५ ॥
संज्ञाभिर्नामकरणं कृत्वा चासनमर्पयेत् ।

[2]श्रीभैरवी उवाच—

अथ कान्त प्रवक्ष्यामि षट्चक्रभेदनक्रियाम् ॥ ६६ ॥
यत्कृत्वा अमरा लोके विचरन्ति चराचरे ।
अकालमृत्युहरणं सर्वव्याधिविनाशनम् ॥ ६७ ॥
योगेन [3]जीववर्गाश्च भवन्त्यमररूपिणः ।
षट्चक्रे च महापद्मे सर्वसत्त्वगुणान्विते ॥ ६८ ॥
धर्माधर्मे मनोराज्ये [4]सर्वविद्यानिधौ कृतौ ।
कलिकल्मषमुख्यानां सर्वपापापहारकम् ॥ ६९ ॥
मनो दत्त्वा महाकाले जीवाः सर्वत्र गामिनः ।
एतच्छ्रुत्वा महावीरो विवेकी परमार्थवित् ॥ ७० ॥

---

१. ब्राह्मणीं सुन्दरीं सिद्धां नवयौवनशालिनीम् ।
आनीय दद्याद्दीक्षान्तु तस्यैतत्कर्म चाश्रृणु ॥
कुलमार्गानुसारेण वक्तव्यं त्रिदशेश्वर ।
अत्यद्भुतो भवेन्मन्त्री पुरश्चरणकर्मणि ।
एता अष्टमहाशक्तीः संस्थाप्य क्रमतो यजेत् ॥

२. क० पु० नास्ति० इति० क० पु० अधि० पाठः ।

३. जीवगाश्च इति० ग० ।

४. सत्त्व इति० क० ।

पुनर्जिज्ञासयामास ज्ञानज्ञेयेन शंकर ।

आनन्दभैरव उवाच—

षट्चक्रभेदनकथां कथयस्व वरानने ॥ ७१ ॥
हिताय सर्वजन्तूनां हिरण्यवर्णमण्डितम् ।
प्रकाशयस्व ? वरदे योगानामुदयं वद ॥ ७२ ॥
येन योगेन धीराणां हितार्थं वाञ्छितं मया ।
कालक्रमेण सिद्धिः स्यात् [1]कालजालविनाशनात् ॥ ७३ ॥
कालक्षालनहेतोश्च [2]पुनरुद्यापनं कृतम् ।

[3]आनन्दभैरवी उवाच—

आदौ कुर्यात् परानन्दं रससागरसंभवम् ॥ ७४ ॥
मान्द्यं मन्दगुणोपेतं शृणु तत्क्रममुत्तमम् ।
स्तोत्रं कुर्यात् मूलपद्मे कुण्डलिन्याः पुरश्क्रियाम् ॥ ७५ ॥
पुरश्चरणकाले तु जपान्ते नित्यकर्मणि ।
काम्यकर्मणि धर्मेषु तथैव धर्मकर्मसु[4] ॥ ७६ ॥
गुर्वाद्यगुरुनित्येषु भक्तिमाकृत्य सम्पठेत् ।
ॐनमोगुरवे ॐनमो गुर्वम्बपरदेवतायै ॥ ७७ ॥
सर्वधर्मस्वरूपायै सर्वज्ञानस्वरूपायै ।
ॐभवविभवायै ॐदक्षयज्ञविनाशिन्यै ॥ ७८ ॥
ॐभद्रकाल्यै ॐकपालिन्यै ॐउमायै ॐमाहेश्वर्यै ।
ॐसर्वसंकटतारिण्यै ॐमहादेव्यै नमो नमः ॥ ७९ ॥
ॐया माया मयदानवक्षयकरी शक्तिः क्षमा कर्त्तृका
शुम्भ श्रीमहिषासुरासुरबलप्रात्रोलचण्डामहा[5] ।

---

१. ज्ञान इति० ग० ।

२. पूर्वं नोद्यापनम् इति० ग० ।

३. आनन्द भैरवी उवाच इति० ग० ।

४. धर्मिषु इति० ग० ।

५. प्रायेण चण्डापहा इति० ग० ।

[1]भद्रार्द्रा रुधिरप्रिया प्रियकरी क्रोधाङ्गरक्तोत्पला
चामुण्डा रणरक्तबीजरजनी ज्योत्स्ना मुखेन्दीवरा ॥ ८० ॥

या जाया जयदायिनी नृगृहिणी भीत्यापहा भैरवी
नित्या सा परिरक्षणं कुरु शिवा सारस्वतोत्पत्तये ।
सा मे पातु कलेवरस्य विषयाह्लादेन्द्रियाणां बलं
[2]वक्षः स्थायिनमुल्वणोज्वलशिखाकारादिजीवाश्रिता ॥ ८१ ॥

कृत्वा योगकुलान्वितं स्वभवने नित्यं मनोरञ्जनम्
नित्यं संयमतत्परं परतरे भक्तिक्रियानिर्मलम् ।
[3]शम्भो रक्षरजोऽपनीशचरणाम्भोजे सदा भावनम्
विद्यार्थप्रियदर्शनं त्रिजगतां संयम्य योगी भवेत् ॥ ८२ ॥

आकाङ्क्षापरिवर्जितं निजगुरोः सेवापरं पावनं
प्रेमाह्लादकथाच्युतं[4] कुटिलताहिंसापमानप्रियम् ।
[5]कालक्षेपणदोषजालरहितं शाक्तं सुभक्तं यतिं
श्रीशक्तिप्रियवल्लभं सुरुचिरज्ञानान्तरं मानिनम् ॥ ८३ ॥

मालासूक्ष्मसुसूक्ष्मबद्धनिलयं सल्लक्षणं साक्षिणं
[6]नानाकारणकारणं ससरणं साकारब्रह्मार्पणम् ।

---

१. भक्तार्द्रा इति ग० ।

२. रक्षः इति ग० ।

३. रक्षरजाप्यमीश इति क० ।

४. कथावृतम् इति क० ।

५. कान्तिक्षेमकलाफलं कुलगतं मायाविहीनं कुलम् ।
कौलानामपि साङ्गमं तमिहे सम्पास्यहं सर्वदा ॥
मिथ्यावाग्रहितं स्वधार्थनिरतं नित्योक्तिभक्तिप्रियम् ॥
इति क० पु० अधि० पाठः ।

६. नानाकारविकारसारसरणम् इति ग० ।

नित्या सा जडितं महान्तमखिले [1]योगासनज्ञानिनं
तं वन्दे पुरुषोत्तमं त्रिजगतामंशार्कहंसं परम् ॥ ८४ ॥
मायांके प्रतिभाति चारुनयनाह्लादैकबीजं विधिं
कल्लोलाविकुलाकुला समतुला [3]कालाग्निवाहानना।
हालाहेलन [4]कौलकालकलिका [5]केयूरहारानना
सर्वाङ्गा मम पातु पीतवसना शीघ्रासना [6]वत्सला ॥ ८५ ॥
सा बालाबलवाहना [7]सुगहना सम्मानना धारणा
खं खं खं खचराचरा कुलचरा वाचाचरा वंखरा।
चं चं चं चमरीहरीभगवती गाथागताः संगतिः
बाहौ मे परिपातु पङ्कजमुखी या चण्डमुण्डापहा ॥ ८६ ॥
[9]कं कं कं कमलाकला गतिफला फूत्कारफेरुत्करा[10]
पं पं पं परमा रमा जयगमा व्यासंगमा जङ्गमा।
तं तं तं तिमिरारुणा सकरुणा मातावला तारिणी
भं भं भं भयहारिणी प्रियकरी सा मे भवत्वन्तरा ॥ ८७ ॥
झं झं झं [11]झरझर्मरीगतिपथस्थाता रमानन्दितं
[12]मं मं मं मलिनं हि [13]मां हयगतां हन्त्रीं रिपूणां हि ताम्।

१. योगोपलज्जानिलम् इति क०।
२. चला इति ग०।
३. कालाग्निहालाहला इति ग०।
४. कक्ष इति क०।
५. केयूरहा वामना इति ग०।
६. वासना इति ग०।
७. नृगहना इति ग०।
८. गतिः इति ग०।
९. फङ्कार इति ग०।
१०. कला इति ग०।
११. झरझरी इति क०।
१२. सं सं सं इति क०।
१३. सा इति क०।

भक्तानां भयहारिणी रणमुखे शत्रोः कुलाग्निस्थिता
सा सा सा भवतु प्रभावपटला दीप्ताङ्घ्रियुग्मोज्ज्वला ॥ ८८ ॥
गं गं गं गुरुरूपिणी गणपतेरानन्दपुञ्जोदया
[1]तारासारसरोरुहारुणकला [2]कोटिप्रभालोचना ।
नेत्रं पातु (सदा) [3]शिवप्रियपथा कोट्यायुतार्कप्रभा
तुण्डं मुण्डविभूषणा नरशिरोमाला विलोला समा[4] ॥ ८९ ॥
योगेशी [5]शशिशेखरोल्वणकथालापोदया मानवी[6]
शीर्षं पातु ललाटकर्णयुगलानन्तस्ततः सर्वदा ।
[7]मूर्त्तं मेरुशिखा स्थिता व्यवतु मे गण्डस्थलं कैवली
तुष्टं चाष्टमपष्टिकाधरतलं धात्री धराधारिणी ॥ ९० ॥
नासाग्रद्वयगह्वरं भृगुतरा नेत्रत्रयं तारिणी
केशान् कुन्तलकालिका सुकपिला कैलासशैलासना ।
कङ्कालामलमालिका सुवसना दन्तावलीं दैत्यहा
वाद्यं मन्त्रमनन्तशास्त्रतरणो सञ्ज्ञावचःस्तम्भिनी ॥ ९१ ॥
हं हं हं नरहारघोररमणी सञ्चारिणी पातु मे
शत्रूणां दलनं करोतु नियतं मे चण्डमुण्डापहा ।
भीमा सन्दहतु प्रतापतपना सम्वर्द्धनं वर्द्धिनी
मन्दारप्रियगन्धविभ्रममदा [9]वैदग्धमोहान्तरा ॥ ९२ ॥

---

१. भावासार इति क० ।
२. रुणरुणी कोटिप्रमा इति क० ।
३ ह्यसौ सदा शिवपथे इति क० ।
४. मालाधिलोला मम इति क० ।
५. शेखरान्दन इति क० ।
६. मारवि इति क० ।
७. अस्तम् (?) इति क० ।
८. मैथुनी इति ग० ।
९. विदिग् दिग्दण्डमोहान्तरा इति क० ।

श्यामा[1] पातु पतङ्गकोटिनिनदा[2] हंकारफट्कारिणी
आनन्दोत्सवसर्वसारजयदा सर्वत्र सा रक्षिका ।
क्षौं क्षौं क्षौं कठिनाक्षरा क्षयकरी सर्वाङ्गदोषंहना
देहारेः कचहा परा[3] कचकुचाकीलालपूराशिता ॥ ९३ ॥

घं घं घं घटघर्घरा विघटिता जायापतेः पातु मे
[4]कल्पे कल्पा कुलानामतिभयकलितं सर्वत्र मे विग्रहम् ।
[5]निद्रोद्रावितकालिका मम कुलं [6]लङ्कातटाच्छादिनी
[7]नं नं नं नयनानना सुकमला सा [8]लाकिनी लक्षणा ॥ ९४ ॥

[9]कुक्षौ पृष्ठतलं सदा मम धनं सा पातु मुद्रामयी
मोक्षं पातु करालकालरजकी या रञ्जकी कौतुकी ।
कृत्या नापितकन्यका शशिमुखी सूक्ष्मा मम प्राणगं
मन्दारप्रियमालया मणिमयग्रन्थ्या महन्मण्डिता ॥ ९५ ॥

पूज्या योगिभिरुत्सुकी भगवती मूलस्थिता सत्क्रिया
मत्ता पातु पतिव्रता मम गृहं धर्मं यशः[10] श्रेयसम् ।
धर्माम्भोरुहमध्यदर्शनिकरे काली महायोगिनी
मत्तानामतिदर्पहा हरशिरामाला कला केवला ॥ ९६ ॥

---

१. सा सा सातु इति ग० ।
२. निलयाबूकारटंकारिणी इति ग० ।
३. कचाकचकटा इति ग० ।
४. कल्पेऽल्पा कुलसर्पं कल्प लतिका इति क० ।
५. व्यावर्ति इति क० ।
६. शङ्का इति क० ।
७. लं लं लं इति ग० ।
८. लालाकिनी लक्षर्णी इति ग० ।
९. पृष्ठतरं मुदा समधनम् इति ग० ।
१०. समा इति ग० ।

मे गुह्यं जयमेव लिङ्गमपि मे मूलाम्बुजं पातु सा
या कन्या हिमपर्वतस्य भयहा पायान्नितम्बस्थलम्।
सर्वेषां हृदयोदयानलशिखाशक्तिर्मनोरूपिणी
मे भक्ति परिपातु कामकुशला लक्ष्मीः प्रिया मे प्रभो ॥९७॥
गौरी गौरवकारिणी भुवि महामाया महामोहहा
वं वं वं वरवारुणी सुमदिरा मे पातु नित्यं कटिम्।
कूटा सा रविचन्द्रवह्निरहिता स्वेच्छामयी मे सुखम् ॥ ९८ ॥
एतत्स्तोत्रं पठेद् यस्तु सर्वकाले च सर्वदा।
स भवेत् [1]कालयोगेन्द्रो महाविद्यानिधिर्भवेत् ॥ ९९ ॥
मूलपद्मबोधने[2] च मूलप्रकृतिसाधने।
निजमन्त्रबोधने च [3]घोरसंकटकालके ॥ १०० ॥
आपदस्तस्य नश्यन्ति अन्धकारं विना रविः।
सर्वकाले सर्वदेशे महापातकघातकः ॥ १०१ ॥
स भवेद् योगिनीपुत्रः कलिकाले न संशयः ॥ १०२ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्रप्रकाशे
भैरवभैरवीसंवादे कन्दवासिनीस्तोत्रं नाम
[4]अष्टाविंशः पटलः ॥



१. योगन्द्रः साध्यो विद्यानिधिर्भवेत् इति क० ।

२. राधने क० ।

३. घोरसङ्कटकालके क० ।

४. त्रिंशः पटलः क० ।

## एकोनत्रिंशः पटलः

आनन्दभैरवी उवाच—

अथ षट्चक्रयोगं च प्रवक्ष्यामीह तत्त्वतः ।
कुण्डलीयोगविविधं कृत्वा योगी भवेन्नरः ॥ १ ॥
मूलादिब्रह्मरन्ध्रान्तं षट्चक्रभेदनं मतम् ।
षट्चक्रे योगशास्त्राणि विविधानि वसन्ति हि ॥ २ ॥
यो जानातीह षट्चक्रं सर्वशास्त्रार्थविद्भवेत् ।
चतुर्द्दल मूलपद्मं वादिसान्तार्णसम्भवम् ॥ ३ ॥
हिरण्यवर्णममलं ध्यायेद्योगी पुनः पुनः ।
निर्जने विपिने शून्ये पशुपक्षिगणावृते[1] ॥ ४ ॥
निर्भये[2] सुन्दरे देशे दुर्भिक्षादिविवर्जिते ।
कृत्वा दृढासनं मन्त्री योगमार्गपरो भवेत् ॥ ५ ॥
तदा योगी भवेत् क्षिप्रं मम शास्त्रानुसारतः ।
पूर्वदले वकारं च ध्यायेद्योगी सदा सुखी ॥ ६ ॥
सुवर्णवर्णं हितकारिणं नृणां
सत्त्वोद्भवं पूर्वदलस्थितं सुखम् ।
मत्तप्रियं वारणमत्तमन्दिरं
मन्त्रार्थकं शीतलरूपधारिणम् ॥ ७ ॥
योगानुभावाश्रयकालमन्दिरं
तेजोमयं सिद्धिसमृद्धिदं गुरुम् ।
आद्याक्षरं वं वरभावसाधनं
नारायणं भावनपञ्चमच्युतम् ॥ ८ ॥

---

१. गणान्विते ग० ।
२. निर्भरे ग० ।

ध्यायेत् शकारं कनकाचलप्रभं
गौरीपतेः श्रीकरणं पुराणम् ।
[1]लक्ष्मीप्रियं सर्वसुवर्णवेष्टितं
सदा मुदा दक्षिणपत्रमुत्तमम्[2] ॥ ९ ॥
षमीश्वरीषष्ठगुणावतंसं
षट्पद्मसंभेदनकारकं परम् ।
परापरस्थाननिवासिनं गुणं
[3]हेमाचलं पत्रमहं भजामि ॥ १० ॥
सकारमानन्दरसं प्रियंप्रियं[4]
ध्याये महाहाटकपर्वताग्रकम् ।
ध्याये मुदाहं धननाथमन्दिरे
मायामहामोहविनाशनं[5] जयम् ॥ ११ ॥
चतुर्भुजं भुजयुगं अष्टादशभुजन्तथा ।
अष्टहस्तं सदा ध्यायेन्मन्त्री भावविशुद्धये ॥ १२ ॥
ततो ध्यायेत् कर्णिकायां मध्यदेशे मनोरमम् ।
स्वयम्भूलिङ्गपरमं योगिनां योगसिद्धिदम् ॥ १३ ॥
प्रातः सूर्यसमप्रख्यं तडित्कोटिसमप्रभम् ।
तं संवेष्ट्य महादेवी कुण्डली योगदायिनी ॥ १४ ॥
सार्धत्रिवेष्टनग्रन्थियुता सा मुक्तिदायिनी ।
निद्रिता सा सदाभद्रा[6] महापातकघातिनी ॥ १५ ॥

---

१. लक्ष्मीमयम् ग० ।
२. पद्मपावनम् ग० ।
३. मावलच्छन्दमहम् ग० ।
४. प्रियाप्रियम् ग० ।
५. विनाशम् ग० ।
६. सापदा भद्र इति ग० ।

निरन्तरं तस्य शीर्षे विभाति शशधारिणी ।
तत्श्वासधारिणी नित्या जगतांप्राणधारिणी ॥ १६ ॥
[1]सुप्ता सर्पसमा भ्रान्ति यथार्कशतकोटयः ।
[2]यदा लिगं सा विहाय [3]प्राकूतिष्ठति महापथे ॥ १७ ॥
तदा सिद्धो भवेद्योगी ध्यानधारणकृत् शुचिः ।
सदानन्दमयो नित्यश्चैतन्यकुण्डली यदा ॥ १८ ॥
सुषुम्ना नाडिकामध्ये [4]महासूक्ष्मविले स्मितः ।
मनो निधाय यो योगी श्वासमार्गपरोभवेत् ॥ १९ ॥
तदा सा द्रवति क्षिप्रं चैतन्या कुण्डली [5]परा ।
पृष्टदेशे [6]महादण्डे मेरुमूले महाप्रभे ॥ २० ॥
मूलादिब्रह्मरन्ध्राधः सदास्थिरूपधारकः ।
कनकाचलनाम्ना च [7]प्रतिभाति जगत्रये ॥ २१ ॥
तन्मध्ये परमा सूक्ष्मा सुषुम्ना वहुरूपिणी ।
मनोमुनिस्वरूपा च मनश्चैतन्यकारिणी ॥ २२ ॥
तन्मध्ये भाति वज्राख्या [8]घोरपातकनाशिनी ।
सिद्धिदाभावविज्ञानां मोक्षदा कुलरूपिणाम् ॥ २३ ॥
तन्मध्ये चित्रिणी देवी देवताप्रीतिवर्द्धिनी ।
हितैषिणी महामाया [9]कालजालविनाशिनी ॥ २४ ॥

---

१. सप्ता इति ग० ।
२. यदासिदिदम् इति क० ।
३. प्रगच्छति इति क० ।
४. सूक्ष्मा विलोहिता इति ग० ।
५. भवेत् इति ग० ।
६. महाकुण्डे इति ग० ।
७. मुणद्वये इति ग० ।
८. घातिनी ग० ।
९. विकाशिनी क० ।

सा पाति सकलान् चक्रान् पद्मरूपधरान् परान् ।
त्रैलोक्यमण्डलगतान् साक्षादमृतविग्रहान् ॥ २५ ॥
स्वयं दधार सा देवी चित्राख्या चारुतेजसी ।
तले पृष्ठे ऊर्द्ध्वदेशे शीर्षे वक्षसि नाभिषु ॥ २६ ॥
कण्ठकूपे चक्रमध्ये ब्रह्माण्डं पाति सर्वदा ।
शरीरात्मकमीशार्थं त्रैलोक्यं सचराचरम् ॥ २७ ॥
[1]चित्रासुग्रथनं पद्मं [2]योऽवभाव्यति भावकः ।
भावेन लभ्यते योगं भावेन भाव्यते शिवः ॥ २८ ॥
भावेन शक्तिमाप्नोति तस्माद्भावं समाश्रयेत् ।
षट्चक्रभावनां कृत्वा महायोगी भवेन्नरः ॥ २९ ॥
सर्वधर्मान्वितो भूत्वा राजते [3]क्षितिमण्डले ।
सर्वत्रगामी स भवेत् यदि पद्मे मनोलयम् ॥ ३० ॥
पद्मभावनमात्रेण आकाशसदृशो भवेत् ।
महापद्मे मनो दत्त्वा महाभक्तो भवेद्ध्रुवम् ॥ ३१ ॥
यदि भक्तो भवेन्नाथ तदा मुक्तो न संशयः ।
यदि मुक्तो महीमध्ये ध्यानयोगपरायणः ॥ ३२ ॥
तदा कालपरां ज्ञात्वा[4] सर्वदर्शी च सर्ववित् ।
सर्वज्ञः सर्वतोभद्रो भवतीति न संशयः ॥ ३३ ॥
चित्रिणी मध्यदेशे च ब्रह्मनाडीं [5]महाप्रभा ।
सर्वसिद्धिप्रदानित्या सा देवी सकला कला ॥ ३४ ॥
व्योमरूपा भगवती सर्वचैतन्यरूपिणी ।
एकरूपं परं ब्रह्म ब्रह्मातीतं जगत्त्रयम् ॥ ३५ ॥

---

१. चित्राख्या नयनम् इति ग०
२. यो विभाव्यति भावुकः इति ग०
३. स्थिति इति ग०
४. कृत्वा इति ग०
५. महत्प्रभा इति ग०

यदा जगत्त्रयं ब्रह्म तदा [1]सत्त्वालयं प्रभो ।
महालये मनो दत्त्वा सर्वकालजयो भवेत् ॥ ३६ ॥
मृत्युञ्जयो महावीरो [2]महाच्छत्रो महागतिः ।
सर्वव्यापकरूपेण ईश्वरत्त्वेन भाषते ॥ ३७ ॥
सर्वदा मन्त्रसंभूतो विशालाक्षः प्रसन्नधीः ।
एकस्थानस्थितो याति नक्षत्रं स हि शंकर ॥ ३८ ॥
एकदृष्टिः क्षुधातृष्णारहितो वाक्यवर्जितः ।
निराकारे मनो दद्यात्तदा [3]महानयं प्रभो ॥ ३९ ॥
किन्तु [4]नाथाज्ञानिनां हि नापि नापि [5]महालयः ।
महाप्रलय एवं हि योगिनां नात्र संशयः ॥ ४० ॥
यदा मनोयोगविशुद्धये मनोलयं यः कुरुतेऽप्यहर्निशम् ।
स एव मोक्षोगुणसिन्धुरूपीकालाग्निरूपी निजदैवदैवतः ॥४१॥
महामनोयोगविकारवर्जितः [6]कामक्रियाकाण्डविशुद्धमण्डितः ।
हितो गतीनां मतिमान्निरस्तो महालयस्थोऽमर एव भक्तः॥४२॥
मानी विचारार्थविवेकचित्तश्चातुर्यचित्तोल्वणभावविवर्जितः ।
योगी भवेत्साधकचक्रवर्ती व्योमाम्बुजे चित्तविसर्ज्जनं सदा ।४३॥

इति श्रीरुद्रयामले उत्तरतन्त्रेमहातन्त्रोद्दीपने षट्चक्रप्रकाशे
भैरवीभैरवसम्वादे महाप्रलयनाभो
एकोनत्रिंशः पटलः[7] ॥



१. महात्रयम् इति ग०
२. क्षेत्रोमहापतिः इति ग०
३. महात्रयः इति ग०
४. नात्र प्राणिनां हि इति ग०
५. महात्ययः इति ग०
६. सुकण्ड्डुममण्डितः ? ( सुकाण्डमण्डितः ) इति क०
७. एकत्रिंशः इति क०

# त्रिंशः पटलः

आनन्दभैरवी उवाच—

अथ वक्ष्ये महाकाल मूलपद्मविवेचनम् ।
यत् कृत्वा अमरो भूत्वा वसेत् कालचतुष्टयम् ॥ १ ॥
अथ षट्चक्रभेदार्थं भेदिनीशक्तिमाश्रयेत् ।
छेदिनीं सर्वग्रन्थीनां योगिनीं समुपाश्रयेत् ॥ २ ॥
तस्या मन्त्रान् प्रवक्ष्यामि येन सिद्धो भवेन्नरः ।
आदौ शृणु महामन्त्रं भेदिन्याः [1]परं मनुम् ॥ ३ ॥
[2]आदौ कालीं [3]समुत्कृत्य ब्रह्ममन्त्रं ततः परम् ।
देव्याः प्रणवमुद्धृत्य भेदिनी तदनन्तरम् ॥ ४ ॥
ततो हि मम गृह्णीयात् प्रापय द्वयमेव च ।
चित्तचश्रीशब्दान्ते मां रक्ष युग्ममेव च ॥ ५ ॥
भेदिनी ममशब्दान्ते अकालमरणं हर ।
[4]हर युग्मं स्वं महापापं नमो नमोऽग्निजायया ॥ ६ ॥
एतन्मन्त्रं जपेत्तत्र डाकिनीरक्षसि प्रभो ।
आदौ प्रणवमुद्धृत्य ब्रह्ममन्त्रं ततः परम् ॥ ७ ॥
[5]शांभवीति ततश्चोक्त्वा ब्राह्मणीति पदन्ततः ।
मनोनिवेशं [6]कुरुते तारयेति [7]द्विधापदम् ॥ ८ ॥

---

१. प्रबलम् इति ग०

२. आकालीम् इति ग०

३. समुपाकृत्य इति ग०

४. हरस्व इति ग०

५. समुद्धत इति क०

६. कुरु मे इति क०

७. भावयेति द्विधापदम् इति क०

छेदिनीपदमुद्धृत्य ममभानसशब्दतः ।
महान्धकारमुद्धृत्य छेदयेति द्विधापदम् ॥ ९ ॥
स्वाहान्तं मनुमुद्धृत्य जपेन्मूलाम्बुजे सुधीः ।
एतन्मन्त्रप्रसादेन जीवन्मुक्तो भवेन्नरः ॥ १० ॥
तथा स्त्रीयोगिनीमन्त्रं जपेत्तत्रैव शंकर ।
ॐ घोररूपिणिपदं[1] सर्वव्यापिनि शंकर ॥ ११ ॥
महायोगिनि मे पापं शोकं रोगं हरेति च ।
विपक्षं छेदयेत्युक्त्वा योगं मय्यर्पय द्वयम् ॥ १२ ॥
स्वाहान्तं मनुमुद्धृत्य जपाद्योगी भवेन्नरः ।
खेचरत्त्वं समाप्नोति योगाभ्यासेन योगिराट् ॥ १३ ॥
डाकिनीं ब्रह्मणा युक्तां मूले ध्यात्वा पुनः पुनः ।
जपेन्मन्त्रं सदायोगी ब्रह्ममन्त्रेण योगवित् ॥ १४ ॥
ब्रह्ममन्त्रं प्रवक्ष्यामि तज्जापेनापि योगिराट् ।
ब्रह्ममन्त्रप्रसादेन जडो योगी न संशयः ॥ १५ ॥
प्रणवत्रयमुद्धृत्य दीर्घप्रणवयुग्मकम् ।
तदन्ते प्रणवत्रीणि ब्रह्म ब्रह्म त्रयं त्रयम् ॥ १६ ॥
सर्वसिद्धिपदस्यान्ते पालयेति च मां पदम् ।
सत्त्वं गुणो रक्ष रक्ष मायास्वाहापदं जपेत् ॥ १७ ॥
डाकिनीमन्त्रराजञ्च शृणुष्व परमेश्वर ।
यज्जप्त्वा डाकिनी वश्या त्रैलोक्यस्थितिपालकाः ॥ १८ ॥
यो जपेत् डाकिनीमन्त्रं चैतन्या कुण्डली झटित् ।
अनायासेन सिद्धिः स्यात् परमात्मप्रदर्शनम् ॥ १९ ॥
मायात्रयं समुद्धृत्य प्रणवैकं ततः परम् ।
डाकिन्यन्ते महाशब्दं डाकिन्यम्बपदन्ततः ॥ २० ॥
पुनः प्रणवमुद्धृत्य मायात्रयं ततः परम् ।
ममयोगसिद्धिमन्ते साधयेति द्विधापदम् ॥ २१ ॥

१. पदञ्चोक्त्वा सर्वं व्यापिनि शाङ्करि इति क० ।

मन्नुमुद्धृत्य देवेशि जपाद्योगी भवेज्जडः ।
जप्त्वा सम्पूजयेन्मन्त्री पुरश्चरणसिद्धये ॥२२॥

सर्वत्रचित्तसाम्येन[1] द्रव्यादिविविधानि च ।
पूजयित्वा मूलपद्मे चित्तोपकरणेन च ॥२३॥

ततो मानसजापञ्च स्तोत्रञ्च [2]कालिपावनम् ।
पठित्वा योगिराट् भूत्वा वसेत् षट्चक्रवेश्मनि ॥२४॥

शक्तियुक्तं विधिं यस्तु स्तौति नित्यं महेश्वर ।
तस्यैव पालनार्थाय मम यन्त्रं महीतले ॥२५॥

तत् स्तोत्रं शृणु योगार्थं सावधानावधारय ।
एतत्स्तोत्रप्रसादेन महाकालवशो भवेत् ॥२६॥

ब्रह्माणं हंस[3]संघायुतशरणवदावाहनं देववक्त्रं ।
विद्यादानैकहेतुं [4]तिमिचरनयनाग्नीन्दुफुल्लारविन्दम् ॥

वागीशं वाग्गतिस्थं मतिमतविमलं वालार्कं चारुवर्णम् ।
[6]डाकिन्यालिङ्गितं तं सुरनरवरदं भावयेन्मूलपद्मे ॥२७॥

नित्यां ब्रह्मपरायणां [7]सुखमयीं ध्यायेन्मुदा डाकिनीम् ।
रक्तां गच्छविमोहिनीं कुलपथे ज्ञानाकुलज्ञानिनीम् ॥

मूलाम्भोरुहमध्यदेशनिकटे भूविम्वमध्ये प्रभाम् ।
हेतुस्थां गतिमोहिनीं श्रुतिभुजां विद्यां भवाह्लादिनीम् ॥२८॥

---

१. माल्येन इति क० ।

२. पारणम् इति ग० ।

३. शववरद वाहनं वेदवक्त्रम् इति क० ।

४. तिमिरहन इति ग० ।

५. वाग्दति संमति इति ग० ।

६. डाकिन्यालिङ्गितं तं स्वरनव जसं भावयेन्मूलपद्मम् इति ग० ।

७. त्रिनयनाम् इति ग० ।

विद्यावास्तवमालया गलतलप्रालम्बशोभाकराम् ।
ध्यात्वा मूलनिकेतने निजकुले यः स्तौति भक्त्या सुधीः ॥
नानाकारविकारसारकिरणां[1] कर्त्रीं विधो योगिनाम्[2] ।
मुख्यां मुख्यजनस्थितां स्थितिमतिं सत्त्वाश्रितामाश्रये ॥ २९ ॥
या देवी नवडाकिनी स्वरमणी विज्ञानिनी मोहिनी ।
मां पातु प्रियकामिनी भवविधेरानन्दसिन्धूद्भवा ॥
मे मूलं गुणभासिनी प्रचयतु श्रीःकीर्त्तिचक्रं हि मां ।
नित्या सिद्धिगुणोदया सुरदया श्रीसंज्ञया मोहिता ॥ ३० ॥
तन्मध्ये परमाकला कुलफला [3]बाणप्रकाण्डाकरा ।
राका[4] राशषसादशा शशिघटा लोलामला कोमला[5] ॥
सा माता नवमालिनी मम कुलं मूलाम्बुजं सर्वदा ।
सा देवी लवराकिणी कलिफलोल्लासैकबीजान्तरा ॥ ३१ ॥
धात्री धैर्यवती सती मधुमती विद्यावती भारती ।
कल्याणी कुलकन्यकाधरनरारूपा हि सूक्ष्मास्पदा ॥
मोक्षस्था स्थितिपूजिता स्थितिगता माता [6]शुभा योगिनाम् ।
नौमि श्रीभविकाशयां शमनगां गीतोद्गतां गोपनाम् ॥ ३२ ॥
कल्केशीं कुलपण्डितां कुलपथग्रन्थिक्रियाच्छेदिनीम् ।
[7]नित्यां तां गुणपण्डितां प्रचपलां मालाशताकारुणाम् ॥

---

१. करुणाम् इति ग० ।
२. मार्गिनीम् इति ग० ।
३. रत्नप्रकारान्तरा इति ग० ।
४. शका राशषसादशा इति ग० ।
५. कोमना इति ग० ।
६. सुता इति ग० ।
७. नित्याशम इति ग० ।

विद्यां चण्डगुणोदयां समुदयां त्रैलोक्यरक्षाक्षराम् ।
ब्रह्मज्ञाननिवासिनीं [1]सितशुभानन्दैकबीजाद्गताम्[2] ।३३॥
गीतार्थानुभवप्रियां [3]सकलया सिद्धप्रभापाटलाम्
कामाख्यां प्रभजामि जन्मनिलयां हेतुप्रियां सत्क्रियाम् ।
सिद्धौ साधनतत्परं परतरं साकाररूपायिताम् ॥ ३४ ॥
ब्रह्मज्ञानं निदानं गुणनिधिनयनं कारणानन्दयानम् ।
ब्रह्माणं ब्रह्मबीजं रजनिजयजनं यागकार्यानुरागम् ॥ ३५ ॥
शोकातीतं विनीतं नरजलवचनं सर्वविद्याविधिज्ञम् ।
सारात् सारं तरुं तं [4]सकलतिमिरहं हंसगं पूजयामि ॥ ३६ ॥
एतत्सम्बन्धमार्गं [5]नवनवदलगं वेदवेदाङ्गविज्ञम् ।
मूलाम्भोजप्रकाशं तरुणरविशशिप्रोन्नताकारसारम्[6] ॥ ३७ ॥
भावाख्यं [7]भावसिद्धं जयजयदविधिं ध्यानगम्यं पुराणम् ।
पाराख्यं पारणायं परजनजनितं ब्रह्मरूपं भजामि ॥ ३८ ॥
डाकिनीसहितं ब्रह्मध्यानं कृत्वा पठेत् स्तवम् ।
पठनाद् धारणान्मन्त्री योगिनां संगतिर्भवेत् ॥ ३९ ॥

---

१. मितसुता इति क० ।
२. बीजामताम् इति ग० ।
३. सकल सिद्धान्त इति क० ।
४. तिमिहरहरम् इति ग० ।
५. नव नववदनं वेद वेदान्त विज्ञम् इति क० ।
६. प्रोल्लता इति क० ।
७. भाव सिन्धुम् इति क० ।

एतत्पठनमात्रेण महापातकनाशनम् ।
एकरूपं [1]जगन्नाथं विशालनयनाम्बुजम् ॥ ४० ॥
[2]एवं ध्यात्वा पठेत् स्तोत्रं पठित्वा योगिराड् भवेत् ॥ ४१ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोदीपने सिद्धमन्त्रप्रकरणे षट्चक्रसिद्धिसाधने भैरवीभैरवसंवादे [3]डाकिनीस्तोत्रं नाम त्रिंशः पटलः ॥



१. पश्यतीह स तनः परमो भवेत् इति क० ।

२. बालरूप सदा ध्यायेत् ब्रह्माणं तेजसा कुलम् ।
डाकिनी शक्ति सहितं परमात्मानमीश्वरम् ॥
चतुर्मुखं महाकायं वनमालाविभूषितम् ।
नवीनं नवरूपाढयं लोकानामभिलाषदम् ॥
चतुर्भुजं महापुंसगामिन नित्ययोगिनम् ।
स्रष्टारं तारकं भव्यं भगमालावृतं विभुम् ॥
सोमसूर्यप्रतीकाशं कुण्डलीशक्तिसेवकम् ।
पृथ्वीशादिबीजाङ्कविशालनयनाम्बुजम् ॥ इति क० ।

३. द्वात्रिशं इति क० ।

# एकत्रिंशः पटलः

आनन्दभैरवी उवाच —

अथ नाथ प्रवक्ष्यामि भेदिन्याः साधनं परम् ।
येन साधनमात्रेण योगी स्यात् कलि[1]कालहा ॥ १ ॥
कलिकाले महायोगं साधय त्वं महाप्रभो ।
यदि न साधितः कालः स कालो देहभक्षकः ॥ २ ॥
भेदिनीसाधनेनैव ग्रन्थीनां भेदनं भवेत् ।
डाकिनीहृदये ध्यायेत् परमानन्दरूपिणीम् ॥ ३ ॥
अष्टहस्तां विशालाक्षीं शशांकावयवाङ्किताम् ।
त्रैलोक्यमोहिनीं विद्यां भयदां वरदां सताम् ॥ ४ ॥
शुक्लवर्णां त्रिनयनां चारुरूपमनोहराम् ।
ध्यात्वा मूलाम्बुजे योगी पाद्याद्यैः परिपूजयेत् ॥ ५ ॥
तत्र मनोलयं कृत्वा योगी भवति भूतले ।
यदा मनोलयं याति तदा तस्याः स्तवं पठेत् ॥ ६ ॥
स्तोत्रं पठनमात्रेण सर्वसत्त्वाश्रितो भवेत् ।
ध्यानमाकृत्य प्रपठेत् सर्वसिद्धिमयो भवेत् ॥ ७ ॥

या भेदिनी सकलग्रन्थिविनाशनानां
धर्मान्तरे सकलशत्रुविनाशनस्था ।
सा मे सदा प्रतिदिनं [2]परिपातु देहं
[3]कालात्मिका भगवती [4]शुभकार्यकर्त्री ॥ ८ ॥

---

१. कलिकालजालहः इति ग० ।

२. प्रतिदिनम् इति ग० ।

३. कालार्थिका इति ग० ।

४. सुत इति ग० ।

या कान्ताकरुणामयी त्रिजगतामानन्दसिद्धिस्थिता
[1]नित्या सा परिपालिका कुलकला नीला [2]मलाकोमला ।
वाणी सिद्धिकरी कृतार्थनिगडे शीघ्रोदया शांकरी
संज्ञाभेदनभेदिका [3]शुभकरी वेदान्तसिद्धान्तदा ।। ८ ।।
वाणी बाला कुलाला कलकलचरणा यामला संख्यमाला ।
हेरम्भालान्तराला कुलकमलचला चञ्चला देहकाला ॥ ९ ॥
भेदाख्या [4]भेद्यभेदा वग्नदनिनदा नादबिन्दुप्रकाशा ।
सा मे शीर्षं ललाटं मुखहृदयकटिं मुख्यपद्मं प्रपायात् ॥ १० ॥
काञ्चीपीठप्रकाशा निजपदविलया योगिनीनेत्रवक्षा ।
[5]नातियोगप्रकाश्या चरुशतघटिता घोरसंहारकारा ॥ ११ ॥
ब्रह्मानन्दस्वरूपा विगतिमतिहरा हीरका भाति नेत्रा ।
हारश्रेण्यादिभूषा शशिशतकिरणा पातु मां भेद्यदेहम् ॥ १२ ॥
या भेदिनीसकलपापरिपुप्रियाणां
स्वर्गापवर्गविरला बगलामुखी सा ।
मे पातु देहघटितं [6]सकलेप्सितार्थं
भावप्रभावपटला सहदेहसंस्था ॥ १३ ॥
कामाश्रिता विविधदोषविनाशलेषा
सौन्दर्यवेशकरणी क्रतुकर्मरक्षा ।
दीक्षा सतां मतिमतां निजयोगदात्री
सा मे सदा सकलदेहमिहा[7]शु भेद्या ॥ १४ ॥

---

१. स्थित्या इति ग० ।
२. कला इति ग० ।
३. सुवरदा इति ग० ।
४. भेदभेद्या इति ग० ।
५. नेति इति ग० ।
६. सकलेन्द्रियार्थम् इति ग० ।
७. मिहाश्वमेध्या इति ग० ।

कान्ता शान्तगुणोदया ममधनं देहस्य नित्याशया
पायात् श्रीकुलदैवतस्य जयदा सा योगसारं परम् ।
साक्षादीश्वरपूजिता समुचिता चित्तार्थिता चार्थिना
यन्मे घोरतरे जये निजकुले कालाकुले व्याकुले ॥ १५ ॥
भेदाभेदविवर्जिता सुरवरश्रीहस्तपद्मार्चिते
मे मेढ्रं खलु लिंगमूलकमलं कालप्रिया पातु सा ।
सप्तस्वर्गतलं ममैत्रवपुषा मिथ्यावमानापहा
[1]हेडम्बासुरसुन्दरप्रियवती हेमावती भारती ॥ १६ ॥
एतत् स्तोत्रं पठित्वा यः स्तौति मूलाम्बुजे च माम् ।
स एव योगमाप्नोति स भवेद् योगिवल्लभः ॥ १७ ॥
मनः स्थिरं भवेत् क्षिप्रं राजत्वं लभते झटित् ।
अनायासेन सिद्धिः स्यात् तस्य वायुर्वशो भवेत् ॥ १८ ॥
योगिनीनां दर्शनं हि अनायासेन लभ्यते ।
भावसिन्धुयुतो भूत्वा विचरेदमरो यथा ॥ १९ ॥
मूलपद्मे वसेद्देवी मूलाम्भोजप्रकाशिनी ।
मालती मालवी मौना मालिनी च मनोहरा ॥ २० ॥
[2]मानसी मदना मान्या मुद्रामैथुनतत्परा ।
मेरुस्था माद्यकुसुमा मण्डिता मण्डलस्थिता ॥ २१ ॥
मनःस्थैर्यकरी देवी भाव्यते यैः कुमारकैः ।
अकस्मात् सिद्धिमाप्नोति कालेन [3]परमेश्वर ॥ २२ ॥

---

१. हेतुम्बाम्बुद सुन्दर इति क० ।
२. मणिमन्त्रिमनक्षेत्रा मारणामारणापहा ।
मलहा मङ्गला माला मीनस्था मांसमोहिनी ।
मदिराष्टादशभुजा मोध्या मेध्या मनोहरा ॥ इति क० अ० पाठः ।
३. परमाश्रव इति ग० ।

अथ वक्ष्ये महादेव्याः छेदिन्याः [1]स्तवमुत्तमम् ।
[2]छेत्ता त्वं सर्वग्रन्थीनां यत्प्रसाद् यतीश्वरः ॥ २३ ॥
यत्प्रसादादनन्तो हि योगी संसारमण्डले ॥ २४ ॥
देशानन्दा सकलगुणदा छेदिनी छेदनस्था
हव्यस्था सा विभवनिरता या निधिस्था निशायाम् ।
सा मे नित्यं कुलकमलगा गोपनीया विधिज्ञा
[3]श्रीवागेशी गगनवसना सर्वयोगं प्रपायात् ॥ २५ ॥
कामानन्दा [4]मदननिरता भाविता भावसिन्धौ
[5]कामानन्दोद्भवरसवती योगियोगस्थधात्री[6] ।
सा मे धौतं प्रकुरु वपुषो
धर्मपुञ्जं प्रपायात् ॥ २६ ॥
कालाकालं कमलकलिकावासिनी कालिका मे
ग्रन्थिच्छेदं स्थिरगृहगता गात्रनाडीपथस्था ।
वक्त्राम्भोजे वचनमधुरं धारयन्ती जनानाम्
सा मे रन्ध्रं मम रुचिरतनोः पातु पञ्चानना या ॥ २७ ॥
योगांगस्था स्थितिलयविभवा लोमकूपाम्बुजस्था
माता गौरी गिरिपतिसुता भासुरास्त्रप्रदीप्ता ।
सम्पायान्मे हृदयविवरं छेदिनीमूलपूरे
कैलासस्था ममनुगिरिं पातु रुद्रप्रसादा[7] ॥ २८ ॥

---

१. सुरसत्तम इति ग० ।
२. छित्ता इति ग० ।
३. श्रीपालेशी इति ग० ।
४. निवृता इति ग० ।
५. वसनरता इति ग० ।
६. धात्रि इति ग० ।
७. फेरुप्रणादा इति ग० ।

नादान्तःस्था [1]मनगुणधरणासन्नसिद्धान्तपारा
भोगानन्दा भगनगबिले काशयन्ती जनानाम् ।
विद्याविद्या विविधगगना छेदिनी छन्नरूपा
सा सर्वान्तःकरणनिलया लाकिनी प्रेमभावा ॥ ३० ॥

योगं स्वर्गेऽर्पयसि मनसि प्रेमभावं परेशे
या या यात्रा त्रिविधकरणा कारणा सर्वजन्तोः ।
माता ज्ञात्री गणेशे गृहिगणसदया सर्वकर्त्री मनो मे
रच्या रक्षाक्षरगतकला[2] केवला निष्कला या ॥ ३१ ॥

सा योगेन्द्रा समवतु मुदा मे गुदं कुण्डलिन्यां
[3]जह्नोः कन्या कमलनिलया राकिणी प्रेमभावान् ।
मोक्षप्राणान् तपनरहिता पातु मे वेदवक्त्रा
सिद्धा मूलाम्बुजदलगता पावनी पातु तुण्डम् ॥ ३२ ॥

हेरम्बाज्ञा प्रलयघटिता काकिनी क्रोधरूपा ॥ ३३ ॥

यदि भजति कुलीनः कामिनीं क्रोधविद्यां
स भवति परयोगी छेदिनीस्तोत्रपाठात् ।
सकलदुरितनाशः क्षालनादिप्रसिद्धिः ।
सकलजनवशः स्यात् तस्य नित्यं सुराज्यम् ॥ ३४ ॥

एतत् स्तोत्रं पठेद्विद्वान् महासंयमतत्परः ।
मूले मनः स्थिरो याति [6]सर्वानिष्टविनाशनः ॥ ३५ ॥

---

१. धरा सत्त्व इति क० ।
२. गणा इति ग० ।
३. मूलेऽर्पय पयसि मे खेलनेकौ सुवायौ इति क० ।
४. कमला इति ग० ।
५. भक्तः इति ग० ।
६. सर्वावृत इति क० ।

सर्वसिद्धिः करे तस्य यो भावं समुपाश्रयेत् ।
शृणुष्व परमानन्द रससागरसंभव ॥ ३६ ॥

योगिनीस्तोत्रसारं च श्रवणाद्धारणाद् यतिः ।
अप्रकाश्यमिदं [1]रत्नं नृणामिष्टफलप्रदम् ॥ ३७ ॥

यस्य विज्ञानमात्रेण शिवो भवति साधकः ॥ ३८ ॥

कङ्काली कुलपण्डिता कुलकला कालानला श्यामला
योगेन्द्रेन्द्रसुराज्यनाथयजिताऽन्या[2] योगिनी मोक्षदा ।
मामेकं कुजडं सुखास्तमधनं हीनं च दीनं खलं
यद्येवंपरिपालनं करोषि नियतं त्वं त्राहि तामाश्रये ॥ ३९ ॥

यज्ञेशी शशिशेखरा स्वमपरा हेरम्बयोगास्पदा
दात्री दानपरा हराहरिहराऽघोरामराशंकरा ।
भद्रे [3]बुद्धिविहीन देहजडितं पूजा जपावर्जितं
[4]मामेकाभमकिञ्चनं ? यदि सरत्त्वं योगिनी रक्षसि ॥ ४० ॥

भाव्या भावनतत्परस्य करणा सा चारणा योगिनी[5]
चन्द्रस्था निजनाथदेहसुगता मन्दारमालावृता[6] ।
योगेशी कुलयोगिनी त्वममरा धाराधराच्छादिनी
योगेन्द्रोत्सवरागयागजडिता या [7]मातृसिद्धिस्थिता ॥ ४१ ॥

---

१. वर्णम् इति क० ।
२. सा योगिनी इति क० ।
३. विहन्य इति ग० ।
४. मासैकाथंक किञ्चनम् इति ग० ।
५. भोगिनी इति क० ।
६. च्युता इति ग० ।
७. मोह सिद्धिस्थिता इति ग० ।

त्वं [1]मां पाहि परेश्वरी सुरतरी [2]श्रीभास्करी योगगं
[3]मायापाशविबन्धनं तव कथालापामृतावर्जितम् ।
नानाधर्मविवर्जितं कलिकुले संव्याकुलालक्षणं
[4]मय्येके यदि दृष्टिपातकमला[5] तत् केवलं [6]मे बलम् ॥ ४२ ॥
मायामयी हृदि यदा मम चित्तलग्नं[7]
राज्यं तदा किमु फलं फलसाधनं वा ।
इत्याशया भगवती[8] मम शक्तिदेवी
भाति प्रिये श्रुतिदले मुखरार्पणं ते ॥ ४३ ॥
या योगिनी सकलयोगसुमन्त्रणाढ्या
देवी [9]महद्गुणमयी करुणानिधाना ।
सा मे भयं हरतु वारणमत्तचित्ता
संहारिणी भवतु सोदरवक्षहारा[10] ॥ ४४ ॥
यदि पठति मनोज्ञो गोरसामीश्वरं यो[11]
वशयति रिपुवर्गं क्रोधपुञ्जं विहन्ति ।
भुवनपवनभक्षो भावुकः स्यात् सुसंगी
रतिपतिगुणतुल्यो रामचन्द्रो यथेशः ॥ ४५ ॥

---

१. हं सं इति ग० ।
२. वराही सा भास्करी इति ग० ।
३. योगं पाशविबन्धनम् इति ग० ।
४. यद्योके इति ग० ।
५. कमला इति ग० ।
६. सेवनम् इति ग० ।
७. मग्नम् इति ग० ।
८. बलवती इति ग० ।
९. रुण्या सहद्गणमयी (?) इति ग० ।
१०. रत्न इति ग० ।
११. मनोगो गोरसानी सुरज्ञो इति ग० ।

एतत्स्तोत्रं पठेद्यस्तु स भक्तो भवति प्रियः ।
मूलपद्मे स्थिरो भूत्वा षट्चक्रे राज्यमाप्नुयात् ॥ ४६ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्रप्रकाशे सिद्धिमन्त्र-
प्रकरणे भैरवभैरवीसंवादे मेदिन्यादिस्तोत्रं नाम
[1]एकत्रिंशः पटलः ॥



१. त्रयस्त्रिंशत् क० ।

# द्वात्रिंशः पटलः

आनन्दभैरवी उवाच—

अथ कान्त प्रवक्ष्यामि शृणुष्व मम तत्त्वतः ।
शक्तिः कुण्डलिनी देवी सर्वभेदनभेदिनी ॥ १ ॥
कलिकल्मषहन्त्री च जगतां मोक्षदायिनी ।
तस्याः स्तोत्रं तथा ध्यानं न्यासं मन्त्रं शृणु प्रभो ॥ २ ॥
यस्य विज्ञानमात्रेण मूलपद्मे मनोलयः ।
चैतन्यानन्दनिरतो भवेत् कुण्डलिसंगमात् ॥ ३ ॥
आकाशगामिनीं सिद्धिं ददाति कुण्डली[1] भृशम् ।
अमृतानन्दरूपाभ्यां करोषि पालनं नृणाम् ॥ ४ ॥
श्वासोच्छ्वासकलाभ्यां च शरीरं त्रिगुणात्मकम् ।
पञ्चभूतावृता नित्यं [2]पञ्चानिला भवेद् ध्रुवम् ॥ ५ ॥
[3]कोटिसूर्यप्रतीकाशां निरालम्बां विभावयेत् ।
सर्वस्थितां ज्ञानरूपां श्वासोच्छ्वासनिवासिनीम् ॥ ६ ॥
स्वयम्भूकुसुमोत्पन्नां ध्यानज्ञानप्रकाशिनीम् ।
मोक्षदां शक्तिदां नित्यां नित्यज्ञानस्वरूपिणीम् ॥ ७ ॥
लोलां लीलाधरां सर्वां शुद्धज्ञानप्रकाशिनीम् ।
कोटिकालानलसमां विद्युत्कोटिमहौजसाम् ॥ ॥ ८ ॥

---

१. कुण्डलिन्यहम् इति ग० ।

२. नानाशक्तिर्भवेद् ध्रुवम् इति ग० ।

३. पाल्यतेऽखिललोकानां संसारस्थितये मया ।
कुण्डल्या धारणं तत्र ब्रह्मणो निकटे घटे ॥
कुण्डल्या धारणं कृत्वा भोगी जितेन्द्रियो भवेत् ।
परिपालनशक्तिःस्यान्नाशक्तिर्भवेद् ध्रुवम् ॥
इति क० पु० अधि० पा०

तेजसा व्याप्तकिरणां मूलादूर्ध्वप्रकाशिनीम् ।
अष्टलोकप्रकाशाढ्यां फुल्लेन्दीवरलोचनाम् ॥ ९ ॥
सर्वमुखीं सर्वहस्तां सर्वपादाम्बुजस्थिताम् ।
मूलादिब्रह्मरन्ध्रान्तस्थानलोकप्रकाशिनीम् ॥ १० ॥
त्रिभाषां सर्वभक्षां च श्वासनिर्गमपालिनीम् ।
ललितां सुन्दरीं [1]नीलां कुण्डलीं कुण्डलाकृतिम् ॥ ११ ॥
[2]अभ्रूमण्डलबाह्यस्थां वाह्यज्ञानप्रकाशिनीम् ।
नागिनीं नागभूषाढ्यां भयानककलेवराम् ॥ १२ ॥
योगिज्ञेयां शुद्धरूपां विरलामूर्ध्वगामिनीम् ।
एवं ध्यात्वा मूलपद्मे कुण्डलीं परदेवताम् ॥ १३ ॥
भावसिद्धिर्भवेत् क्षिप्रं कुण्डलीभावनादिह ।
ततो मानसजापं हि मानसं होमतर्पणम् ॥ १४ ॥
अभिषेकं मुदा कृत्वा प्रातःकाले पुनः पुनः ।
प्राणायामं ततः कृत्वा स्तोत्रं च कवचं पठेत् ॥ १५ ॥
एतत्स्तोत्रस्य पाठेन स्वयं सिद्धान्तविद्भवेत् ।
कुण्डली सुकृपा तस्य मासाद्भवति निश्चितम् ॥ १६ ॥
निद्रादोषादिकं[3] त्यक्त्वा प्रकाश्याहं शरीरके ।
अहं दात्री सुयोगानामधिपाहं जगत्त्रये ॥ १७ ॥
अहं कर्म अहं धर्मः अहं देवी च कुण्डली ।
यो जानाति महावीर कुण्डलीरूपसेवनात् ॥ १८ ॥
इति तं पात्रकं कर्तुमवतीर्णास्मि सर्वदा ।
अत एव परं मन्त्रं कुण्डलिन्याः स्तवं शुभम् ॥ १९ ॥
प्रपठेत् सर्वदा देहे यदि वश्या न कुण्डली ।
तावत् कालं जपं कुर्याद् यावत् सिद्धिर्न जायते ॥ २० ॥

१. नित्याम् इति ग० ।
२. अण्डस्यानण्ड वाह्यस्याम् इति क० ।
३. दशा इति ग० ।
४. इहीदं पालनं कर्तोमवतीर्णाहि सर्वदा इति ग० ।

आधारे परदेवता भवनताधोकुण्डली देवता ।
देवानामधिदेवता त्रिजगतामानन्दपुञ्जस्थिता ॥ २१ ॥
मूलाधारनिवासिनी त्रिरमणी या ज्ञानिनी मालिनी ।
सा मे मातृमनुस्थिता कुलपथानन्दैकबीजानना ॥ २२ ॥
सर्वांगस्थितिकारिणी सुरगणानन्दैकचिह्ना शिवा ।
वीरेन्द्रा नवकामिनी वचनदा [1]श्रीमानदा ज्ञानदा ॥ २३ ॥
सानन्दा घननन्दिनी घनगणा छिन्ना भवा योगिनी ।
धीरा धैर्यवती समाप्तविषया श्रीमंगली कुण्डली ॥ २४ ॥
सर्वाकारनिवासिनी जयधराधाराधरस्थागया ।
गीता गोधनवर्द्धिनी गुरुमयी ज्ञानप्रिया गोधना ॥ २५ ॥
[2]गार्हाग्निस्थितिचन्द्रिका [3]सुलतिका जाड्यापहा रागदा ।
दारा गोधनकारिणी मृगमना ब्रह्माण्डमार्गोज्वला ॥ २६ ॥
माता मानसगोचरा हरिचरा सिंहासनकारणा ।
[4]यामा दासगणेश्वरी गुणवती [5]छायापथस्थायिनी ॥ २७ ॥
निद्रा क्षुब्धजनप्रिया वरतृषा भाषाविशेषस्थिता ।
स्थित्यन्तप्रलयापहा [6]नरशिरोमालाधरा कुण्डली ॥ २८ ॥
[7]गांगेशी यमुनेश्वरी गुरुतरी गोदावरी भास्करी ।
भक्तार्तिक्षयकारिणी [8]समशिवं यद्येकभावान्विता ॥ २९ ॥

---

१. स सर्वदा इति ग० ।
२. गौर्हंग्धि इति ग० ।
३. मुलतिका इति ग० ।
४. खाशा इति ग० ।
५. गाथा गणस्थायिनी इति ग० ।
६. रण इति ग० ।
७. गंगेशी इति क० ।
८. मम इति ग० ।

त्वं शीघ्रं कुरुकौलिके [1]मम शिरोरन्ध्रं तदब्जं मुदा ।
तत्पत्रस्थितदैवतं कुलवती मातुस्थलं पाहिकम् ॥ ३० ॥
भालोद्र्ध्वे धवला[2] कलारसकला कालाग्निजालोज्वला ।
फेरुप्राणनिकेतने गुरुतरा गुर्व्वी सुगुर्व्वी सुरा ॥ ३१ ॥
हालोल्लाससमोदया यतिनया[3] माया जगत्तारिणी ।
निद्रामैथुननाशिनी मम हरा[4] मोहापहा पातुकम् ॥ ३२ ॥
भालं नीलतनुस्थिता मतिमतामर्थप्रिया मैथिली[5] ।
भालानन्दकरा महाप्रियजना पद्मानना कोमला ॥ ३३ ॥
नानारंगसुपीठदेशवसना[6] सिद्धासना घोषणा ।
त्राणस्थावररूपिणी कलिहनी श्रीकुण्डली पातुकम् ॥ ३४ ॥
भ्रूमध्यं वगलामुखी शशिमुखी विद्यामुखी सम्मुखी ।
नागाख्या नगवाहिनी महिषहा पञ्चाननस्थायिनी ॥ ३५ ॥
पारावारविहारहेतुसफरी सेतुप्रकारा परा ।
काशीवासिनमीश्वरं प्रतिदिनं श्रीकुण्डली पातुकम् ॥ ३६ ॥
या कुण्डोद्भवसारपाननिरता मोहादिदोषापहा ।
सा नेत्रत्रयमम्बिका सुवलिका श्रीकालिका कौलिका ॥ ३७ ॥
काकस्था द्विकचञ्चुपारणकरी संज्ञाकरी सुन्दरी ।
मे पातु प्रियया तया विशदया सच्छायया छादिता ॥ ३८ ॥
श्रीकुण्डे रणचण्डिका सुरतिका कंकालिका बालिका ।
साकाशा परिवर्जिता सुगतिका ज्ञानोर्मिका चोत्सुका ॥ ३९ ॥

---

१. समशिवे वीरेन्द्रि तदज्ञम् इति ग० ।
२. मात्रोर्ध्वं धवला कराल सकला व्याला इति क० ।
३. दया इति ग० ।
४. महा इति ग० ।
५. मैथुनी इति ग० ।
६. दशना इति ग० ।
७. मालस्याव्यय इति क० । ८. कलहली इति ग० ।

सौकासूक्ष्मसुखप्रिया गुणनिका दीक्षा च [1]सूक्ष्माख्यका ।
[2]मामन्द्यं मम कन्दवासिनि शिवे सन्त्राहि सन्त्राहिकम् ॥ ४० ॥
एतत्स्तोत्रं पठित्वा त्रिभुवनपवनं पावनं लौकिकानाम् ।
राजा स्यात् किल्विषाग्निः क्रतुपतिरिह यः क्षेमदं योगिनां वा ॥४१॥
सर्वेशः सर्वकर्त्ता भवति निजगृहे योगयोगांगवक्ता ।
शाक्तः शैवः स एकः परमपुरुषगो निर्मलात्मा महात्मा ॥ ४२ ॥
प्रणवेन पुटितं कृत्वा यः स्तौति नियतः शुचिः ।
स भवेत् कुण्डलीपुत्रो भूतले नात्र संशयः ॥ ४३ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने मूलचक्रसारसंकेते भैरवीभैरवसंवादे कन्दवासिनीस्तोत्रं नाम[3] द्वात्रिंशः पटलः ॥



१. शीक्षारव्यक्षका क० ।
२. सानन्दम् ग० ।
३. चतुस्त्रिंशत् क० ।

# त्रयस्त्रिंशः पटलः

आनन्दभैरवी उवाच[1]—

अथ वक्ष्ये महादेव कुण्डलीकवचं शुभम् ।
परमानन्ददं सिद्धं सिद्धवृन्दनिषेवितम् ॥ १ ॥
यत्कृत्वा योगिनः सर्वे धर्माधर्मप्रदर्शकाः ।
ज्ञानिनो मानिनो धर्मा विचरन्ति यथामराः ॥ २ ॥
सिद्धयोऽप्यणिमाद्याश्च करस्थाः सर्वदेवताः ।
एतत् कवचपाठेन देवेन्द्रो योगिराड् भवेत् ॥ ३ ॥
ऋषयो योगिनः सर्वे जटिलाः कुलभैरवाः ।
प्रातः काले त्रिवारं च मध्याह्ने वारयुग्मकम् ॥ ४ ॥
सायाह्ने वारमेकन्तु पठेत् कवचमेव च ।
पठेदेवं महायोगी कुण्डलीदर्शनं भवेत् ॥ ५ ॥
कुलकुण्डलीकवचस्य ब्रह्मेन्द्र ऋषिर्गायत्री छन्दः ।
कुलकुण्डली देवता सर्वाभीष्टसिद्ध्यर्थे विनियोगः ॥
ॐ ईश्वरी जगतां धात्री ललिता सुन्दरी परा ।
कुण्डली कुलरूपा च पातु मां कुलचण्डिका ॥ ६ ॥
शिरो मे ललिता देवी पातूग्राख्या कपोलकम् ।
ब्रह्ममन्त्रेण[2] पुटिता भ्रूमध्यं पातु मे सदा ॥ ७ ॥
नेत्रत्रयं महाकाली कालाग्निभक्षिका शिखाम् ।
दन्तावलीं विशालाक्षी ओष्ठमिष्टानुवासिनी ॥ ८ ॥
कामबीजात्मिका विद्या अधरं पातु मे सदा ।
लृयुगस्था गण्डयुग्मं माया विश्वा रमाप्रिया ॥ ९ ॥

---

१. पुस्तके नास्ति क० ।

२. ब्रह्मरन्ध्रेण क० ।

भुवनेशी कर्णयुग्मं चिबुकं क्रोधकालिका ।
कपिला मे गलं पातु सर्वबीजस्वरूपिणी ॥ १० ॥
मातृकावर्णपुटिता कुण्डली कण्ठमेव च ।
हृदयं कालपृथ्वी[1] च कङ्काली पातु मे मुखम् ॥ ११ ॥
भुजयुग्मं चतुर्वर्गा चण्डदोर्दण्डखण्डिनी ।
स्कन्धयुग्मं स्कन्दमाता हालाहलगता मम ॥ १२ ॥
अङ्गुल्यग्रं कुलानन्दा श्रीविद्या नखमण्डलम् ।
कालिका भुवनेशानी पृष्ठदेशं सदावतु ॥ १३ ॥
पार्श्वयुग्मं महावीरा वीरासनधराभया ।
पातु मां कुलदर्भस्था नाभिमुदरमम्बिका ॥ १४ ॥
कटिदेशं पीठसंस्था महामहिषघातिनी ।
लिङ्गस्थानं महामुद्रा भगं मालामनुप्रिया ॥ १५ ॥
भगीरथप्रिया धूम्रा मूलाधारं गणेश्वरी ।
चतुर्दलं कश्यपूज्या दलाग्रं मे वसुन्धरा ॥ १६ ॥
शीर्षं राधा रणाख्या च ब्रह्माणी[2] पातु मे मुखम् ।
मेदिनी पातु कमला वाग्देवी पूर्वगं[3] दलम् ॥ १७ ॥
छेदिनी दक्षिणे पातु पातु चण्डा महातपा ।
चन्द्रघण्टा सदा पातु योगिनी वारुणं दलम् ॥ १८ ॥
उत्तरस्थं दलं पातु पृथिवीमिन्द्रपालिता ।
चतुष्कोणं कामविद्या ब्रह्मविद्याब्जकोणकम् ॥ १९ ॥
अष्टशूलं सदा पातु सर्ववाहनवाहना ।
चतुर्भुजा सदा पातु डाकिनी कुलचञ्चला ॥ २० ॥
मेढ्रस्था मदनाधारा पातु मे चारुपंकजम् ।
स्वयम्भूलिङ्गं चार्वाका कोटराक्षी ममासनम् ॥ २१ ॥

---

१. कौल क० ।

२. ब्राह्मणं पातु मे सदा ग० ।

३. सर्वगम् क० ।

कदम्बवनमापातु कदम्बवनवासिनी ।
वैष्णवी परमा माया पातु मे वैष्णवं पदम् ॥ २२ ॥
षड्दलं[1] राकिणी पातु राकिणी कामवासिनी ।
कामेश्वरी कामरूपा श्रीकृष्णं पीतवाससम् ॥ २३ ॥
वनमालां वनदुर्गा शंखं मे [2]शङ्खिनी शिवा ।
चक्रं चक्रेश्वरी पातु कमलाक्षी गदां मम ॥ २४ ॥
पद्मं मे पद्मगन्धा च पद्ममाला मनोहरा ।
[3]रादिलान्ताक्षरं पातु लाकिनी लोकपालिनी ॥ २५ ॥
[4]षड्दले स्थितदेवांश्च पातु कैलासवासिनी ।
अग्निवर्णा सदा पातु [5]गणं मे परमेश्वरी ॥ २६ ॥
मणिपूरं सदा पातु मणिमालाविभूषणा ।
दशपत्रं दशवर्णं डादिफान्तं त्रिविक्रमा ॥ २७ ॥
पातु नीला महाकाली भद्रा भीमा सरस्वती ।
अयोध्यावासिनी देवी महापीठनिवासिनी ॥ २८ ॥
वाग्भवाद्या महाविद्या कुण्डली कालकुण्डली ।
[6]दशच्छदगतं पातु रुद्रं रुद्रात्मकं मम ॥ २९ ॥
सूक्ष्मात् सूक्ष्मतरा पातु सूक्ष्मस्थाननिवासिनी ।
राकिणी लोकजननी पातु कूटाक्षरस्थिता ॥ ३० ॥
तैजसं पातु नियतं रजकी राजपूजिता ।
विजया कुलबीजस्था तवर्गं तिमिरापहा ॥ ३१ ॥

---

१. षड्वर्गम् ग० ।

२. शक्तिक्षणी ग० ।

३. वादि क० ।

४. षड्वर्गस्थितदेवींश्च ग० ।

५. जलम् ग० ।

६. शतम् क० ।

मन्त्रात्मिका मणिग्रन्थिं भेदिनी पातु सर्वदा ।
गर्भदाता भृगुसुता पातु मां नाभिवासिनी ॥ ३२ ॥
नन्दिनी पातु सकलं कुण्डली कालकम्पिता ।
हृत्पद्मं पातु कालाख्या धूम्रवर्णा मनोहरा ॥ ३३ ॥
दलद्वादशवर्णं च भास्करी भावसिद्धिदा ।
पातु मे परमा विद्या कवर्गं कामचारिणी ॥ ३४ ॥
चवर्गं चारुवसना व्याघ्रास्या टंकधारिणी ।
चकारं पातु कृष्णाख्या [1]काकिनी पातु कालिका ॥ ३५ ॥
टक्कुरांगी टकारं मे जीवभावा महोदया ।
ईश्वरी पातु विमला मम हृत्पद्मवासिनी ॥ ३६ ॥
कर्णिकां कालसन्दर्भा योगिनी योगमातरम् ।
इन्द्राणी वारुणी पातु कुलमाला कुलान्तरम् ॥ ३७ ॥
तारिणी शक्तिमाता च कण्ठवाक्यं सदावतु ।
विप्रचित्ता महोग्रोग्रा प्रभा दीप्ता घनासना ॥ ३८ ॥
वाक्स्तम्भिनी [1]वज्रदेहा वैदेही वृषवाहिनी ।
उन्मत्तानन्दचित्ता च क्षणोशीशा भगान्तरा ॥ ३९ ॥
मम षोडशपत्राणि पातु [2]मातृतनुस्थिता ।
सुरान् रक्षतु वेदज्ञा सर्वभाषा च कर्णिकाम् ॥ ४० ॥
ईश्वराद्र्ध्वासनगता प्रपायान्मे सदाशिवम् ।
शाकम्भरी महामाया साकिनी पातु सर्वदा ॥ ४१ ॥
भवानी भवमाता च पायाद् भ्रूमध्यपङ्कजम् ।
द्विदलं व्रतकामाख्या अष्टांगसिद्धिदायिनी ॥ ४२ ॥
पातु नासामखिलानन्दा मनोरूपा जगत्प्रिया ।
लकारं लक्षणाक्रान्ता सर्वलक्षणलक्षणा ॥ ४३ ॥

---

१. काकानी क० ।

२. मातुलसंस्थिता ग० ।

कृष्णजिनधरादेवी चकारं पातु सर्वदा ।
द्विदलस्थं सर्वदेवं सदा पातु वरानना ॥ ४४ ॥
बहुरूपा विश्वरूपा हाकिनी पातु संस्थिता ।
हरापरशिवं पातु मानसं पातु पञ्चमी ॥ ४५ ॥
षट्चक्रस्था सदा पातु षट्चक्रकुलवासिनी ।
अकारादिक्षकारान्ता विन्दुसर्गसमन्विता ॥ ४६ ॥
मातृकार्णा सदा पातु कुण्डली ज्ञानकुण्डली ।
देवकाली गतिप्रेमा पूर्णा गिरितटं शिवा ॥ ४७ ॥
उड्डीयानेश्वरी देवी सकलं पातु सर्वदा ।
कैलासपर्वतं पातु कैलासगिरिवासिनी ॥ ४८ ॥
पातु मे [1]डाकिनीशक्तिर्लाकिनी राकिणी कला ।
साकिनी हाकिनी देवी षट्चक्रादीन् प्रपातु मे ॥ ४९ ॥
कैलासाख्यं सदा पातु पञ्चानन[2]तनूद्भवा ।
हिरण्यवर्णा रजनी चन्द्रसूर्याग्निभक्षिणी ॥ ५० ॥
सहस्रदलपद्मं मे सदा पातु कुलाकुला ।
सहस्रदलपद्मस्था दैवतं पातु खेचरी ॥ ५१ ॥
काली तारा षोडशाख्या मातंगी पद्मवासिनी ।
शशिकोटिगलद्रूपा पातु मे सकलं तमः ॥ ५२ ॥
वने[3] घोरे जले देशे युद्धे वादे[4] श्मशानके ।
सर्वत्रगमने ज्ञाने सदा मां पातु शैलजा ॥ ५३॥

---

१. नासा सुनानन्दा ग० ।

२. मानं मन ग० ।

३. रणे क० ।

४. युद्धे वा देश शानेके ग० ।

पर्वते विविधायासे विनाशे पातु कुण्डली ।
पादादिब्रह्मरन्ध्रान्तं सर्वाकाशं सुरेश्वरी ॥ ५४ ॥
सदा पातु सर्वविद्या सर्वज्ञानं सदा मम ।
नवलक्षमहाविद्या दशदिक्षु प्रपातु माम् ॥ ५५ ॥
इत्येतत् कवचं देवि कुण्डलिन्याः प्रसिद्धिदम् ।
ये पठन्ति ध्यानयोगे योगमार्गव्यवस्थिताः ॥ ५६ ॥
ते यान्ति मुक्तिपदवीमैहिके नात्र संशयः ।
मूलपद्मे मनोयोगं कृत्वा हृदासनस्थितः ॥ ५७ ॥
मन्त्रं ध्यायेत् कुण्डलिनीं मूलपद्मप्रकाशिनीम् ।
धर्मोदयां दयारुढ़ामाकाशस्थानवासिनीम्[1] ॥ ५८ ॥
अमृतानन्दरसिकां विकलां सुकलां शिताम् ।
[2]अजितां रक्तरहितां विशक्तां रक्तविग्रहाम् ॥ ५९ ॥
रक्तनेत्रां कुलक्षिप्तां ज्ञानाञ्जनजयोज्ज्वलाम् ।
विश्वाकारां मनोरूपां मूले ध्यात्वा प्रपूजयेत् ॥ ६० ॥
यो योगी कुरुते एवं स सिद्धो नात्रसंशयः ।
रोगी रोगात् प्रमुच्येत बद्धो मुच्येत बन्धनात् ॥ ६१ ॥
राज्यं श्रियमवाप्नोति राज्यहीनः पठेद्यदि ।
पुत्रहीनो लभेत् पुत्रं योगहीनो भवेद्वशी ॥ ६२ ॥
कवचं धारयेद्यस्तु [3]शिखायां दक्षिणे भुजे ।
वामा वामकरे धृत्वा सर्वाभीष्टमवाप्नुयात् ॥ ६३ ॥

१. वाहिनीम् ग० ।
२. असिताम् ग० ।
३. शिखाकाराम् ग० ।

स्वर्णे रौप्ये तथा ताम्रे स्थापयित्त्वा प्रपूजयेत् ।
सर्वदेशे सर्वकाले पठित्त्वा सिद्धिमाप्नुयात् ॥ ६४ ॥
स भूयात् कुण्डलीपुत्रो नात्र कार्या विचारणा ॥ ६५ ॥

इति रुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिविद्याप्रकरणे
षट्चक्रप्रकाशे भैरवीभैरवसम्वादे कन्दवासिनीकवचं
नाम त्रयस्त्रिंशः[1] पटलः ॥



1. पञ्चत्रिंशत् क० ।

# चतुस्त्रिंशः पटलः

[1]आनन्दभैरवी उवाच—

अथ भेदान् प्रवक्ष्यामि हिताय जगतां प्रभो।
निर्मलात्मा शुचिः श्रीमान् ध्यानात्मा च[2] सदाशिवः ॥ १ ॥
स मोक्षगो ज्ञानरूपी [3]स षट्चक्रार्थभेदकः।
[4]त्रिगुणज्ञानविकलो न पश्यति दिवानिशम् ॥ २ ॥
दिवारात्र्यज्ञानहेतोर्न पश्यति कलेवरम्।
इति कृत्वा हि मरणं नृणां जन्मनि जन्मनि ॥ ३ ॥
[5]तज्जन्मक्षयहेतोश्च मम योगं समभ्यसेत्।
पञ्चस्वरं[6] महायोगं कृत्वा स्यादमरो नरः ॥ ४ ॥
तत्प्रकारं शृणुष्वनाथ[7] वल्लभ प्रियदर्शन।
तव भावेन[8] कथये न कुत्र वद शङ्कर ॥ ५ ॥
यदि लोकस्य निकटे कथ्यते योगसाधनम्[9]।
विघ्ना घोरा वसन्त्येव गात्रे योगादिकं कथम् ॥ ६ ॥
योगयोगाद्भवेन्मोक्षः तत्प्रकाशाद्विनाशनम्।
अतो न दर्शयेद् योगं यदीच्छेदात्मनः शुभम् ॥ ७ ॥

---

१. श्री भैरवी उवाच क०।

२. ध्यानाचार ग०।

३. विभेदकः ग०।

४. त्रिगुणो विकुको देवोऽनुपश्यति दिवानिशम् ग०।

५. तज्जन्य ग०।

६. पञ्चामरा क०।

७. प्राण ग०।

८. तदभावेन कायेन कुत्रापि वद शङ्कर ग०।

९. योगधारणाम् ग०।

कृत्वा पञ्चामरा[1] योगं प्रत्यहं भक्तिसंयुतः ।
पठेत् श्रीकुण्डलीदेवीसहस्रनाम चाष्टकम् ॥ ८ ॥
महायोगी भवेन्नाथ षण्मासे नात्र संशयः ।
पञ्चमे वा[2] योगविद्या सर्वविद्याप्रकाशिनी ॥ ९ ॥
कृत्वा पञ्चस्वरा सिद्धिं ततोऽष्टाङ्गादिधारणा ।
आदौ पञ्चस्वरा सिद्धिस्ततोऽन्या योगधारणा ॥ १० ॥
तत्प्रकारं प्रवक्ष्यामि सावधानावधारय ।
अहं जानामि संसारे केवलं योगपण्डितान् ॥ ११ ॥
तत् साक्षिणी ह्यहं नाथ भक्तानामुदयाय च ।
इदानीं कथये तेऽहं मम वा योगसाधनम् ॥ १२ ॥
एवं कृत्वा नित्यरूपी योगानामष्टधा यतः ।
ततः कालेन पुरुषः सिद्धिमाप्नोति निश्चितम् ॥ १३ ॥
पञ्चामरा विधानानि क्रमेण शृणु शंकर ।
नेतीयोगं हि सिद्धानां महाकफविनाशनम् ॥ १४ ॥
[3]दन्तियोगं [4]प्रवक्ष्यामि पश्चाद् हृदयभेदनात् ।
धौतीयोगं ततः पश्चात् [5]सर्वमलविनाशनात् ॥ १५ ॥
नेउलीयोगमपरं सर्वाङ्गोदरचालनात् ।
क्षालनं परमं योगं नाडीनां क्षालनात्[6] स्मृतम् ॥ १६ ॥
एतत् पञ्चामरायोगं [7]यमिनामतिगोचरम् ।
यमनियमकाले तु पञ्चामराक्रियां यजेत् ॥ १७ ॥

---

१. स्वरा ग० ।
२. स्वरा ग० ।
३. दन्ती क० ।
४. ततः पश्चात् हृदय ग्रन्थिभेदनात् ग० ।
५. विनाशनम् ग० ।
६. क्षालनम् ग० ।
७. स्वरा ग० ।

अमरा[1]साधनादेव अमरत्वं लभेद् ध्रुवम् ।
एतत्करणकाले च तथा [2]पञ्चामरासनम् ॥ १८ ॥
पञ्चामराभक्षणेन[3] अमरो योगसिद्धिभाक् ।
तानि द्रव्याणि वक्ष्यामि तवाग्रे परमेश्वर ॥ १९ ॥
येन हीना न सिद्ध्यन्ति कल्पकोटिशतेन च ।
एका तु अमरा दूर्वा तस्या ग्रन्थिं समानयेत् ॥ २० ॥
अन्या तु विजया देवी सिद्धिरूपा सरस्वती ।
अन्या तु विल्वपत्रस्था शिवसन्तोषकारिणी ॥ २१ ॥
अन्या तु योगसिद्ध्यर्थे निर्गुण्डी[4] चामरा मता ।
अन्यातु कालितुलसी श्रीविष्णोः परितोषिणी ॥ २२ ॥
एताः पञ्चस्वराः ज्ञेया योगसाधनकर्मणि ।
एतासां द्विगुणं ग्राह्यं विजयापत्रमुत्तमम् ॥ २३ ॥
ब्राह्मणी क्षत्रिया वैश्या शूद्राः सर्वत्र पूजिताः ।
एतद्द्रव्याणि संग्राह्य भक्षयेच्चूर्णमुत्तमम् ॥ २४ ॥
तच्चूर्णभक्षसमये एतन्मन्त्रादिपञ्चमम् ।
पठित्वा भक्षणं कृत्वा नरो मुच्येत संकटात् ॥ २५ ॥
ॐ त्वं दूर्वेऽमरपूज्ये त्वं अमृतोद्भवसम्भवे ।
अमरं मां सदा भद्रे कुरुष्व नृहरिप्रिये ॥ २६ ॥
ॐ दूर्वायै नमः स्वाहा इति दूर्वायाः ।
पुनर्विजयामन्त्रेण शोधयेत् सर्वकन्यकाः ।
ॐ सम्बिदे ब्रह्मसम्भूते ब्रह्मपुत्रि सदाऽनघे ॥ २७ ॥

---

१. स्वरक्रियाञ्चरेत् ग० ।

२. पञ्चाखर ग० ।

३. पञ्चमद्या ग० ।

४. नृत्यन्ती ग० ।

भैरवाणां च तृप्त्यर्थे पवित्रा भव सर्वदा ।
ॐ ब्राह्मण्यै[1] नमः स्वाहा ।
ॐ सिद्धिमूलकरे देवी हीनबोधप्रबोधिनि ॥ २८ ॥
राजपुत्रीवशंकरि शूलकण्ठत्रिशूलिनि ।
ॐ क्षत्रियायै नमः स्वाहा ।
ॐ अज्ञानेन्धनदीप्ताग्नि ज्ञानाग्निज्ज्वाल[2] रूपिणि ॥ २९ ॥
आनन्दाद्याहुतिं कृत्वा[3] सम्यक्ज्ञानं प्रयच्छ मे ।
ह्रीं ह्रीं वैश्यायै नमः स्वाहा ।
ॐ नमस्यामि नमस्यामि योगमार्गप्रदर्शिनि ॥ ३० ॥
त्रैलोक्यविजये मातः समाधिफलदा भव ।
श्रीं शूद्रायै नमः स्वाहा ।
ॐ [4]काव्यसिद्धिकरी देवी विल्वपत्रनिवासिनि ॥ ३१ ॥
अमरत्वं सदा देहि शिवतुल्यं कुरुष्व माम् ।
ॐ शिवदायै नमः स्वाहा ।
निर्गुण्डि परमानन्दे योगानामधिदेवते ॥ ३२ ॥
सा मां रचतु अमरे भावसिद्धिप्रदे नमः ।
ॐ शोकापहायै नमः स्वाहा ।
ॐ विष्णोः प्रिये महामाये [5]महाकालनिवारिणी ॥ ३३ ॥
तुलसी मां सदा रक्ष मामेकममरं कुरु ।
ॐ ह्रीं श्रीं ऐं क्लीं अमरायै नमः स्वाहा ।
पुनरेव समाकृत्य सर्वासां शोधनञ्चरेत् ॥ ३४ ॥

---

१. ब्राह्मण्यै ग० ।
२. ज्ञानाग्नि ज्वल ग० ।
३. दत्वा ग० ।
४. काम क० ।
५. कालजालविघारिणी ग० ।

ॐ अमृते अमृतोद्भवेऽमृतवर्षिणि अमृतमाकर्षय
आकर्षय सिद्धिं देहि स्वाहा ।
धेनुमुद्रां योनिमुद्रां मत्स्यमुद्रां प्रदर्शयेत् ।
तत्त्वमुद्राक्रमेणैव तर्पणं कारयेद् बुधः ॥ ३५ ॥
अमन्त्रकं [1]सप्तवारं गुरोर्नाम्ना शिवेऽर्पयेत् ।
[2]सप्तकञ्च स्वेष्टदेव्या नाम्ना शुद्धिं प्रदापयेत् ॥ ३६ ॥
ततस्तर्पणमाकुर्यात्तर्पयामि नमोनमः ।
एतद्वाक्यस्य पूर्वे च इष्टमन्त्रं समुच्चरेत् ॥ ३७ ॥
परदेवतां समुद्धृत्य सर्वाद्यप्रणवं स्मृतम् ।
ततो मुखे प्रजुहुयात् कुण्डलीनामपूर्वकम् ॥ ३८ ॥
ॐ ऐं वद वद वाग्वादिनि ममजिह्वाग्रे स्थिरीभव-
सर्वसत्त्ववशंकरि[3] शत्रुकण्ठत्रिशूलिनि स्वाहा
एतज्जप्त्वा [4]साश्रमी च वशी साधकसत्तमः ।
पञ्चामरा[5] शासनज्ञः कुलाचारविधिप्रियः ॥ ३९ ॥
स्थिरचेता भवेद्योगी यदि [6]पञ्चामरागतः ।
नेती योगविधानानि शृणु कैलासपूजिते ॥ ४० ॥
येन सर्वमस्तकस्थकफानां दहनं भवेत् ।
सूक्ष्मसूत्रं दृढतरं प्रदद्यात् नासिकाबिले ॥ ४१ ॥
मुखरन्ध्रे समानीय सन्धानेन समानयेत् ।
पुनः पुनः सदा योगी यातायातेन घर्षयेत् ॥ ४२ ॥

---

१. सप्तवारमिष्ट ग० ।
२. सिद्धिम् ग० ।
३. स्वर ग० ।
४. यशस्वी ग० ।
५. पञ्चस्वरा साधकज्ञः ग० ।
६. पञ्चमद्यागतः ग० ।

क्रमेण वर्द्धनं कुर्यात् सूत्रस्य परमेश्वर ।
नेतीयोगेन नासाया रन्ध्रं निर्मलकं भवेत् ॥ ४३ ॥
वायोर्गमनकाले तु महासुखमिति प्रभो ।
दन्तीयोगं ततः पश्चात्कुर्यात् साधकसत्तमः ॥ ४४ ॥
दन्तधावनकाले तु योगमेतत् प्रकाशयेत् ।
दन्तधावनकाष्ठञ्च सार्धहस्तैकसम्भवम् ॥ ४५ ॥
नातिस्थूलं नातिसूक्ष्मं नवीनं नम्रमुत्तमम् ।
अपक्वं यत्नतो ग्राह्यं मृणालसदृशं तरुम् ॥ ४६ ॥
गृहीत्वा दन्तकाष्ठं वै [1]योगी नित्यं प्रभक्षयेत् ।
दन्तकाष्ठाग्रभागञ्च कनिष्ठांगुलिपर्वतः [2] ॥ ४७ ॥
एवं दन्तावलिभ्याञ्च चर्वणं सुन्दरं चरेत् ।
ततः प्रक्षाल्य तोयेन शनैर्गिलनमाचरेत् ॥ ४८ ॥
शनैः शनैः प्रकर्तव्यं कायवाक्चित्तशोधनम् ।
[3]यावदभिन्नकाष्ठाग्रं नाभिमूलेत्वनाक्षतम् ॥ ४९ ॥
तावत् सूक्ष्मतरं ग्राह्यमवश्यं प्रत्यहञ्चरेत् ।
हृदये जलचक्रञ्च यावत् खण्डं न जायते ॥ ५० ॥
तावत्कालं सर्वदिने प्रभाते [4]दन्तधावनम् ।
हृदये कफभाण्डस्य खण्डनं जायते ध्रुवम् ॥ ५१ ॥
पवनागमने सौख्यं प्रयाति योगनिर्भरम् ।
[5]खेचरत्वं स लभताम् अम्लानञ्च कटूद्भवम् ॥ ५२ ॥

---

१. तत् क्रमेण तु ग० ।
२. पर्वतः (?) ग० ।
३. यावन्नायाति काष्ठाग्रं नाभिमूले त्वनाकुलम् क० ।
४. वद् धारणम् ग० ।
५. खेचरान्नं लवणजं अम्लान्नं कटूद्भवम् क० ।

मिष्टान्नं शाकदध्यन्नं द्विवारं रात्रिभोजनम् ।
अवश्यं सन्त्यजेद्योगी यदि योगमिहेच्छति ॥ ५३ ॥
एकभागं मुद्गबीजं द्विभागं तण्डुलं मतम् ।
उत्तमं पाकमाकृत्य घृतदुग्धेन भक्षयेत् ॥ ५४ ॥
अथवा केवलं दुग्धं तर्पणं कारयेद् बुधः ।
कुण्डलीं कुलरूपाश्च दुग्धेन परितर्पयेत् ॥ ५५ ॥
कुण्डलीतर्पणं योगी यदि जानाति शंकर ।
अनायासेन योगी स्यात् स ज्ञानीन्द्रो भवेद्ध्रुवम् ॥ ५६ ॥
यमनियमपरो यः कुण्डलीसेवनस्थो
विभवविरहितो वा [1]भूरिभाराश्रितो वा ।
स भवति परयोगी सर्वविद्यार्थवेद्यो-
गुणगणगगनस्थो मुक्तरूपी गणेशः ॥ ५७ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्रप्रकाशे-
भैरवभैरवीसंवादे [2]पञ्चामरासाधनं नाम
[3]चतुस्त्रिंशः पटलः ॥



१. भूति ग० ।
२. पञ्चस्वरायोग ग० ।
३. षट्त्रिंशः क० ।

# पञ्चत्रिंशः पटलः

श्रीआनन्दभैरवी उवाच—

अथ वक्ष्ये महाकाल रहस्यं चातिदुर्लभम् ।
यस्य विज्ञानमात्रेण नरो ब्रह्मपदं लभेत् ॥ १ ॥
आकाशे तस्य राज्यञ्च खेचरेशो भवेद् ध्रुवम् ।
धनेशो भवति क्षिप्रं ब्रह्मज्ञानी भवेन्नरः ॥ २ ॥
योगानामधिपो राजा वीरभद्रो यथाकविः ।
[1]विरिञ्चिगणनाथस्य कृपा भवति सर्वदा ॥ ३ ॥
यः करोति पञ्चयोगं स स्यादमरविग्रहः ।
धौतीयोगं प्रवक्ष्यामि यत्कृत्वा निर्मलो भवेत् ॥ ४ ॥
अत्यन्तगुह्यं योगं च समाधिकरणं नृणाम् ।
यदि न कुरुते योगं तदा मरणमाप्नुयात् ॥ ५ ॥
धौतीयोगं विना नाथ कः सिद्ध्यति महीतले ।
सूक्ष्मात्सूक्ष्मतरं वस्त्रं द्वात्रिंशद्धस्तमानतः[2] ॥ ६ ॥
एकहस्तक्रमेणैव यः करोति शनैः शनैः ।
यावद् [3]द्वात्रिंशद्धस्तञ्च तावत्कालं क्रियाञ्चरेत् ॥ ७ ॥
एतत्क्रियाप्रयोगेण योगी भवति तत्क्षणात् ।
क्रमेण मन्त्रसिद्धः स्यात् कालजालवशं नयेत् ॥ ८ ॥
एतन्मध्ये चासनानि शरीरस्थानि चाचरेत् ।
दृढासने योगसिद्धिरिति तन्त्रार्थनिर्णयः[4] ॥ ९ ॥

---

१. गोविन्द क० ।

२. कुम्भमानकम् ग० ।

३. धात्रि कुम्भकञ्च ग० ।

४. मन्त्रार्थं ग० ।

सिद्धे मनौ परावाप्तिः पञ्चयोगासनेन च ।
पार्श्वे चाष्टाङ्गुलं वस्त्रं दीर्घे द्वात्रिंशदीश्वर ॥ १० ॥
एतत् सूक्ष्मं सुवसनं गृहीत्त्वा कारयेद् यतिः ।
जितेन्द्रियः सदा कुर्याद् ज्ञानध्याननिषेवणः ॥ ११ ॥
कुलीनः पण्डितो मानी विवेकी सुस्थिराशयः ।
धौतीयोगं सदाकुर्यात्तदैव शुचिगो भवेत् ॥ १२ ॥
अनाचारेण हानिः स्यादिन्द्रियाणां बलेन च ।
महापातकमुख्यानां संगदोषेण हानयः ॥ १३ ॥
सम्भवन्ति महादेव कालयोगं सुकर्म च ।
वृद्धो वा यौवनस्थो वा बालो वा जड एव च ॥ १४ ॥
करणाद्दीर्घजीवी स्यादमरो लोकवल्लभः ।
मन्त्रसिद्धिरष्टसिद्धिः स सिद्धीनामधीश्वरः ॥ १५ ॥
शनैः शनैः सदा कुर्यात् कालदोषविनाशनात् ।
हृदयग्रन्थिभेदेन सर्वावयववर्धनम् ॥ १६ ॥
तदा महाबलो ज्ञानी चारुवर्णो महाशयः ।
धौतीयोगोद्भवं कामं महामरणकारणम् ॥ १७ ॥
तस्य त्यागं यः करोति स नरो देवविक्रमः ।
श्वासं त्यक्त्वा स्तम्भनञ्च मनो दद्यान्महानिले ॥ १८ ॥
श्वासादीनाञ्च गणनमवश्यं भावयेद् गृहे ।
प्राणायामविधानेन सर्वकालं सुखी भवेत् ॥ १९ ॥
वायुपानं सदा कुर्यात् ध्यानं कुर्यात्सदैव हि ।
प्रत्याहारं सदा कुर्यात् मनोनिवेशनं सदा ॥ २० ॥
मानसादिप्रजाप्यञ्च सदा कुर्यान्मनोलयम् ।
धौतीयोगान्तरं हि नेऊलीकर्म चाचरेत् ॥ २१ ॥

नेऊलीयोगमात्रेण[1] आसने नेऊलोपमः ।
नेऊलीसाधनादेव चिरजीवी निरामयः ॥ २२ ॥
अन्तरात्मा सदा मौनी निर्मलात्मा सदा सुखी ।
सर्वदा समयानन्दः कारणानन्दविग्रहः ॥ २३ ॥
योगाभ्यासं सदा कुर्यात् कुण्डली साधनादिकम् ।
कृत्वा मन्त्री खेचरत्वं प्राप्नोति नात्र संशयः ॥ २४ ॥
तत्प्रकारं प्रवक्ष्यामि सावधानावधारय ।
भुक्त्वा मुद्गान्नपक्वञ्च वारैकं प्रतिपालयेत् ॥ २५ ॥
प्रपालयेत्सोदरञ्च [2]करिंनासाविवर्जितः ।
पुनः पुनश्चालनञ्च[3] कुर्यात् स्वोदरमध्यकम् ॥ २६ ॥
कुलालचक्रवत् कुर्यात् भ्रामणञ्चोदरस्य च ।
सर्वांगचालनादेव कुण्डलीचालनं भवेत् ॥ २७ ॥
चालनात् कुण्डलीदेव्याश्चैतन्या सा भवेत् प्रभो ।
एतस्यानन्तरं नाथ क्षालनं परिकीर्तितम् ॥ २८ ॥
नाडीनां क्षालनादेव सर्वविद्यानिधि र्भवेत् ।
सर्वत्र जयमाप्नोति कालिकादर्शनं भवेत् ॥ २९ ॥
वायुसिद्धिर्भवेत्तस्य पञ्चभूतस्य सिद्धिभाक् ।
तस्यकीर्तिस्त्रिभुवने कामदेवबलोपमः ॥ ३० ॥
सर्वत्र गामी स भवेदिन्द्रियाणां पतिर्भवेत् ।
[4]मुण्डासनं हि सर्वत्र सर्वदा कारयेद्बुधः ॥ ३१ ॥
ऊर्द्ध्वे [5]मुण्डासनं कृत्वा अधोहस्ते जपं चरेत् ।
यदि त्रिदिनमाकर्तुं समर्थो मुण्डिकासनम् ॥ ३२ ॥

---

१. कर्मयोगेन इति ग० ।
२. कठि इति ग० ।
३. शीलनञ्च इति क० ।
४. मुद्रासनम् इति क० ।
५. पद्मासनम् इति ग० ।

तदा हि सर्वनाड्यश्च वशीभूता न संशयः ।
नाडीक्षालनयोगेन मोक्षदाता स्वयं भवेत् ॥ ३३ ॥
नाडीयोगेन सर्वार्थसिद्धिः स्यान्मुण्डिकासनात् ।
मुण्डासनं यः करोति नेऊली सिद्धिगो यदि ॥ ३४ ॥
नेऊलीसाधनगतो नेऊलीसाधनोत्तमः ।
तदा क्षालनयोगेन सिद्धिमाप्नोति साधकः ॥ ३५ ॥
नेऊलीं यो न जानाति स कथं कर्त्तुमुत्तमः ।
स धीरो मानसचरो मतिमान् [1]स जितेन्द्रियः ॥ ३६ ॥
यो नेऊली योगसारं कर्त्तुमुत्तमपारगः ।
स चावश्यं क्षालनश्च कुर्यात् नाड्यादिशोधनात्[2] ॥ ३७ ॥
नेऊलीयोगमार्गेण नाडीक्षालनपारगः ।
भवत्येव महाकाल राजराजेश्वरो यथा ॥ ३८ ॥
पृथिवीपालनरतो विग्रहस्ते प्रपालनम् ।
केवलं प्राणवायोश्च [3]धारणात् क्षालनं भवेत् ॥ ३९ ॥
विना क्षालनयोगेन देहशुद्धिर्न जायते ।
क्षालनं नाडिकादीनां कफपित्तमलादिकम् ॥ ४० ॥
करोति यत्नतो योगी मुण्डासन [4]निषेवणात् ।
वायुग्रहणमेवं हि नेऊलीवशकालके ॥ ४१ ॥
न कुर्यात् केवलं नाथ अन्यकाले सदा चरेत् ।
यावन्नेऊलीं न जानाति तावत् वायुं न संपिबेत् ॥ ४२॥
बहुतरं न संग्राह्यं वायोरागमनादिकम् ।
केवलं श्वासगणनं यावन्नेऊली न सिद्ध्यति ॥ ४३ ॥

---

१. त्रिदिनमाकर्ण्य (?) इति ग० ।

२. धारणाम् इति ग० ।

३. हार्थे इति ग० ।

४. नादिमासनम् इति ग० ।

[1]पञ्चस्वरा[2] प्रकथिता योगिनी सिद्धिदायिका ।
[3]पञ्चस्वरासाधनादेव पञ्चवायुर्वशो भवेत् ॥ ४४ ॥
प्रतापे सूर्यतुल्यः स्यात् शोकदोषापहारकः ।
सर्वयोगस्थिरतरं संप्राप्य योगिराड् भवेत् ॥ ४५ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्रप्रकाशे भैरवीभैरवसंवादे साधनं नाम पञ्चत्रिंशः[4] पटलः ॥



१. स्वासोच्छासं प्रगगयेत यावन्नेऊली न सिध्यति इति क. अधि पाठः ।

२. पञ्चामरा इति क० ।

३. पञ्चमे साधनादेव इति ग० ।

४. सप्तत्रिंशः इति क० ।

# षट्त्रिंशः पटलः

श्रीआनन्दभैरवी उवाच—

अथ कान्त प्रवक्ष्यामि कुण्डलीचेतनादिकम् ।
सहस्रनामसकलं[1] कुण्डलिन्याः प्रियं सुखम् ॥ १ ॥

अष्टोत्तरं महापुण्यं साक्षात्[2] सिद्धिप्रदायकम् ।
[3]तव प्रेमवशेनैव कथयामि शृणुष्व तत् ॥ २ ॥

विना यजनयोगेन विना ध्यानेन यत्फलम् ।
तत्फलं लभते सद्यो विद्यायाः सुकृपा भवेत् ॥ ३ ॥

या विद्या भुवनेशानी त्रैलोक्यपरिपूजिता ।
सा देवी कुण्डली माता त्रैलोक्यं पाति सर्वदा ॥ ४ ॥

तस्या नाम सहस्राणि अष्टोत्तरशतानि च ।
श्रवणात्पठनान्मन्त्री महाभक्तो भवेदिह ॥ ५ ॥

ऐहिके स भवेन्नाथ जीवन्मुक्तो महाबली ॥ ६ ॥

अस्य श्री मन्महाकुण्डलीसाष्टोत्तरसहस्रनाम-
स्तोत्रस्य ब्रह्मर्षिर्जगतीच्छन्दो भगवती श्रीमन्महा-
कुण्डलीदेवता सर्वयोगसमृद्धिसिद्ध्यर्थे विनियोगः ॥

कुलेश्वरी कुलानन्दा कुलीना कुलकुण्डली ।
श्री मन्महाकुण्डली च कुलकन्या कुलप्रिया ॥ ७ ॥

कुलक्षेत्रस्थिता कौली कुलीनार्थप्रकाशिनी ।
कुलाख्या कुलमार्गस्था कुलशास्त्रार्थपातिनी ॥ ८ ॥

---

१. सकलम् इति ग० ।
२. विधानात् सिद्धिक्षयकम् इति ग० ।
३. तावप्रेम रसेणैव इति क० ।

कुलज्ञा कुलयोग्या च कुलपुष्पप्रकाशिनी ।
कुलीना[1] च कुलाध्यक्षा कुलचन्दनलेपिता ॥ ९ ॥
कुलरूपा[2] कुलोद्भूता कुलकुण्डलिवासिनी ।
कुलाभिन्ना कुलोत्पन्ना कुलाचारविनोदिनी ॥ १० ॥
कुलवृक्षसमुद्भूता कुलमाला कुलप्रभा ।
कुलज्ञा कुलमध्यस्था कुलकंकणशोभिता ॥ ११ ॥
कुलोत्तरा कौलपूजा कुलालापा कुलक्रिया ।
कुलभेदा कुलप्राणा कुलदेवी कुलस्तुतिः ॥ १२ ॥
कौलिका कालिका काल्या कलिभिन्ना[3] कलाकला ।
कलिकल्मषहन्त्री च कलिदोषविनाशिनी ॥ १३ ॥
कंकाली केवलानन्दा कालज्ञा[4] कालधारिणी ।
कौतुकी कौमुदी केका काका काकलयान्तरा ॥ १४ ॥
कोमलाङ्गी करालास्या कन्दपूज्या[5] च कोमला ।
कैशोरी काकपुच्छस्था कम्बलासनवासिनी ॥ १५ ॥
कैकेयीपूजिता कोला कोलपुत्री कपिध्वजा ।
कमला कमलाक्षी च कम्बलाश्वतरप्रिया ॥ १६ ॥
कलिकाभंगदोषस्था कालज्ञा कालकुण्डली ।
काव्यदा कविता वाणी कालसन्दर्भभेदिनी ॥ १७ ॥

---

१. सुकुलीना इति ग० ।

२. कुलगर्भासना कुक्षा कुलच्छात्रा कुलात्मजा ।
कुलीना नागललिता कुण्डली कुलपण्डिता ॥
कुलद्रव्यप्रिया कौला कलिकन्या कुलान्तरा ।
कुलकाली कुलामोदा कुलशब्दोत्सवाकुला ॥
इति क० पु० अधि० पाठः ।

३. कावला इति ग० ।

४. कालाकाललयान्तिका इति ग० ।

५. कञ्जपूज्या (?) इति क० ।

कुमारी करुणाकारा कुरुसैन्यविनाशिनी ।
कान्ता कुलागता कामा कामिनी कामनाशिनी ॥ १८ ॥
कामोद्भवा कामकन्या[1] केवला कालघातिनी ।
कैलासशिखरारूढा कैलासपतिसेविता ॥ १९ ॥
कैलासनाथनमिता केयूरहारमण्डिता ।
कन्दर्पा कठिनानन्दा [2]कुलगा कीचकृत्यहा ॥ २० ॥
कमलास्या कठोरा च कीटरूपा कटिस्थिता ।
कन्देश्वरी कन्दरूपा कोलिका कन्दवासिनी ॥ २१ ॥
कूटस्था[3] कूटभक्षा च कालकूटविनाशिनी ।
कामाख्या कमला काम्या कामराजतनूद्भवा ॥ २२ ॥
कामरूपधरा कम्रा कमनीया [4]कविप्रिया ।
कञ्जानना कञ्जहस्ता कञ्जपत्रायतेक्षणा ॥ २३ ॥
काकिनी कामरूपस्था कामरूपप्रकाशिनी ।
कोलाविध्वंसिनी कंका कलंकार्ककलंकिनी ॥ २४ ॥
महाकुलनदी कर्णा कर्णकाण्डविमोहिनी ।
काण्डस्था काण्डकरुणा कर्मकस्था कुटुम्बिनी ॥ २५ ॥
कमलाभा भवा[5] कल्ला करुणा करुणामयी ।
करुणेशी[6] कराकर्त्री कर्तृहस्ता कलोदया[7] ॥ २६ ॥

---

१. कुल्या इति ग० ।

२. कुचगा कठिगापहा इति ग० ।

३. कटकस्था कामबीजा कृच्छाकृच्छगुणोदया ।
कृच्छानन्दा कृच्छपूज्या कृच्छहा कृच्छरक्षिका ॥
कारणाङ्गी कृच्छवर्णा कीलिता कोकिलस्वरा ।
काञ्चीपीठस्थिता काञ्ची कामरूपनिवासिनी ॥ इति क० पु० अः पाठः ।

४. काल इति ग० ।

५. कल्मा इति ग० ।

६. करणेशी इति ग० ।

७. कलोदरा इति ग० ।

कारुण्यसागरोद्भूता कारुण्यसिन्धुवासिनी ।
कार्त्तिकेशी कार्त्तिकस्था कार्त्तिकप्राणपालनी ॥ २७ ॥
करुणानिधिपूज्या च करणीया क्रिया कला ।
कल्पस्था कल्पनिलया कल्पातीता च कल्पिता ॥ २८ ॥
कुलपा कुलविज्ञाना कर्षिणी कालरात्रिका ।
कैवल्यदा कोकरस्था कलमञ्जीररञ्जिनी ॥ २९ ॥
कलयन्ती कालजिह्वा किंकरासनकारिणी ।
कुमुदा कुशलानन्दा कौशल्याकाशवासिनी ॥ ३० ॥
कसापहासहन्त्री च कैवल्यगुणसंभवा ।
एकाकिनी अर्करूपा कुवला कर्कटस्थिता ॥ ३१ ॥
कर्कोटका कोष्ठरूपा कूटवह्निकरस्थिता ।
कूजन्ती मधुरध्वानं कामयन्ती सुलक्षणम् ॥ ३२ ॥
केतकी कुसुमानन्दा केतकी पुण्यमण्डिता ।
कर्पूरपूररुचिरा कर्पूरभक्षणप्रिया ॥ ३३ ॥
कपालपात्रहस्ता च कपालचन्द्रधारिणी ।
कामधेनुस्वरूपा च कामधेनुः क्रियान्विता ॥ ३४ ॥
कश्यपी काश्यपा कुन्ती केशान्ता केशमोहिनी ।
कालकर्त्री कूपकर्त्री कुलपा कामचारिणी ॥ ३५ ॥
[1]कुङ्कुमाभा कज्जलस्था कमिता कोपघातिनी ।
केलिस्था केलिकलिता कोपना [2]कर्पटस्थिता ॥ ३६ ॥
कलातीता कालविद्या कालात्मपुरुषोद्भवा ।
कष्टस्था [4]कष्टकुष्ठस्था कुष्ठहा [5]कष्ठहा कुशा ॥ ३७ ॥

---

१. कज्जलाभा इति ग० ।
२. कर्कट इति ग० ।
३. कष्टहा इति ग० ।
४. कष्टिकुष्ठस्था इति ग० ।
५. कुष्ठहा इति ग० ।

कलिका स्फुटकर्त्री च काम्बोजा कामला कुला ।
कुशलाख्या [1]काककुष्ठा कर्मस्था [2]कूर्म्ममध्यगा ॥ ३८ ॥

कुण्डलाकारचक्रस्था कुण्डगोलोद्भवा कफा ।
कपित्थाग्रवसाकाशा कपित्थरोधकारिणी ॥ ३९ ॥

काहोड़ी काहड़ा काड़ा कंकला भाषकारिणी ।
कनका कनकाभा च कनकाद्रिनिवासिनी ॥ ४० ॥

[3]कार्पासयज्ञसूत्रस्था कूटब्रह्मार्थसाधिनी ।
कलञ्जभक्षिणी क्रूरा क्रोधपुञ्जा कपिस्थिता ॥ ४१ ॥

कपाली साधनरता कनिष्ठाकाशवासिनी ।
कुञ्जरेशी कुञ्जरस्था कुञ्जरा [4]कुञ्जरागति ॥ ४२ ॥

कुञ्जस्था कुञ्जरमणी कुञ्जमन्दिरवासिनी ।
कुपिता कोपशून्या च कोपाकोपविवर्जिता ॥ ४३ ॥

कपिञ्जलस्था कापिञ्जा कपिञ्जलतरुद्भवा ।
कुन्तीप्रमकथाविष्टा[5] कुन्तीमानसपूजिता ॥ ४४ ॥

कुन्तला कुन्तहस्ता च कुलकुन्तलमोहिनी ।
कान्ताङ्घ्रिसेविका[6] कान्तकुशला कोशलावती ॥ ४५ ॥

[7]केशिहन्त्री ककुत्स्था च ककुत्स्थवनवासिनी ।
कैलासशिखरानन्दा कैलासगिरिपूजिता ॥ ४६ ॥

---

१. काककम्भा इति ग० ।

२. कुम्भ इति ग० ।

३. कषञा कर्पटी कर्पा कृपा कर्पासवासिनो । इति क० पु० अ० पत्रः ।

४. कुञ्जरागतिकामिनी इति ग०

५. सेकिका इति ग० ।

६. केलि इति ग० ।

७. स्निग्ध इति ग० ।

कीलालनिर्मलाकारा कीलालमुग्धकारिणी[1] ।
कुतुका कुट्टनी कुट्टा [2]कूटना मोदकारिणी ॥ ४७ ॥
क्रौं[3]कारी क्रौंकरी काशी कुहुशब्दस्था किरातिनी ।
कूजन्ती सर्ववचनं कारयन्ती कृताकृतम् ॥ ४८ ॥
कृपानिधिस्वरूपा च कृपासागरवासिनी ।
केवलानन्दनिरता केवलानन्दकारिणी ॥ ४९ ॥
कृमिला कृमिदोषघ्नी कृपा कपटकुट्टिता ।
कृशांगी क्रमभंगस्था किंकरस्था कटस्थिता ॥ ५० ॥
कामरूपा कान्तरता कामरूपस्य सिद्धिदा ।
कामरूपपीठदेवी कामरूपांकुजा कुजा[4] ॥ ५१ ॥
कामरूपा कामविद्या कामरूपादिकालिका ।
कामरूपकला काम्या कामरूपकुलेश्वरी ॥ ५२ ॥
कामरूपजनानन्दा कामरूपकुशाग्रधीः ।
कामरूपकराकाशा कामरूपतरुस्थिता ॥ ५३ ॥
कामात्मजा कामकला कामरूपविहारिणी ।
कामशास्त्रार्थमध्यस्था कामरूपक्रियाकला ॥ ५४ ॥
कामरूपमहाकाली कामरूपयशोमयी ।
कामरूपरमानन्दा कामरूपादिकामिनी ॥ ५५ ॥
कूलमूला कामरूपपद्ममध्यनिवासिनी ।
कृताञ्जलिप्रिया कृत्या कृत्यादेवीस्थिता कटा ॥ ५६ ॥
कटका काटका [5]कोटिकटिघण्टविनोदिनी ।
[6]कटिस्थूलतरा काष्ठा कात्यायनसुसिद्धिदा ॥ ५७ ॥

---

१. कूट्वा इति ग० ।
२. कोंकारी कौंकरी काशी केशवस्था इति ग० ।
३. कूजन्ती इति ग० ।
४. कजाकुजा इति ग० ।
५. कौटाकोटिमुण्ड इति ग० । ६. स्थलकरा इति ग० ।

कात्यायनी कामचलस्था कामचन्द्रानना [1]कथा ।
काश्मीरदेशनिरता काश्मीरी कृषिकर्मजा[2] ॥ ५८ ॥
कृषिकर्मस्थिता कौर्मा कूर्मपृष्ठनिवासिनी ।
कालघण्टा नादरता कलमञ्जीरमोहिनी ॥ ५९ ॥
कलयन्ती शत्रुवर्गान् क्रोधयन्ती गुणागुणम् ।
कामयन्ती सर्वकामं काशयन्ती जगत्त्रयम् ॥ ६० ॥
कौलकन्या कालकन्या कौलकालकुलेश्वरी ।
कौलमन्दिरसंस्था च कुलधर्मविडम्बिनी ॥ ६१ ॥
कुलधर्मरताकारा कुलधर्मविनाशिनी ।
कुलधर्मपण्डिता च कुलधर्मसमृद्धिदा ॥ ६२ ॥
कौलभोगमोक्षदा च कौलभोगेन्द्रयोगिनी ।
कौलकर्मा नवकुला श्वेतचम्पकमालिनी[3] ॥ ६३ ॥
कुलपुष्पमाल्यकान्ता[4] कुलपुष्पभवोद्भवा ।
कौलकोल हलकरा कौलकर्मप्रिया परा[5] ॥ ६४ ॥
काशीस्थिता काशकन्या काशी चक्षुप्रिया कुथा ।
काष्ठासनप्रिया काका काकपक्षकपालिका ॥ ६५ ॥
कपालरसभोज्या च कपालनवमालिनी ।
कपालस्था च कापाली कपालसिद्धिदायिनी ॥ ६६ ॥
कपाला कुलकर्त्री च कपालशिखरस्थिता[6] ।
कथना कृपणश्रीदा कृपी कृपणसेविता ॥ ६७ ॥

---

१. तथा इति ग० ।

२. मर्मजा इति ग० ।

३. कौलकुद्दाल वदना श्वेतचम्पकवासिनी इति क० ।

४. कान्तकुला कुलभवोद्भवा इति ग० ।

५. क्रिया इति ग० ।

६. कपालस्था इति ग० ।

७. लिखन इति ग० ।

कमहन्त्री कर्मगता कर्माकर्मविवर्जिता ।
कर्मसिद्धिरता कामी कर्मज्ञाननिवासिनी ॥ ६८ ॥
कर्मधर्मसुशीला च कर्मधर्मवशंकरी ।
कनकाब्जसुनिर्माणमहासिंहासनस्थिता ॥ ६९ ॥
कनकग्रन्थिमाल्याढ्या[1] कनकग्रन्थिभेदिनी ।
कनकोद्भवकन्या च कनकाम्भोजवासिनी ॥ ७० ॥
कालकूटादिकूटस्था किटिशब्दान्तरस्थिता ।
कंकपक्षिनादमुखा[2] कामधेनूद्भवा कला ॥ ७१ ॥
कंकणाभा धरा कर्दा कर्दमा कर्दमस्थिता ।
कर्दमस्थजलाच्छन्ना[3] कर्दमस्थजनप्रिया ॥ ७२ ॥
कमठस्था कार्मुकस्था[4] कम्रस्था कंसनाशिनी[5] ।
कंसप्रिया कंसहन्त्री कंसाज्ञानकरालिनी ॥ ७३ ॥
काञ्चनाभा[6] काञ्चनदा [7]कामदा क्रमदा कदा ।
कान्तभिन्ना कान्तचिन्ता कमलासनवासिनी ॥ ७४ ॥
कमलासनसिद्धिस्था कमलासनदेवता ।
कुत्सिता कुत्सितरता[8] कुत्सा शापविवर्जिता[9] ॥ ७५ ॥
कुपुत्ररक्षिका कुल्ला[10] कुपुत्रमानसापहा ।
कुजरक्षकरी कौजी कुब्जाख्या कुब्जविग्रहा ॥ ७६ ॥

---

१. मालाढ्या इति ग० ।
२. पक्ष इति ग० ।
३. जल इति ग० ।
४. कामठस्था ।
५. वाशिनी ।
६. कंचिलाभा कंचिनदा इति ग० ।
७. मदा इति ग० ।
८. तरा इति ग०
९. शाप इति ग० ।
१०. कुल्वा इति ग० ।

कुनखी कूपदीक्षुस्था कुकरी कुधनी कुदा ।
कुप्रिया कोकिलानन्दा कोकिला कामदायिनी ॥ ७७ ॥
कुकामिनी कुबुद्धिस्था कूर्पवाहन[1]मोहिनी ।
कुलका[2] कुललोकस्था कुशासनसुसिद्धिदा ॥ ७८ ॥
कौशिकी देवता कस्या[3] कन्नादनादसुप्रिया ।
कुसौष्ठवा कुमित्रस्था कुमित्रशत्रुघातिनी ॥ ७९ ॥
कुज्ञाननिकरा कुस्था कुजिस्था कर्जदायिनी ।
[4]ककर्जा कर्ज्जकरिणी कर्जवद्धविमोहिनी ॥ ८० ॥
कर्जशोधनकर्त्री च कालास्त्रधारिणी सदा ।
कुगतिः कालसुगतिः कलिबुद्धिविनाशिनी ॥ ८१ ॥
कलिकालफलोत्पन्ना कलिपावनकारिणी ।
कलिपापहरा काली [5]कलिसिद्धिसुसूक्ष्मदा ॥ ८२ ॥
कालिदासवाक्यगता कालिदाससुसिद्धिदा ।
कलिशिक्षा कालशिक्षा कन्दशिक्षापरायणा ॥ ८३ ॥
कमनीयभावरता कमनीयसुभक्तिदा ।
करकाजनरूपा च कक्षावादकराकरा ॥ ८४ ॥
कश्च्चवर्णा काकवर्णा क्रोष्टुरूपा कषामला[6] ।
कोष्ट्रनादरता कीता कातरा कातरप्रिया ॥ ८५ ॥
कातरस्था [7]कातराज्ञा कातरानन्दकारिणी ।
काशमर्दतरूद्भूता काशमर्दविभक्षिणी ॥ ८६ ॥

१. वासन इति ग० ।
२. कुलोका इति ग० ।
३. कन्याकनादवद्भा सुप्रिया इति ग० ।
४. सुकज्जा इति ग० ।
५. सुमोक्षदा इति ग० ।
६. कषायणा इति ग० ।
७. कारतज्ञा इति ग० ।

कष्टहानिः कष्टदात्री कष्टलोकविरक्तिदा ।
कायागता[1] कायसिद्धिः कायानन्दःकाशिनी ॥ ८७ ॥
कायगन्धहरा कुम्भा कायकुम्भा[2] कठोरिणी ।
कठोरतरुसंस्था च कठोरलोकनाशिनी ॥ ८८ ॥
कुमार्गस्थापिता कुप्रा कार्पासतरुसंभवा ।
कार्पासवृक्षसूत्रस्था कुवर्गस्था करोत्तरा[3] ॥ ८९ ॥
[4]कर्णाटकर्णसम्भूता [5]कार्णाटी कर्णपूजिता ।
कर्णास्त्ररक्षिका कर्णा कर्णहा कर्णकुण्डला ॥ ९० ॥
[6]कुन्तलादेशनमिता कुटुम्बा कुम्भकारिका ।
कर्णासरासना[7] कृष्टा[8] कृष्णहस्ताम्बुजार्जिता ॥ ९१ ॥
कृष्णाङ्गी कृष्णदेहस्था कुदेशस्था कुमङ्गला ।
क्रूरकर्मस्थिता कोरा किरात[9]कुलकामिनी ॥ ९२ ॥
[10]कालवारिप्रिया कामा [11]काव्यवाक्यप्रिया क्रुधा ।
[12]कज्जलता कौमुदी च कुज्योत्स्ना कलनप्रिया ॥ ९३ ॥
कलना सर्वभूतानां कपित्थवनवासिनी ।
कटुनिम्बस्थिता काख्या कवर्गाख्या कवर्गिका ॥ ९४ ॥

---

१. कायगीता इति ग० ।
२. कार कुम्भा इति ग० ।
३. करोत्सवा इति ग० ।
४. कर्णाटी इति ग० ।
५. काण्डाटी इति ग० ।
६. कर्णाट इति ग० ।
७. कर्णासवसना इति ग० ।
८. कृष्णा इति ग० ।
९. कनकामिनी इति ग० ।
१०. शत्रि इति ग० ।
११. कारवाकूकपिवाक्प्रिया इति क० ।
१२. कज्जला वर्ण कौमुदी कुज्योत्स्नाया कलाप्रिया इति ग० ।

किरातच्छेदिनी कार्या कार्याकार्यविवर्जिता ।
कात्यायनादिकल्पस्था कात्यायनसुखोदया ॥ ९५ ॥
कुक्षेत्रस्था कुलाविघ्ना करणादिप्रवेशिनी ।
कांकाली किर्कला काला[1] किलिता सर्वकामिनी ॥ ९६ ॥
कीलितापेक्षिता कूटा कूटकुङ्कुमचर्चिता[2] ।
कुङ्कुमागन्धनिलया [3]कुटुम्बभवनस्थिता ॥ ९७ ॥
[4]कुकृपा करणानन्दा कवितारसमोहिनी ।
काव्यशास्त्रानन्दरता [5]काव्यपूज्या कवीश्वरी ॥ ९८ ॥
[6]कटकादिहस्तिरथहयदुन्दुभिशब्दिनी ।
कितवा क्रूरधूर्तस्था केकाशब्दनिवासिनी ॥ ९९ ॥
कें केवलाम्बिता केता केतकीपुष्पमोहिनी ।
कैं कैवल्यगुणोद्धास्या कैवल्यधनदायिनी ॥ १०० ॥
करी धनीन्द्रजननी[7] [8]काक्षताक्षकलंकिनी ।
[9]कुडुवान्ता कान्तिशान्ता कांक्षा पारमहंस्यगा ॥ १०१ ॥
कर्त्री चित्ता कान्तवित्ता कृषणा कृषिभोजिनी ।
कुङ्कुमाशक्तहृदया केयूरहारमालिनी ॥ १०२ ॥

---

१. कला काला इति ग० ।
२. चर्चिता इति ग० ।
३. भरणस्थिता इति ग० ।
४. कुं कृपा कारणानन्दा इति० ग० ।
५. करीन्वी (?) इति ग० ।
६. यूयहयदुर्लभ इति ग० ।
७. घनि इति क० ।
८. कसराख्या इति ग० ।
९. कुडुवान्ता कादि इति ग० ।

कीश्वरी कुशवा कुम्भा[१] कैशोरजनपूजिता[२] ।
कलिकामध्यनिरता कोकिलस्वरगामिनी ॥ १०३ ॥
कुरदेहहरा कुम्बा कुडुम्बा कुरभेदिनी ।
कुण्डलीश्वरसंवादा कुण्डलीश्वरमध्यगा ॥ १०४ ॥
कालसूक्ष्मा कालयज्ञा[३] [४]कालहारकरी कहा ।
कहलस्था कलहस्था[५] कलहा कलहाङ्करी ॥ १०५ ॥
[६]कूरङ्गी श्रीकूरङ्गस्था कोरङ्गी कुण्डलापहा ।
कुकलङ्की[७] कृष्णबुद्धिः कृष्णा ध्याननिवासिनी ॥ १०६ ॥
[८]कुतवा काष्ठवलता कृतार्थकरणी कुसी ।
[९]कलनकस्था कस्वरस्था कलिका दोषभञ्जजा ॥ १०७ ॥
कुसुमाकारकमला कुसुमस्रग्विभूषणा ।
किञ्जल्का कैतवार्कशा कमनीयजलोदया ॥ १०८ ॥
ककारकूटसर्वाङ्गी ककाराम्बरमालिनी ।
कालभेदकरा काटा कर्पवासा ककुत्स्थला ॥ १०९ ॥
कुवासा कबरी कर्वा कूसवी कुरुपालिनी ।
कुरुपृष्ठा कुरुश्रेष्ठा कूरूणां ज्ञाननाशिनी ॥ ११० ॥
कुतूहलरता कान्ता कुव्याप्ता कष्टबन्धना ।
कषायणतरुस्था च कषायणरसोद्भवा ॥ १११ ॥

---

१. वान्धस्था इति ग०
२. गण्डिता इति ग० ।
३. काश इति ग० ।
४. कल इति ग० ।
५. कलहहा कमहा कवि कोकिला इति ग० ।
६. कुरेङ्गशी इति ग० ।
७. कुल लक्ष्मीः ग० ।
८. कुतरा कातरमता इति ग० ।
९. कलाकस्था कासुरस्था कलिकाभंगदोषजा इति ग० ।

[1]कतिविद्या कुष्ठदात्री [2]कुष्ठिशोकविसर्जनी ।
[3]काष्ठासनगता कार्याश्रया का[4]श्रयकौलिका ॥ ११२ ॥
[5]कालिका कालिसन्त्रस्ता कौलिकध्यानवासिनी ।
क्लृप्तस्था क्लृप्तजननी [6]क्लृप्तच्छन्ना कलिध्वजा ॥ ११३ ॥
केशवा केशवानन्दा केश्यादिदानवापहा ।
केशवांगजकन्या च [7]केशवांगजमोहिनी ॥ ११४ ॥
[8]किशोरार्चनयोग्या च किशोरदेवदेवता ।
कान्तश्रीकरणी [9]कुत्या [10]कपटा प्रियघातिनी ॥ ११५ ॥
कुकामजनिता कौञ्चा [11]कौञ्चस्था कौञ्चवासिनी ।
[12]कूपस्था कूपबुद्धिस्था कूपमाला मनोरमा ॥ ११६ ॥
[13]कूपपुष्पाश्रया कान्तिः क्रमदाक्रमदाक्रमा ।
कुविक्रमा कुक्रमस्था कुण्डलीकुण्डदेवता ॥ ११७ ॥
कौण्डिल्यनगरोद्भूता कौण्डिल्यगोत्रपूजिता ।
[14]कपिराजस्थिता कापी [15]कपिबुद्धिवलोदया ॥ ११८ ॥

---

१. कवि ग० ।
२. कुष्ठशोकविमर्जिनी ग० ।
३. काष्ठा ग० ।
४. श्रयाका ग० ।
५. कलसाकलसमसना ग० ।
६. क्लृप्तच्छिन्ना ग० ।
७. केशवाङ्ग ग० ।
८. केशवार्च्चन योग्याच केशवार्च्चन देवता ग० ।
९. कुल्या ग० ।
१०. रूपाट ग० ।
११. कोचा कोचस्था कोचवासिनी ग० ।
१२. कुपयस्था कुबुद्धिस्था कुचुमाला ग० ।
१३. कुल ग० ।
१४. कापि ग० । १५. विनोदिनी ग० ।

[1]कपिध्यानपरा मु""या कु्व्यवस्था कुसाक्षिदा ।
कुमध्यस्था कुकन्या च कुलपङ्क्तिप्रकाशिनी ॥ ११९ ॥
कुलभ्रमरदेहस्था कुलभ्रमरनादिनी ।
कुलासङ्गा [2]कुलाक्षी च कुलमत्ता कुलानिला ॥ १२० ॥
कलिचिह्ना कालचिह्ना [3]कण्ठचिह्ना कवीन्द्रजा ।
करीन्द्रा कमलेशश्रीः[4] कोटिकन्दर्पदर्पहा ॥ १२१ ॥
कोटितेजोमयी कोट्या कोटीरपद्ममालिनी ।
कोटीरमोहिनी कोटिः कोटिकोटिविधूद्भवा ॥ १२२ ॥
कोटिसूर्यसमानास्या कोटिकालानलोपमा ।
कोटीरहारललिता[5] कोटिपर्वतधारिणी ॥ १२३ ॥
कुचयुग्मधरा देवी कुचकामप्रकाशिनी ।
कुचानन्दा कुचाच्छन्ना कुचकाठिन्यकारिणी ॥ १२४ ॥
कुचयुग्ममोहनस्था कुचमायातुरा कुचा ।
कुचयौवनसंमोहा कुचमर्दनसौख्यदा ॥ १२५ ॥
काचस्था काचदेहा च काचपूरनिवासिनी ।
काचग्रस्था काचवर्णा कीचकप्राणनाशिनी ॥ १२६ ॥
कमलालोचनप्रेमा कोमलाक्षी[6] मनुप्रिया ।
कमलाक्षी कमलजा कमलास्या करालजा ॥ १२७ ॥
कमलाङ्घ्रिद्वया काम्या कराख्या करमालिनी ।
करपद्मधरा कन्दा कन्दबुद्धिप्रदायिनी ॥ १२८ ॥
कमलोद्भवपुत्री च कमला पुत्रकामिनी ।
किरन्ती किरणाच्छन्ना किरणप्राणवासिनी ॥ १२९ ॥

---

१. कापिध्यान पारमाख्या ग० ।
२. कौलासंगा च कुलमत्ता कुलासिला ग० ।
३. कण्ठाचिह्ना ग० ।
४. कमलाकश्रीः क० ।
५. नमिता ग० ।
६. कामलाक्षी क० ।

काव्यप्रदा काव्यचित्ता [1]काव्यसारप्रकाशिनी ।
कलाम्बा[2] कल्पजननी कल्पभेदासनस्थिता ॥ १३० ॥
कालेच्छा कालसारस्था कालमारणघातिनी ।
किरणक्रमदीपस्था कर्मस्था क्रमदीपिका ॥ १३१ ॥
काललक्ष्मीः कालचण्डा कुलचण्डेश्वरप्रिया ।
काकिनीशक्तिदेहस्था कितवा कितकारिणी ॥ १३२ ॥
करञ्चा कञ्चुका क्रौञ्चा काकचञ्चुपुटस्थिता ।
काकाख्या काकशब्दस्था कालाग्निदहनार्थिका ॥ १३३ ॥
कुचक्षनिलया कुत्रा कुपुत्रा क्रतुरक्षिका ।
कनकप्रतिभाकारा करबन्धाकृतिस्थिता ॥ १३४ ॥
कृतिरूपा कृतिप्राणा कृतिक्रोध[3]निवारिणी ।
[4]कुक्षिरक्षाकरा कुक्षा कुक्षिब्रह्माण्डधारिणी ॥ १३५ ॥
कुक्षिदेवस्थिता कुक्षिः क्रियादक्षा क्रियातुरा ।
क्रियानिष्ठा क्रियानन्दा क्रतुकर्मा क्रियाप्रिया ॥ १३६ ॥
कुशलासवसंशक्ता कुशारिप्राणवल्लभा ।
कुशारिवृक्षमदिरा काशीराजवशोद्यमा[5] ॥ १३७ ॥
काशीराजगृहस्था च [6]कर्णभ्रातृगृहस्थिता ।
कर्णाभरणभूषाढ्या कण्ठभूषा[7] च कण्ठिका ॥ १३८ ॥
कण्ठस्थानगता कण्ठा कण्ठपद्मनिवासिनी ।
कण्ठप्रकाशकारिणी कण्ठमाणिक्यमालिनी ॥ १३९ ॥

---

१. भाव ग० ।
२. कल्पा ग० ।
३. चक्र ग० ।
४. कृति क० ।
५. वधोद्यमा ग० ।
६. कर्तृ ग० ।
७. भूया ग० ।

कण्ठपद्मसिद्धिकरी कण्ठाकाशनिवासिनी ।
कण्ठपद्मसाकिनीस्था कण्ठषोडशपत्रिका ॥ १४० ॥
कृष्णाजिनधरा विद्या कृष्णाजिनसुवाससी ।
कुतकस्था कुखेलस्था [1]कुण्डवालङ्कृताकृता ॥ १४१ ॥
कलगीता कालघजा कलभङ्गपरायणा ।
कालीचन्द्रा कला काव्या [2]कुचस्था कुचलप्रदा ॥ १४२ ॥
कुचौरघातिनी कच्छा [3]कच्छादस्था कजातना ।
कंजाछदमुखी[4] कञ्जा कञ्जतुण्डा कजीवली[5] ॥ १४३ ॥
[6]कामराभासुरवाद्यस्था [7]कियद्हुंकारनादिनी ।
[8]कणादयज्ञसूत्रस्था [9]कीलालमज्ञसञ्ज्ञका ॥ १४४ ॥
[10]कटुहासा कपाटस्था कटधूमनिवासिनी ।
कटिनादघोरतरा कुट्टला पाटलिप्रिया ॥ १४५ ॥
[11]कामचाराब्जनेत्रा च कामचोद्धारसंक्रमा ।
काष्ठपर्वतसंदाहा कुष्ठाकुष्ठ[12]निवारिणी ॥ १४६ ॥
कहोड़मन्त्रसिद्धस्था[13] काहला डिण्डिमप्रिया ।
कुलडिण्डिमवाद्यस्था कामडामरसिद्धिदा ॥ १४७ ॥

---

१. कु गुण ग० ।

२. कुचेलस्था कुचेलता ग० ।

३. कपूदस्था ग० ।

४. कञ्जावृत ग० ।

५. कजीवनी ग० ।

६. कामरार्जाव ग० ।

७. प्रिय ग० ।

८. कणायज्ञ ग० ।

९. कीलालान्दसञ्ज्ञका इति ग० ।

१०. कटिहासा ग० ।

११ कमठा कज नेत्राय कामठद्वार ग० ।

१२. कष्टइति ग० ।  १३. सिद्धिस्था कहनार्डा खियःप्रियाः ग० ।

[1]कुलामरवध्यस्था कुलकेकानिनादिनी ।
कोजागरढोलनादा कास्यवीररणस्थिता ॥ १४८ ॥
कालादिकरणच्छिद्रा करुणानिधिवत्सला ।
क्रतुश्रीदा कृतार्थश्रीः कालतारा कुलोत्तरा ॥ १४९ ॥
कथापूज्या कथानन्दा कथना कथनप्रिया ।
कार्थचिन्ता कार्थविद्या काममिथ्यापवादिनी ॥ १५० ॥
कदम्बपुष्पसंकाशा कदम्बपुष्पमालिनी ।
कादम्बरी पानतुष्टा कायदम्भा कदोद्यमा ॥ १५१ ॥
[2]कुंकुलेपत्रमध्यस्था कुलाधारा धरप्रिया ।
कुलदेवशरीरार्धा कुलधामा कलाधरा ॥ १५२ ॥
[3]कामरागा भूषणाढ्या कामिनीरगुणप्रिया ।
कुलीना नागहस्ता च कुलीननागवाहिनी ॥ १५३ ॥
कामपूरस्थिता कोपा कपाली [4]बकुलोद्भवा ।
[5]कारागारजनापाल्या कारागारप्रपालिनी ॥ १५४ ॥
[6]क्रियाशक्तिः कालपङ्क्तिः कार्णपङ्क्तिः कफोदया ।
कामफुल्लारविन्दस्था कामरूपफलाफला ॥ १५५ ॥
कायफला कायफेणा कान्ता नाडीफलीश्वरा ।
कमफेरुगता गौरी [7]कायवाणी कुवीरगा ॥ १५६ ॥

---

१. कुलतामरमधस्था कुल ढक्का ग० ।
२. कुज्ञान ग० ।
३. नाग ग० ।
४. बन्दनोद्भवा ग० ।
५. कोरगा कजलापान ग० ।
६. क्रियापङ्क्तिः कर्ण पङ्क्ति······कफोदयः ग० ।
७. कामवाणी ग० ।

[1]कवरीमणिबन्धस्था कावेरीतीर्थसंगमा ।
कामभीतिहरा [2]कान्ता [3]कामवाकुभ्रमातुरा ॥ १५७ ॥
कविभावहरा भामा [4]कमनीयभयापहा ।
कामगर्भदेवमाता कामकल्पलतामरा ॥ १५८ ॥
कमठप्रियमांसादा कमठा [5]मर्कटप्रिया ।
किमाकारा किमाधारा कुम्भकारमनस्थिता ॥ १५९ ॥
काम्ययज्ञस्थिता चण्डा काम्ययज्ञोपवीतिका ।
कामयागसिद्धिकरी काममैथुनयामिनी ॥ १६० ॥
कामाख्या यमलाशस्था[6] कालयामा कुयोगिनी ।
कुरुयागहतायोग्या कुरुमांसविभक्षिणी ॥ १६१ ॥
कुरुरक्तप्रियाकारी किंकरप्रियकारिणी ।
कर्त्रीश्वरी कारणात्मा कविभक्षा कविप्रिया ॥ १६२ ॥
कविशत्रुप्रष्ठलग्ना कैलासोपवनस्थिता ।
कलित्रिधा त्रिसिद्धिस्था कलित्रिदिनसिद्धिदा ॥ १६३ ॥
कलङ्करहिता काली कलिकल्मष[7]कामदा ।
कुलपुष्परङ्ग[8]सूत्रमणिग्रन्थिसुशोभना ॥ १६४ ॥
कम्बोजवंगदेशस्था कुलवासुकिरक्षका ।
कुलशास्त्रक्रिया शान्तिः कुलशान्तिः कुलेश्वरी ॥ १६५ ॥
कुशलप्रतिभा काशी कुलषट्चक्रभेदिनी ।
कुलषट्पद्ममध्यस्था कुलषट्पद्मदीपनी ॥ १६६ ॥

---

१. करवी ग० ।
२. कान्दा ग० ।
३. कावाच ग० ।
४. कामनीय ग० ।
५. कामठ ग० ।
६. यमना ग० ।
७. कावदा ग० ।
८. कावज्ञस्तुक ग० ।

कृष्णमार्जारकोलस्था कृष्णमार्जारषष्ठिका ।
कुलमार्जारकुपिता कुलमार्जारषोडशी ॥ १६७ ॥
कालान्तकवलोत्पन्ना कपिलान्तकघातिनी ।
कलहासा[1] कालहश्री कहलार्था कलामला ॥ १६८ ॥
[2]कक्षपपक्षरक्षा च कुक्षेत्रपक्षसंक्षया ।
[3]काक्षरक्षासाक्षिणी च महामोक्षप्रतिष्ठिता ॥ १६९ ॥
अर्ककोटिशतच्छाया आन्वीक्षिकिकरार्चिता ।
कावेरीतीरभूमिस्था [4]आग्नेयार्कास्त्रधारिणी ॥ १७० ॥
इं किं श्रीं कामकमला पातु कैलासरक्षिणी ।
मम श्री इँ बीजरूपा पातु काली शिरस्थलम् ॥ १७१ ॥
उरुस्थलाब्जं सकलं तमोल्का पातु [5]कालिका ।
[6]ऊडुम्बन्यर्करमणी उष्ट्रोग्रा कुलमातृका ॥ १७२ ॥
कृतापेक्षा कृतिमती[7] कुंकारी किलिपिस्थिता ।
कुंदीर्घस्वरा क्रूमा केंकैलासकरार्चिका ॥ १७३ ॥
कैशोरी कैं करी कैं कें बीजाख्या नेत्रयुग्मकम् ।
कोमा मतंगयजिता कौशल्यादिकुमारिका ॥ १७४ ॥
पातु मे कर्णयुग्मन्तु क्रौं क्रौं जीवकरालिनी ।
गण्डयुग्मं सदा पातु कुण्डली [9]अंकवासिनी ॥ १७५ ॥
अर्ककोटिशताभासा अक्षराक्षरमालिनी ।
आशुतोषकरी हस्ता कुलदेवी निरञ्जना ॥ १७६ ॥

---

१. कलहंसा कलहश्रीः कलहार्या ग० ।
२. कक्षा ग० ।
३. कोक्षराक्षा ग० ।
४. स्तोक ग० ।
५. बालिका ग० ।
६. ऊडूमूलाकरमणी उद्धार्ग्रा कुलमातृका ग० ।
७. सति ग० ।
८. क्षयाविका ग० ।
९. स्वङ्क क० ।

पातु मे कुलपुष्पाढ्या पृष्ठदेशं [1]सुकुत्तमा ।
कुमारी कामनापूर्णा पार्श्वदेशं सदावतु ॥ १७७ ॥
देवी कामाख्यका देवी पातु प्रत्यङ्गिरा कटिम् ।
कटिस्थदेवता पातु लिङ्गमूलं सदा मम ॥ १७८ ॥
गुह्यदेशं काकिनी मे लिङ्गाधः कुलसिंहिका ।
कुलनागेश्वरी पातु नितम्बदेशमुत्तमम् ॥ १७९ ॥
कङ्कालमालिनी देवी मे पातु [2]चारुमूलकम् ।
जंघायुग्मं सदा पातु कीर्तिः चक्रापहारिणी ॥ १८० ॥
पादयुग्मं पाकसंस्था पाकशासनरक्षिका ।
कुलालचक्रभ्रमरा पातु पादाङ्गुलीर्मम ॥ १८१ ॥
नखाग्राणि दशविधा तथा हस्तद्वयस्य च ।
विंशरूपा कालनाक्षा सर्वदा परिरक्षतु ॥ १८२ ॥
कुलच्छत्राधाररूपा कुलमण्डलगोपिता ।
कुलकुण्डलिनी माता कुलपण्डितमण्डिता ॥ १८३ ॥
काकाननी[3] काकतुण्डी काकायुः प्रखरार्कजा ।
काकज्वरा काकजिह्वा काकाजिह्वा[4]सनस्थिता ॥ १८४ ॥
कपिध्वजा कपिक्रोशा कपिवाला[5] [6]हिकस्वरा ।
कालकाञ्ची विंशतिस्था सदाविंशनखाग्रहम् ॥ १८५ ॥
पातु देवी कालरूपा कलिकालफलालया ।
वाते वा पर्वते वापि शून्यागारे चतुष्पथे ॥ १८६ ॥
कुलेन्द्रसमयाचारा कुलाचारजनप्रिया ।
कुलपर्वतसंस्था च कुलकैलासवासिनी ॥ १८७ ॥

---

१. सुकत्तमा (?) ।
२. युग्मकम् क० ।
३. काकानना क० ।
४ कपिक्रोधा ग० ।
५. वाना ग० ।
६. कपि ग० ।

महादावानले पातु कुमार्गे कुत्सितग्रहे ।
राज्ञोऽप्रिये राजवश्ये महाशत्रुविनाशने ॥ १८८ ॥

कलिकालमहालक्ष्मीः क्रियालक्ष्मीः कुलाम्बरा ।
कलीन्द्रकीलिता कीला कीलालस्वर्गवासिनी ॥ १८९ ॥

दशदिक्षु सदा पातु इन्द्रादिदशलोकपा ।
नवच्छिन्ने सदा पातु सूर्यादिकनवग्रहा ॥ १९० ॥

पातु मां कुलमांसाढ्या कुलपद्मनिवासिनी ।
कुलद्रव्यप्रिया मध्या षोडशी भुवनेश्वरी ॥ १९१ ॥

विद्यावादे विवादे च मत्तकाले महाभये ।
दुर्भिक्षादिभये चैव व्याधिसंकरपीडिते ॥ १९२ ॥

कालीकुल्ला कपाली च कामाख्या कामचारिणी ।
सदा मां कुलसंसर्गे पातु कौले सुसंगता ॥ १९३ ॥

सर्वत्र सर्वदेशे च कुलरूपा सदावतु ।
इत्येतत् कथितं नाथ मातुः प्रसादहेतुना ॥ १९४ ॥

अष्टोत्तरशतं नाम सहस्रं कुण्डलीप्रियम् ।
कुलकुण्डलिनीदेव्याः सर्वमन्त्रसुसिद्धये ॥ १९५ ॥

सर्वदेवमनूनाञ्च चैतन्याय सुसिद्धये ।
अणिमाद्यष्टसिद्ध्यर्थं साधकानां हिताय च ॥ १९६ ॥

ब्राह्मणाय प्रदातव्यं कुलद्रव्यपराय च ।
अकुलीनेऽब्राह्मणे च न देयः कुण्डलीस्तवः ।
प्रवृत्ते कुण्डलीचक्रे सर्वे वर्णा द्विजातयः ॥ १९७ ॥

निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक्-पृथक् ।
कुलीनाय प्रदातव्यं साधकाय विशेषतः ॥ १९८ ॥

दानादेव हि सिद्धिः स्यान्ममाज्ञाबलहेतुना ।
ममक्रियायां यस्तिष्ठेत्स मे पुत्रो न संशयः ॥ १९९ ॥

स आयाति[1] मम पदं जीवनमुक्तः [2]स वासवः ।
आसावेन समांसेन कुलवह्नौ महानिशि ॥ २०० ॥
नाम प्रत्येकमुच्चार्य[3] जुहुयात् कायसिद्धये ।
पञ्चाचाररतो भूत्वा ऊर्द्ध्वरेता भवेद्यतिः ॥ २०१ ॥
सम्वत्सरान्ममस्थाने आयाति नात्रसंशयः ।
ऐहिके कायसिद्धिः स्यात् दैहिके सर्वसिद्धिदः ॥ २०२ ॥
वशी भूत्वा त्रिभार्गस्थाः स्वर्गभूतलवासिनः ।
अस्य भृत्याः प्रभवन्ति इन्द्रादिलोकपालकाः ॥ २०३ ॥
स एव योगी परमो [4]यस्यार्थेऽयं सुनिश्चलः ।
स एव खेचरो भक्तो नारदादिशुकोपमः ॥ २०४ ॥
यो लोकः प्रजपत्येवं[6] स शिवो न च मानुषः ।
स समाधिगतो नित्यो ध्यानस्थो योगिवल्लभः ॥ २०५ ॥
चतुर्व्यूहगतो देवः सहसा नात्रसंशयः ।
यः प्रधारयते भक्त्या कण्ठे वा मस्तके भुजे ॥ २०६ ॥
स भवेत् कालिकापुत्रो विद्यानाथः स्वयंभुवि ।
धनेशः पुत्रवान् योगी यतीशः सर्वगो भवेत् ॥ २०७ ॥
वामा वामकरे धृत्वा सर्वसिद्धीश्वरो भवेत् ॥ २०८ ॥
यदि पठति मनुष्यो मानुषी वा महत्या
सकलधनजनेशी पुत्रिणी जीववत्सा ।
कुलपतिरिह लोके स्वर्गमोक्षैकहेतुः
स भवति भवनाथो योगिनीवल्लभेशः ॥ २०९ ॥

---

१. समामाति ग० ।
२. स मानवः ग० ।
३. प्रत्यक् क० ।
४. यदि ग० ।
५. यस्यार्थेऽहं सुनिश्चला क० ।
६. प्रजिहोत्येवम् ग० ।

पठति य इह नित्यं भक्तिभावेन[1] मर्त्यो-
हरणमपि करोति प्राणविप्राणयोगः ।
स्तवनपठनपुण्यं कोटिजन्माघनाशं
कथितुमपि न शक्तोऽहं महामांसभक्षा ॥ २१० ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्र-प्रकाशे भैरवीभैरवसंवादे महाकुलकुण्डलिनी अष्टोत्तरसहस्र-नामस्तवकवचं नामषट्त्रिंशत्तमः पटलः[2] ॥



---

१. योगः ग० ।

२. अत्रेदं धेयम् । ग० पुस्तके पञ्चत्रिंशत् पटलानन्तरं पटत्रिंशदिति भ्रान्त्या लिखितम् । एतेन ग० पुस्तके षट्त्रिंशत् सप्तत्रिंशदिति पटलद्वयस्याभावो लक्ष्यते ।

# सप्तत्रिंशः पटलः

श्रीआनन्दभैरव उवाच—

श्रुतञ्च परमं ज्ञानं धर्माधर्मविवेचनम् ।
सर्ववेदान्तसारं च सारात्सारं परात्परम् ॥ १ ॥
कुण्डलीस्तवनं श्रुत्वा पूर्णोऽहं जगदीश्वरि ।
इदानीं श्रोतुमिच्छामि स्वाधिष्ठानं प्रकाशकम् ॥ २ ॥
यदि मे सुकृपादृष्टिरानन्दघनसञ्चये ।
वद श्रीकुण्डलीयोगं स्वाधिष्ठानविभेदनम् ॥ ३ ॥
येन क्रमेण भेदं स्यात्तत्प्रकारं विनिर्णय ।

श्रीआनन्दभैरवी उवाच—

महाकाल महावीर आनन्दसागरप्रिय[1] ॥ ४ ॥
योग्योऽसि योगमार्गाणामत[2] एव प्रकथ्यते ।
येन क्रमेण चक्रस्य भेदः स्यादमरो भवेत् ॥ ५ ॥
अमरो जितचित्तारिः क्रोधजित् प्रबलो बली[3] ।
धर्माधर्मज्ञानवांश्च[4] योगी भवति सज्जनः ॥ ६ ॥
परकालदर्शी विज्ञः स्यात् क्रतुश्रद्धापरायणः ।
अहंकारविहीनो यः स योगी भवति ध्रुवम् ॥ ७ ॥

---

३. आश्रय ग० ।
१. वर्गाणाम्र क० ।
२. पावनो वशी क० ।
३. ज्ञानरतो क० ।

महावीरसुसंगिनो च संगदोषविवर्जितः ।
महात्मापरमं ब्रह्मज्ञानी भवति योगिराट् ॥ ८ ॥
विख्यातः सर्वदेशे च किन्तु स्वाश्रयवर्ज्जितः ।
बालको विक्रमी धन्वी धनुर्वाणधरोऽव्ययः ॥ ९ ॥
स भवेत् योगमार्गेशो विवेकी [1]पापवर्जितः ।
अविद्याग्रन्थिनिश्चेष्टो विवेकधर्मचातकः ॥ १० ॥
चतुरो विषमज्ञानवर्जितो यज्ञकृत् शुचिः ।
स भवेद् योगिनीपुत्रो योगानामधिपो भवेत् ॥ ११ ॥
यदि योगस्थितो मन्त्री वायवीशक्तिनिर्भरः ।
स एव योगी षण्मासादिति मे तन्त्रनिर्णयः ॥ १२ ॥
यो मे तन्त्राणि जानाति सदर्थज्ञानजानि च ।
स एव चतुरो योगी मम भक्तो न संशयः ॥ १३ ॥
यदि वायुपानरतो मन्त्री भवति साधकः ॥ १४ ॥
अथ स्वाधिष्ठानं कुलवरगतं षड्दलगतं
प्रभाकारं विष्णोरतिशयपदं कामनिलयम् ।
महायोगेन्द्राणां मनसि [2]निलयं चारुकिरणम्
शरच्चन्द्रज्योत्स्नायुतमतिधनं भव्यविषयं ॥ १५ ॥
[3]सदाभावक्षेत्रे सकलसुधियो वेद······
यदामापक्षेमे सकल सुधियो वेदपथगाः ।
[4]विचारं कुर्वन्ति [5]क्षितिगतरताः श्रीप्रभृतयः
महाविष्णोः पीताम्बर [6]नरपते श्यामलतनोः ।
(प्रकाशस्यान्तःपटस्थ नट वरस्याति निलयम्)
विटच्छायामध्ये निवसति यथा गोकुलकुले ॥ १६ ॥

---

१. पाक ग० ।
२. निचयम् ग० ।
३. सदा भावक्षेत्रे ग० ।
४. ये कुर्वक्ति ग० ।
५. व्रता ग० । ६. नवगतः ग० ।

हरिध्यानं कुर्यान्निरवधिमहानन्दरसिकः
स एवात्मा साक्षादिह नव[1]वरः षोडशयुवा ।
महासर्पारिस्थं[2] स्थितिकरणगं[3]नागगमनम्
मुखं [4]वंशीनादध्वनिगुणधरं भावयति कः ॥ १७ ॥
स एवात्मा नित्यो यतिरिह [5]दले कोमलकुले[6]
कुलागारे सारे सरसिजयुते षड्दलवरे ॥
सुरानन्दश्रीदं दिवि [7]दमनकर्त्तारममदं
सुधाकान्तं कृष्णं परमपुरुषं भावयति कः ॥ १८ ॥
महाविद्यासिद्धं कुल[8]पतिमनोमान्ययजितम् ।
मुकुन्दं श्रीकृष्णं रसदलगतं स्वागम[9]गतम् ॥
मुरारिं पापारिं नवयुवतिहृत्पद्मसुगतम्
हृषीकेशं विष्णुं विषयकरणं भावयति कः ॥ १९ ॥
स [10]योगेन्द्रो ज्ञानी जयति सुकृतौ कौतुकवताम्
रमेशं श्रीकृष्णं रसविषहरं मानसचरम् ।
सरस्वत्या युक्तं कुलरसमयं मुक्तिजडितम्
भजे चैतन्यान्तं [11]सुरगुरुवरं मोक्षमयते[12] ॥ २० ॥

---

१. नयः ग० ।
२. सर्पाविस्थम् ग० ।
३. करणगण ग० ।
४. ·········शीलादध्वनि गुणधरं भावयति कः इति ग० ।
५. क्षणे ग० ।
६. दलं ग० ।
७. दवन ग० ।
८. ·····रति मनो ग० ।
९. दल ग० ।
१०. योगेभ्यो क० ।
११. तरुकरम् ।
१२. मोक्षमतये ग० ।

यतीन्द्रः सश्रीकः प्रचयति निजं भाव्यविषयम्
पुराणं योगीन्द्रं हरिमखिलपं कामनिलयम् ।
महासूक्ष्मं[1] द्वारं कुलवधुरतं वामकिरणम्
विशालाक्षं कृष्णं निजरसकुले कान्तममरम्[2] ॥ २१ ॥
कृपासाक्षीज्ञानं गुणगदितदेहं दाहरहितम्
महाशैलं[3] सत्यं कुवलयकरिं हन्ति मरणम् ।
अघावीशं श्रीशं शशिमुखिकराम्भोजयजितम्
तमात्मानं कृष्णं निजकुलदले योऽपि [4]भजति ॥ २२ ॥
महाशब्दोत्पन्नं प्रकृतिविकृतिं कारणकृतिं
कृपासिन्धुं कृष्णं कुलवधूशतामोदमिलितम् ।
जगन्नाथं स्तौति क्षिति पतिवशायोपकरणम्[5]
विराटं ब्रह्माण्डं [6]करणगमहाविष्णुमरणम् ॥ २३ ॥
विनोदं [7]व्याकर्तुं त्रिभुवनपतिः श्रीपतिरहो ।
प्रचण्डे संसारे [8]उदयति सदाभावसदने ।
महामेघश्यामस्त्रिफल[9]करुणासागरकुले
अमूल्ये [10]सञ्चारे विषयरसनासञ्चयविषम् ॥ २४ ॥
स कृष्णः श्रीविष्णुः प्रकृतिगदया हन्ति [11]सततम्
[12]अतः कृष्णो धेयः सुरनरगणैः पञ्चसुमुखैः[13] ।

---

१. महासूक्ष्मोदारम् ग० ।
२. कान्तमरतम् ग० ।
३. कैतम् ग० ।
४. भवति ग० ।
५. करणात् ग० ।
६. करणप ग० ।
७. व्यावर्त्यं ग० ।
८. तदयति ग० ।
९. पथ ग० ।
१०. संसारे ग० ।
११. मरण ग० ।
१२. अथो ग० ।
१३. सम्मुखैः ग० ।

कुलाम्भोजे षट्के मनरसदले ध्यानफलितः
किराती राकिण्या नयनकमलापानमधुरम् ॥ २५ ॥
धराधारं पूर्णं गगननिलयं कालपुरुषं
मनोगम्यं रम्यं नवनयनलावण्यरसिकम् ।
सदा ध्यायेत् कृष्णं कुरुगणरिपुं यः कुलपतिः
निरालम्बः श्यामः प्रकृतियमुनातीरतरुगः[1] ॥ २६ ॥
कुलीना गोपीभिः परिमिलितपार्श्वस्थलसुखः
प्रधानः क्षेत्रज्ञः [2]क्षितिपतिकराम्भोजयजितः ।
प्रकाशात्मा नाथः प्रचयकरुणो ध्येयहृदया[3]
मनोधर्मं च्छत्रं त्रिविधगुणगानाश्रितकरम् ॥ २७ ॥
त्रिकाण्डस्थं[4] खण्डोद्भववनरसं प्राणरसिकम्
यदा स्तौति प्रातः समयमफले चारुवरदम् ।
महामोक्षक्षेत्रं कुलवधुयुतं कृष्णपरमम्
गुणेशं राधेशं[5] रजनिविधुनितं[6] वेदनिलयम् ॥ २८ ॥
क्रियादक्षं सूक्ष्मं समयगुणयो[7]गाङ्कजडितम्
त्रिकोणस्थं गंगाजलगलितसारं तारकतनुम् ।
महाकालानन्दं गगनघनवर्णं सजलकम्
प्रभावारं [8]भावं तरुणनववपुः श्रीधरमलम्[9] ॥ २९ ॥

---

१. तरुपः ग० ।
२. जनितः ग० ।
३. हृदयः ग० ।
४. त्रिकामस्थं स्वर्णोद्भव ग० ।
५. व्याधेशम् ग० ।
६. व्रजनिधियुगम् ग० ।
७. योगयाग ग० ।
८. तारम् ग० ।
९. श्रीधरमणम् ग० ।

[1]वनोत्फुलाम्भोजामन विरचना भालकलया
महाशोभारूपं कुलपुरुषगं व्याश्रयति[2] यः ।
स योगी संसारे भवतिरसनायोगनिरतः
मनो यो व्याधाय प्रचुरफलदं कृष्णमखिलम् ॥ ३० ॥
महाज्ञानोत्साहं गतिगुणवहिः प्राणनिचयम्
जगत्तारं ब्रह्म [3]निरवधिमहायोगकिरणम् ।
यदालोकस्तौति प्रतिदिनमिहानन्दघटितम्
विकारं सर्वेषां ग्रहणनिलनंभास्करविधोः ॥ ३१ ॥
महाराहुग्रासं शतशतमहापुण्यनिकरम्
कुलानन्दं विष्णुं शशिशत [4]घटारामकिरणम् ।
मनोगम्यं सूक्ष्मं त्रिगुणजडितं भावयति कः ॥ ३२ ॥
कृष्णभक्तिं मुदाकृष्णं ध्यात्वा कृत्वायतिर्भवेत् ।
श्रीकृष्णचरणाम्भोजे तस्यभक्तिर्न संशयः ॥ ३३ ॥
कृष्णब्रह्म कृष्णब्रह्मा च त्रिध्यानपरायणः ।
स कृष्णस्तं जनं नीत्वा ददाति अपि शंकर ॥ ३४ ॥
विनाकृष्णपदाम्भोजं स्वाधिष्ठानं [5]कुतो जयम् ।
कृष्णध्यानान्महापद्मभेदं प्राप्नोति शंकर ॥ ३५ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्रप्रकाशे भैरवी भैरव सम्वादे स्वाधिष्ठान श्रीकृष्णराकिणीसाधनं नामसप्तत्रिंशत्तमः पटलः ॥



---

१. वलो फुल्लाम्भोजमल विवचनाभान ग० ।
२. व्याग्रयतिजे ग० ।
३. घोर ग० ।
४. धाम ग० ।
५. यजेत् ग० ।

# अष्ट त्रिंशः पटलः

आनन्द भैरवी उवाच

शृणु नाथ प्रवक्ष्यामि श्रीकृष्णसाधनोत्तमम् ।
येन क्रमेण भक्तिः स्यात्कालजालवशो भवेत् ॥ १ ॥
मम पादाम्बुजे भक्तिर्भवत्येव न संशयः ।
भक्तिमान् यः साधकेन्द्रो महाविष्णुं भजेद्यदि ॥ २ ॥
शिवतुल्यो भवेन्नाथ मम भक्तो महीतले ॥ ३ ॥
श्रीकृष्णं जगदीश्वरं त्रिजगतामानन्दमोक्षात्मकम्
सम्पूर्णं त्रिगुणावृतं गुणधरं सत्त्वाधिदैवं परम् ।
लिङ्गाधः स्थितिराज्यपाल पुरुषं पञ्चाननस्थायिनम्
श्रीविष्णुं शुभदं जनो यदि भजेल्लोकः सशक्तिं [1]सुखी ॥ ४ ॥
आदौ कामं त्रिसर्गं कुलवधनियुतं कामबीजं त्रिसर्गं
श्रीकृष्णं वारयुग्मं प्रणययुगलकं चन्द्रिकाकाशयुक्तम् ।
ब्रह्मद्वन्द्वं भजामि प्रकृति पुरुषिकां काकिनीं तत्परे च
भूयो भूयो भजामि श्रवणगलयनं वह्निजायाविलग्नम् ॥ ५ ॥
एतन्मन्त्रं जपित्वा प्रणवमिति नमोऽन्तं तथाद्ये मिलित्वा
भूयो भूयो [2]नमोऽन्तं त्रिभुवनसहितं क्षोभयेत्तत् क्षणेन ।
राजश्रीस्तस्य शीर्षे निरवधि वसुधा मन्दिरे [3]संस्थिरा स्यात्
कालच्छेदं प्रकृत्य प्रवसति सुमुखी ब्रह्मदण्डे च काले ॥ ६ ॥
ततः प्राणे देवनाथ मम सन्तोषवर्द्धन ।
इदानीं नरसिंहस्य मन्त्रं शृणु महाप्रभो ॥ ७ ॥

---

१. सुधीः ग० ।

२. मनस्थ ग० ।

३. संशिवा ग० ।

कान्तबीजं समुद्धृत्य युगलं युगलं स्मृतम् ।
महानृसिंहमन्त्रे पूजयामि नमो नमः ॥ ८ ॥
स्वाधिष्ठाने महापद्मे मनोनिष्पापहेतुना ।
मनोविधाय यो योगी जपेन्मन्त्रं पुनः पुनः ॥ ९ ॥
एतन्मन्त्रजपेनापि सिद्धो भवति साधकः ।
एतन्मन्त्रप्रभावेण भावसिद्धिं चणाल्लभेत् ॥ १० ॥
साधको यदि भूमिस्थः साधयेत्तु हरेर्मनुम् ।
[1]रेणुसंख्या क्रमेणैव सिद्धिं प्राप्नोति [2]वीर्यतः ॥ ११ ॥
अथ वक्ष्ये महादेव सर्ववर्णसुसारकम् ।
वर्णमालास्वसंशक्तो जप्त्वा सिद्धिमवाप्नुयात् ॥ १२ ॥
सिद्धिमन्त्रं प्रार्थयते यदि मर्त्यो निराश्रयः ।
निर्जने [3]संस्थिरो भूत्वा एकाकी [4]दीपवर्जितः ॥ १३ ॥
निःशंकं प्रजपेन्मन्त्रं स्वाधिष्ठानाब्ज [5]सङ्गते ।
वशीकृतं जगत्सर्वं येन तत्क्रममाश्रृणु ॥ १४ ॥
प्रणवं पूर्वमुच्चार्य नान्तबीजं तथोद्गरेत् ।
वह्निबीजसमालग्नमधोदन्तस्वरान्वितम् ॥ १५ ॥
नादबिन्दुसमायुक्तं पुनर्वारद्वयं वदेत् ।
[6]नरसिंहाय शब्दान्ते पुनर्वारत्रयं वदेत् ॥ १६ ॥
देवीबीजं शक्तिबीजं स्वाहान्तं मनुमुद्गरेत् ।
एतन्मन्त्रप्रयोगेण कुण्डलीवशमानयेत् ॥ १७ ॥
स्वाधिष्ठाने स्थिरीभावं प्राप्नोति साधकाग्रणीः ।
सर्वेषां प्राणगो भूत्वा प्रबलोऽसौ महीतले ॥ १८ ॥

---

१. एवमेव ग० ।
२. धैर्यतः ग० ।
३. सुस्थिरो ग० ।
४. दिग इति ग० ।
५. सङ्कशात् ग० । ६. नव सिंह ग० ।

शीतं रौद्रं समं तस्य पापापापं जयाजयम् ।
धर्माधर्मः सदाज्ञानं नित्यज्ञानं समाप्नुयात् ॥ १९ ॥
पुनः श्रीकृष्णमन्त्राश्च सर्वदेवनिषेवकाः ।
यज्ज्ञात्वा देवताः सर्वा सर्वदिङ्मुखपालकाः ॥ २० ॥
तत्प्रयोगं महादेव शृणु सिद्धेश्च लक्षणम् ।
विना कृष्णाश्रयेणापि ब्रह्मातुष्टो न कुत्रचित् ॥ २१ ॥
न तुष्टा कुण्डली देवी पशुभावं विना प्रभो ।
पशुभावे ज्ञानसिद्धिर्वीरभावे हि मोक्षभाक् ॥ २२ ॥
दिव्यभावे समाधिस्थो जीवन्मुक्तः स उच्यते ।
कान्तबीजं समुद्धृत्य शक्रवामस्वरान्वितम् ॥ २३ ॥
नादबिन्दुसमाक्रान्तं कृष्णसम्बोधनं पदम् ।
पुनः पूर्वमनुं युक्ता त्र्यक्षरात्मा महामनुः ॥ २४ ॥
एतन्मन्त्रजपं कृत्वा योगी भवति योगिराट् ।
योगोऽयं परमाह्लाद कारकोऽनन्तरूपकः ॥ २५ ॥
बहुभिः किं कथनीयं यः करोति फलं लभेत् ।
ध्यायेत् श्रीगोपिकानाथं राकिणीमण्डलेश्वरम् ॥ २६ ॥
जगतां सत्त्वनिलयं श्रीकृष्णं गोकुलेश्वरम् ।
स्वाधिष्ठानस्थितं श्यामं यजेद्भुजचतुष्टयम् ॥ २७ ॥
शङ्खचक्रगदापद्म महाशोभामनोरमम् ।
सर्वविद्यागतं काम्यं श्रीगोविन्दं सुशीतलम् ॥ २८ ॥
महामोहहरं नाथं वनमालाविभूषितम् ।
कोटिकन्याकराम्भोजजयितं[1] सर्वसंगतम् ॥ २९ ॥
किरीटिनं महावीरं बालेन्दुं चूडयान्वितम् ।
गुञ्जामाला शोभिताङ्ग श्रीनाथं परमेश्वरम् ॥ ३० ॥

---

१. जितं सर्वज्ञ ग० ।

पीताम्बरं मन्दहास्यं षट्पद्मदलमध्यगम् ।
कामिनीप्राणनिलयं वसुदेवसुतं हरिम् ॥ ३१ ॥
एवं ध्यात्त्वा षड्दले च सदा वक्षःस्थ कौस्तुभम् ।
राजराजेश्वरं शौरिं भाव्यं श्रीवत्सलाञ्छनम् ॥ ३१ ॥
स्वाधिष्ठानगतं ध्यायेन्मुरारिसिद्धिगो नरः ।
एवं ध्यात्त्वा पुरा ब्रह्मा नारायणगुणोदयः ॥ ३३ ॥
मनः कल्पितद्रव्यैश्च पूजयेत्परमेश्वरम् ।
षड्दले च महापद्मे संध्यायेत् हरिमायजेत् ॥ ३४ ॥
षोडशोपचारयुक्तैर्मानसक्षेत्रसम्भवैः ।
मनः कल्पितपीठे च स्थापयित्त्वा हरिं गुरुम् ॥ ३५ ॥
योगेश्वरं कृष्णमीशं राधिकाराकिणीश्वरम् ।
एकान्तचित्ते चारोप्य कृष्णं पीठे प्रपूजयेत् ॥ ३६ ॥
तत्र दलाष्टकं पद्मं तत्र षट्कोण कर्णिकम् ।
वेदद्वारोपशोभञ्च संनिर्म्मायमनोहरम् ॥ ३७ ॥
पुनः पुनर्यदा[1] ध्यायेत् षड्दलेषु दलेऽष्टकम्[2] ।
पञ्चोपचारैर्दशकैः श्रीविष्णुं परिपूजयेत् ॥ ३८ ॥
गन्धादयो नैवेद्यान्ता पूजापञ्चोपचारिका ।
आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ॥ ३९ ॥
मधुपर्काचमनस्नानवसनाभरणानि च ।
सुगन्धिसुमनोधूपदीपनैवेद्यवन्दनम् ॥ ४० ॥
प्रयोजयेदर्चनायामुपचारांस्तु षोडश ।
विष्णोराराधने कुर्यात् सर्वत्रविधिरेष यः ॥ ४१ ॥
विधिः स्यात् कृष्णविश्वेश समुद्भूतस्य सत्पतेः ।
दशोपचारकथनं श्रूयतां वल्लभ प्रभो ॥ ४२ ॥

---

१. मुदा ग० ।

२. सर्वज्ञया ग० ।

पाद्यमर्घ्यं तथाचामं मधुपर्काचमनं तथा ।
गन्धादयो नैवेद्यान्ता उपचारा दशक्रमात् ॥ ४३ ॥
विष्णुं सम्पूज्य [1]धीमान् हविष्याशीर्जितेन्द्रियः ।
सर्वदा परमानन्दः कालिकावश सेवकः ॥ ४४ ॥
सर्वज्ञानधरो वीरो विवेकी सर्वदर्शकः ।
संभावयेत् स्वाधिष्ठाने निरन्तरं महाशुचिः ॥ ४५ ॥
बालकक्रियायान्याप्तो भावज्ञानी निरामयः ।
स भवेत् कालिकापुत्रो यः कृष्णभाव तत्परः ॥ ४६ ॥
कृष्णं सञ्चिन्तयेन्मूलकमलोद्दूर्ध्वे कुलात्मकम् ।
स भवेत्कालिकापुत्रोऽष्टाङ्गसिद्धिगुणान्वितः ॥ ४७ ॥
मानसैः पूजनं कृत्वा शंखस्थापनमाचरेत् ।
यत्कृत्वा मानसं योगं न कुर्याद्बहिरर्चनम् ॥ ४८ ॥
मूलमन्त्रदेवतायाः साधने दैवतं यजेत् ।
देवस्य दक्षिणस्थांश्च पूर्वोपास्य सुसंस्थितान ॥ ४९ ॥
पूजयेद्गन्धपुष्पाद्यैस्तुल्यमन्त्रेण मन्त्रवित् ।
ततः श्रीकृष्णपादाब्जं ध्यानं कुर्यान्मनोलयम् ॥ ५० ॥
एवंक्रमेण तत्पद्मे स्थिरो भवति योगिराट् ।
यः करोति शुद्धभावं महामोहहरं हरिम् ॥ ५१ ॥
स्थापयित्वा च षट्पद्मे महामोक्षमवाप्नुयात् ।
यः प्रधानगुणज्ञश्च स मे शास्त्रार्थमाश्रयेत् ॥ ५२ ॥
इहकाले शत्रुलोके निवसत्येव योगिराट् ।
पादाम्भोजे मनोदद्यान्मखकिञ्जल्कचित्रिते ॥ ५३ ॥
जंघायुगे चारुरामकदलीकाण्डमण्डिते ।
उरुद्वये मत्तगजकरदण्डसमप्रभे ॥ ५४ ॥

---

१. शुद्धःस्यात् ग०

गंगावर्तगभीरेतु नाभौ शुद्धविलेऽमले ।
उदरे वक्षसि तथा हरौ श्रीवत्सकौस्तुभे ॥ ५५ ॥
पूर्णचन्द्रायुतपक्षे ललाटे चारुकुण्डले ।
शङ्खचक्रगदाम्भोजे दोर्दण्डपरिमण्डिते ॥ ५६ ॥
सहस्रादित्यसंकाशे सकिरीटकुलद्वयम् ।
स्थानेष्वेषु यजेन्मन्त्री विशुद्धः शुद्धचेतसा ॥ ५७ ॥
मनोनिवेश्य कृष्णे वै तन्मयो भवतिध्रुवम् ।
यावन्मनोलयं याति कृष्णे स्वात्मनि चिन्मये ॥ ५८ ॥

इति श्री रुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे षट्चक्रप्रकरणे भैरवभैरवीसम्वादे श्रीकृष्णस्वाधिष्ठानप्रवेशो-नाम अष्टत्रिंशत्तमः पटलः ॥



# एकोनचत्त्वारिंशः पटलः

श्रीआनन्दभैरवी उवाच—

अथ नाथ प्रवक्ष्येऽहं संसारसाधनोत्तमम् ।
येन साधनमात्रेण योगीभवति तत्क्षणात् ॥ १ ॥
अनायासेन सिद्धिः स्याद्यद्यन्मसि वर्त्तते ।
त्रैलोक्यं मोहयेत्क्षिप्रं त्रैलोक्यं वशमानयेत् ॥ २ ॥
[1]रामेण सहितं नित्यं जगतां साक्षिणं वरम् ।
यामदग्न्यकराम्भोज सेवितं सर्वसेवितम् ॥ ३ ॥
अनन्त सत्त्वनिलयं वासुकी [2]सङ्गमाकुलम् ।
[3]अष्टहस्ताग्र सुश्रीदं नानालङ्कार शोभितम् ॥ ४ ॥
स्वाधिष्ठानगतं ध्यात्वा शीतलो जायते वशी ।
तत्स्तोत्रं शृणु मे नाथ यत्पाठात् सिद्धिमाप्नुयात् ॥ ५ ॥
ब्रह्मादयः सुराधीशा मुनयः क्रतुरक्षकाः ।
एतत् स्तोत्रं पुराकृत्वा जीवन्मुक्तो महीतले ॥ ६ ॥
अतः श्रीकालिकानाथ स्तोत्रं शृणु महत्फलम् ॥ ७ ॥

श्रीविष्णोरद्भुतकर्मणो ब्रह्मर्षिस्त्रष्टुप्छन्दः
श्रीविष्णु श्रीकृष्णः श्रीनारायणो देवता सर्व-
स्तोत्रसारकवचमन्त्रसिद्ध्यर्थे विनियोगः ॥

श्रीकृष्णं जगतामधीशमनघं ध्यानात्सिद्धिप्रदम् ।
गोविन्दं भवसिन्धुपारकरणं सन्तारणं कारणम् ।
श्रीविष्णुं वनमालिनं नरहरिं नारायणं गोकुलम्
योगेन्द्रं नरनाथमादिपुरुषं वृन्दावने भावयेत् ॥ ८ ॥

---

१. स्वाधिष्ठानगतं विष्णु संसारं सारप्रदं हरिम् ।
यस्तौति प्रत्यहं भक्त्या स्वाधिष्ठानाक्षरस्थिरम् ॥
वादिलानावर्णं युतं हिमांशु परिशोभितम् क० ।

२. संकुलेक्षणम् ग० ।  ३. अष्टहस्तो ग्रहम् ग० ।

मोक्षश्रीसहितं कृतान्तविकृतं[1] धर्मार्णवं सुन्दरं
श्रीरामं[2] बलरामभावविमलं नित्याकुलं सत्कुलम् ।
श्रीश्यामं [3]कनकादिहार [4]विलसत्लम्बोदरं श्रीधरम्
तं वन्दे हरिमीश्वरं [5]गुणवतीमायाश्रयं स्वाश्रयम् ॥ ९ ॥
वैकुण्ठेशमशेषदोषरहितं सायुज्यमोक्षात्मकम्
नानारत्नविनिर्मिता मम पूजा राजेन्द्रचूडामणिम् ।
शोभामण्डलमण्डितं सुरतरुच्छायाकरं योगिनम्
विद्यागोपसुतावृतं[6] गुणमयं वाक्सिद्धये भावयेत् ॥ १० ॥
स्वाधिष्ठाननिकेतनं परजनं विद्याधनं मायिनम्
श्रीनाथं कुलयोगिनं त्रिभुवनोल्लासैकबीजं प्रभुम् ।
संसारोत्सवभाववल्लभनिरतं[7] सर्वादिदेशं सुखम्
वन्देऽहं वरसर्पशत्रुसफले[8] पृष्ठेस्थिरानन्ददम्[9] ॥ ११ ॥
[10]भावाढ्यं भवभावयोगजडितं जाड्यापहं [11]भास्वरम्
नित्यं शुद्धगुणं गभीरधिषणामोदैकहेतुं [12]पतिम् ।

---

१. विकृतिम् ग० ।
२. श्री बालम् ग० ।
३. ककुरादि ग० ।
४. विगलत् ग० ।
५. गुणवताम् क० ।
६. रतम् क० ।
७. नाम क० ।
८. सकले ग० ।
९. नन्दनम् ग० ।
१०. भावान्तम् ग० ।
११. भासुरम् ग० ।
१२. परम् ग० ।

कीर्त्तिक्षेमकरं महाभयहरं[1] कामाधिदैवं शिवम्
तत्तत्षड्दलमध्यगेहरुचिरानन्दैकदेशास्पदम् ॥ १२ ॥
वन्दे श्रीपतिमच्युतं नरहरिं दैत्यारिशिक्ष्याकुलम्[2]
गन्धर्वप्रभृतेः सुगायनरतं वंशीधरं भावदम् ।
रत्नानामधिपं गतिस्थमचलं गोवर्धनाधारणम्
विश्वामित्रतपोधनादिमुनिभिः संसेवितं [3]तैजसम् ॥ १३ ॥
वन्दे गोविन्दपादाम्बुजमजमजितं[4] राजितं भक्तिमार्गे
[5]सत्त्वोत्पन्नं प्रभुत्वं परगणनमितं चारुमञ्जीरहारम् ।
हंसाकारं [6]धवलगरुडानन्द पृष्ठे [7]निमग्नं
बन्धूकारक्तसारान्वितचरणतलं [8]सर्वदाशान्तरालम् ॥ १४ ॥
राकिण्याः प्रेमसिद्धं नववयसिगतं [9]गीतवाद्यादिरागम्
रागोत्पन्नं [10]सुफलगुणदं गोकुलानन्दचन्द्रम् ।
वाणी लक्ष्मी प्रियन्तं त्रिभुवनसुजनाह्लादकर्त्तारमाद्यं
बन्दे सिद्धान्तसारं गतिनतिरहितं [11]सारसंकेतितास्तम् ॥ १५ ॥
कामं कामात्मकं तं विधुगतशिरसं कृष्णसम्बोधनान्तम्
बीजं कामं पुनस्तत् पुरुषसुरतरुं भावयित्वा भजेऽहम् ।
श्रीकृष्णं कृष्णकृष्णं निरवधिसुखदं सुप्रकाशं प्रसन्नम्
स्वाधिष्ठानाख्यपद्मे [12]मनसिगतोभवे सिद्धिस्थलस्थम् ॥ १६ ॥

---

१. भवहरम् ग० ।
२. मिक्ष्वाकुगगम् ग० ।
३. तेजसम् ग० ।
४. मजयमजितम् ग० ।
५. मल्लोत्पन्नम ग० ।
६. बलधर ग० ।
७. निलग्नम् क० ।
८. ज्ञानवालम् ग० ।
९. वाणम् ग० ।
१०. सुसकल ग० ।
११. स्तम् इति ग० । १२. मनसि गत भवेसिद्धि सिद्ध स्थल स्यम् ग० ।

आकाशे चारुपद्मे [1]रसभयवलगं रक्तवर्णं प्रकाण्डम्
आत्मारामं नरेन्द्रं सकलरतिकरं कंसहन्तारमादिम् ।
आद्यन्तस्थानहीनं [2]विधिहरगमनं सेन्द्रनीलामलाभम्
[3]भावोत्साहंत्रिसर्गस्थितिपरममरं भावये भावसिद्ध्यै ॥ १७ ॥
सर्वेषां ज्ञानदानं रसदलकमले सर्वदा त्वं करोषि
आत्मानन्दं[4] [5]सुधादिप्रियधनगुणिनामेकयोगप्रधानम् ।
मायापूर्णः प्रचयनवरसः प्रीतिदेशः[6] प्रभेगः प्रभेकः
[7]श्रीराजाख्यः प्रपूर्णः मयिधन रहिते दृष्टिपातं भवादौ ॥ १८ ॥
काली श्री[8]कुण्डलिन्याःपरगृहनिरतं[9] [10]भावक ब्रह्मरूपम्
मुक्तिच्छत्रं [11]पुरेशं निधनजनसुखं भार्ययाक्रीडयन्तम् ।
[12]सभाक्षेत्रं नेत्रं नयमानमयमत्पुरसंस्थाभिषेकम् ॥ १९ ॥
ध्यात्वाऽहं प्रणमामि सूक्ष्मकमले [13]लोकाधिपं व्याधिपम्
वैकुण्ठं कृष्णमीडे कुरुभवविभवक्षेमहन्तारमन्तम् ।
शान्तानां ज्ञानगम्यं स्वनयनकमले पालयन्तं त्रिमार्ग-
वज्रारिं पूतनारिं द्वयवकनरकध्वान्तसंहारसूरम् ॥ २० ॥

---

१. वममममरुणसम् (?) क० ।
२. वहगहनम् ग० ।
३. वर्गं ग० ।
४. प्रेमानन्दम् ग० ।
५. गुण धनिनाम् क० ।
६. प्रातिदेशः प्रभेगः ग० ।
७. श्री वधक्षेमहीने मयिधन रहिते दृष्टिपात्रं तवादौ ग० ।
८. श्री कण्ठनिल्याः ग० ।
९. पर गृह निगतम् ग० ।
१०. तारक ग० ।
११. पुरवश निधनम् ग० ।
१२. सम्भाक्षेत्रे त्रिनेत्रं वरमणिमयशतपूर संज्ञात्रियेकम् क० ।
१३. हरण..............न्तारमन्तम् ।

मान्यं लोकेषु सर्वेष्वतिशयमनसं केवलं निर्मलञ्च ।
ओंकारं कारणाख्यं सुगतिमतिमतां मातृकामन्त्रसिद्धं
सिद्धानामादिसिद्धं सुररिपुममलं कालरूपं रिपूणाम् ।
मूलाधर्वे षड्दलान्ते मनसि सुविमले पूरयित्वा मुकुन्दम् ॥ २१ ॥

नित्यं [1]सम्भावयेऽहं निजतनुसमता सिद्धये पूजयामि
त्वं साक्षादखिलेश्वरः प्रियकरः श्रीलोकहस्तार्चितः ।
क्षौणीशः प्रलयात्मकः प्रतिगुणी ज्ञानी त्वमेकोमहान् ॥ २२ ॥

यद्येवं ममपामरस्य कलुषं श्रीधर्महीनान्दितम्
कृत्वापादतले यदीहनियतं [2]व्यारक्ष रक्षात्मगम् ।
[3]राधाकृष्णपदामालाम्बुजतलं [4]चैतन्यमुक्त्याकुलम्
सर्वत्रादिगमागमं त्रिगमनं निर्वाणमोक्षाश्रयम् ॥ २३ ॥

बालं वैरिविनाशनं सुखमयं कैवल्यमोक्षास्पदं-
दैवं देवगणार्चितं रसदले चारोपयामिप्रभो !
निर्दिष्टं भुवनाश्रयं [5]यतिपति निर्वाणमोक्षस्थितम्
निर्वाणादिकमोदने प्रचपलं श्रीचञ्चलासंकुलम् ॥ २४ ॥

वन्देऽहं परमेश्वरं सकलदैत्यानां बलप्राणहम् ।
हंसारूढंनिरक्षणं क्षणगतं वाणीपतिं भूपतिम्
वाञ्छाकल्पलतापतिं कुलपतिं विद्यापतिं गोपतिम् ॥ २५ ॥
श्रीविद्यापतिमादिदेवपुरुषं[6] विश्वेश्वरप्रेमगम् ।

---

१. रम्भावयेऽहं निज तनु समसिद्धये ग० ।
२. व्यावक्ष रक्षात्मकः ग० ।
३. पदासन ग० ।
४. सूक्त्या ग० ।
५. यदुपति ग० ।
६, वपुषम् ग० ।

[1]श्रीकुम्भोद्भवकालसत्त्वनिकरं [2]त्वां भास्करं भावये।
सिद्धानाम[3]भिचिह्नयोगनिरतं रक्षत्वमादौ हि माम् ॥ २६ ॥
प्रभोनिः सकेतं गुणमणिमतं श्रेयसि मतम्
[4]मतामन्तः सुस्थं विगलितमहाप्रेमसुरसम्।
मुदावन्दे[5] कृष्णं हरकरतलाम्भोज यजितम् ॥ २७ ॥
प्रभापुञ्जं [6]रामाश्रयपदमदं कामकुशलं
महामन्त्रच्छायां रजनिमिलितं ध्वान्तजडितम्।
त्रिकोणस्थं कुस्थं कुगतिसुगतिं कारणगतिं
[7]प्रलीनं संस्थानं जगति जगतां धर्ममुदयम् ॥ २८ ॥
रमेशं वाणीशं विधिगतपदं शम्भु निगतम्
त्रिकालं योगानां नयनकमलं शब्दनिरतम्।
कुलानन्दं गोपीजनहृदय[8]गं गोपि यजितम्
विधानं त्वामिन्द्रं [9]गुरुतरमुपेन्द्रं हरिरिपुम् ॥ २९ ॥
मुदा त्वां वन्देऽहं [10]चपलं तां मे नवहवे
[11]कुलालापश्रद्धामयमखिलसिद्धिप्रदमनम्।
[12]मलातीतं नीतं सुरनरसतां शास्त्रभवनम् ॥ ३० ॥

---

१. गङ्गोद्भव ग०।
२. तम् ग०।
३. मति ग०।
४. मतास्तस्थम् ग०।
५. मुदानन्दे ग०।
६. सारा इति ग०।
७. प्राणीनां संस्थम् ग०।
८. हृदयरागं गोपभाजेतम् ग०।
९. सुरेन्द्रं सुररिपुम् ग०।
१०. त्वमपि चपलम् ग०।
११. कुलाना ग०।
१२. मनातीतम् ग०।

विनोदं नारीणां हृदयरसिकं शोकरहितम् ।
विराजं यज्ञानां [1]हितमतिगुणं यामि शरणम् ॥ ३१ ॥

एतत्सम्बन्धमात्री[2] [3]ममकुलशिरसि स्थायिनं[4] पातुनित्यं,
गोपीनां प्राणनाथः प्रतिदिनमनिशं भालदेशं प्रपायात् ।
भालाधोदेशसंस्थं [5]समवतु सहसा राजराजेश्वरेशः,
गोपान्वन्वो सुरेशः स्थित्यन्तशास्त्रनेत्रं[6]
सुखमखिलमयः [7]कण्ठच्छत्राभिसंस्थम् ॥ ३२ ॥

प्रष्ठस्थं पातु शौरिः प्रतिदिनममरोलिङ्गवाह्यं कटिस्थम्
शम्भुप्रेमाभिलाषो मम तु कुलपदं गुह्यदेशं प्रपायात् ।
आनन्दोद्रेककारी सकलतनुगतं पातु नित्यं मुरारिः[8]
दैत्यारिश्चोरुमूलं नरहरिवताजंघया पादपद्मम् ॥ ३३ ॥
एतत्स्तोत्रं पठेद्विद्वान् नियतोभक्तिमान् शुचिः ।
स्थिरोभवति मासेन षड्दले सर्वसिद्धभाक् ॥ ३४ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे
षट्चक्रप्रकाशे भैरवीभैरवसंवादे श्रीकृष्णस्तवनकवचं-
नामैकचत्वारिंशत्तमः पटलः ॥



१. सति ग० ।
२. मानी ग० ।
३. मय ग० ।
४. स्थायिनपते (?) ग० ।
५. समरतु सहसरोजराजे ग० ।
६. स्थित्यन्ते शस्त्रिनेत्रम् ग० ।
७. भवः कण्ठकृत्वाभि संस्यम् ग० ।
८. सुरारिः क० ।

## चत्वारिंशः पटलः

श्री आनन्दभैरवी उवाच—

अथ नाथ प्रवक्ष्यामि शृणुष्वावहितो मम।
येनक्रमेण लोकानां योगकार्यं दृढं भवेत् ॥ १ ॥
सर्वत्रभावग्रस्तः सः सिद्धो भवति भैरव।
यो भवेद्भैरवो देवो भुवने सर्वगो हि सः ॥ २ ॥
क्रियादक्षो महावीरो वीरवल्लभभावकः।
भावयित्वा वर्णमालां मध्ये जप्त्वा दिवानिशम् ॥ ३ ॥
हविष्याशी प्राणवायुरतो वेदान्तपारगः।
सिद्धान्तवेत्ता सर्वेषां शास्त्राणां निर्णयप्रिय ॥ ४ ॥
गाथाज्ञानी परानन्दो विवेकी [1]भावतत्परः।
भाववेत्तारहस्यार्थ ज्ञानी कोविद वेदवित् ॥ ५ ॥
वाक्यसिद्धि ज्ञानपरः सत्यवादी दृढासनः।
भावयेत् षड्गतं वर्णं ध्यानं कुर्यात् पृथक् पृथक् ॥ ६ ॥
षट्पद्मस्थो भावयेद्वै षड्वर्णध्यानपूर्वकम्।
[2]वादिलान्ताक्षरं ध्यायेन्महाविद्या निषेवकः ॥ ७ ॥
[3]वकारं सौन्दर्यं स्वकिरणमयं भाव्यमतुलम्
मुकुन्द श्रीभक्तिप्रियमणज्ञकं[4] पूर्वदलगम्।
विशिष्टज्ञानान्तं सुखरनतं कोटिकिरणम्
विभाव्य श्रीलक्ष्मीं गमयति झटित् कालपुरुषम् ॥ ८ ॥

---

१. सभवेत्परः ग०।
२. वादिनान्त ग०।
३. विकारम् ग०।
४. मणयकम् ग०।

[1]द्विवर्णं श्रीनाथं सुखयतिभकारं रसदले
त्रिकोणापार्श्वस्थां[2] चपलशकलं शम्भुनिलयम् ।
महारक्ताकारं तरुणविगतं [3]भीममकुलम्
कुलागारस्थानं [4]कुलरमणीरक्तायुतमिति ॥ ९ ॥
यदाध्यायेत् ज्ञानी निरवधि मुदा शोकविषहम्
त्रिलोकानां स्थानं भुवनशरणं [5]प्रातविसुखी ।
महामोक्षद्वारे भवति स महान् सर्वजडितो
विलासी सर्वेषां नवनववधूनां प्रियपतिः ॥ १० ॥
महाकाल स्थानं स जयति सकारं यदि [6]भजे–
दरीणां व्याहस्ता रुधिर किरणं कोट्यरुणकम् ।
महाकालस्थानं ........ शरणं प्रागपि सुखी
[7]त्रिकोणां दक्षाङ्के निगम नयनो योगयजितः ॥ ११ ॥
विनोदी सौख्यानां सुरतरुसमानो भुविदिवि,
यकारं यो ध्यायेदमरपदवी व्याधिरहितो ।
महावाणीनाथं प्रणयजडितं त्वक् सुरतरुम्,
मुकुन्दानन्दान्तः[8] पवनमिलितं कामकरणम् ॥ १२ ॥
तदा लोकोऽकामी भवति नितरां काकपवनी
महाग्नेः संस्थानं परजलधरं[9] सूर्यशतकम् ।

---

१. द्विरण्ड ग० ।

२. त्रिकोणं पार्श्वस्यात् चपलशतकम् ग० ।

३. भीमकुतम् ग० ।

४. रमणि वज्रायुतमिति ग० ।

५. प्राभवि ग० ।

६. मकारं यदि भजेदरीणां व्याहन्ता रुधिरधिकरणंकोट्यकरुणम् ग० ।

७ त्रिकोणादंकांके निगमनोयोग ग० ।

८. नन्दान्तम् ग० ।

९. जन निधनम् ग० ।

यदानन्दै[1]र्ध्यायेत् परमधनदं यज्ञसुधया
सुधापानज्ञानी हवनकरणं काम्यफलदम् ।
प्रियं त[2]द्द्वेरत्याः कमलगभुजंगेश्वर[3]नुतम्
त्रिकोणा[4]ष्ट्रष्ठस्थं विधिहरिहरस्य [5]प्रियमिति ॥ १३ ॥
विधानं वह्नीनां कुल[6]विमलबीजं सकरुणम्
असृङ्[7]मायाखण्डं खगगणमनोरञ्जनवरम् ।
यदि ध्यायेदेको विभवविविधं याति सहसा
महेन्द्रः स्थानांगं कमलसुखदं कृष्णनिलयम् ॥ १४ ॥
प्रियं सिद्धक्षेत्रं यदि सुखमयं भावयति यः
[8]लकारं चन्द्रस्थं विधुशतकरं बिन्दुनिलयम् ।
विशालाक्षी राधा मधुरवचनालापकलितम्
[9]रमा मोदे पत्रे तरणकरणं सापहरणम् ॥ १५ ॥
सु[10]वामे राकिण्या नवरसमयं मोहहरणम् ।
विभाव्य श्रीनाथं भजति स नरो ध्याननिपुणो ।
महामोक्षं प्राप्य प्रथम[11] रजसं संगमयति ॥ १६ ॥
ततो ध्येया महाविद्या राकिणीशक्तिरुत्तमा ।
श्रीविष्णुसहिता नित्यं योगै र्भोगविवर्जितः ॥ १७ ॥

---

१. यदानन्दे ग० ।
२. तं द्रावत्थाः क० ।
३. नूतम् ग० ।
४. अष्टस्थम् ग० ।
५. श्रेयमिति ग० ।
६. कमल ग० ।
७. रवाया ग० ।
८. नकारम् ग० ।
९. मोदे तपन करणम् ग० ।
१०. रामे ग० ।
११. वयसि ग० ।

अकलंकी कुलानन्दो मन्दहास्यावृतो महान् ।
स योगी परमं राज्यं प्राप्नोति नात्र संशयः ॥ १८ ॥
यावन्मूलाधारयोगं तावद् यमादिकं प्रभो ।
यमनियमासने काले [1]योगं पञ्चामरान्वितम् ॥ १९ ॥
तावत्कुर्यान्महादेव यावत्तत् सिद्धिमाप्नुयात् ।
यदि पञ्चामरा सिद्धिस्तदा [2]मायादिसिद्धिभाक् ॥ २० ॥
पञ्चासवा सिद्धिकाले प्राणादिवायुपञ्चमम् ।
धृत्त्वा धृत्त्वा पुनर्धृत्त्वा कुम्भयेदनिशं शनैः ॥ २१ ॥
शरीरे निर्मले याते वायुनिर्मलता भवेत् ।
सर्वरूपी महावायुर्निर्मलात्मानमात्मनि ॥ २२ ॥
सिद्धिं ददाति योगेश यदि स्वकार्यमाश्रयेत् ॥ २३ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे
आनन्दभैरवीभैरवसंवादे षड्दलवर्णप्रकाशो
नाम चत्वारिंशत्तमः पटलः ॥



१. जप पञ्चासवान्वितम् ग० ।

२. यमा क० ।

# एकचत्त्वारिंशः पटलः

[1]श्री आनन्दभैरवी उवाच—

कृतान्तसंहारविहारभोगं
रसाप्लुतश्रीकर शंकर प्रभो ।
तवाज्ञयाऽहं कथयामि सिद्धये
मयागमानन्दवशाद्धि तन्त्रम् ॥ १ ॥
प्रेमाभिलाषी [2]सुजनो मुनीन्द्रो
जानाति तन्त्रार्थमनन्तसाधनम् ।
महाप्रभाते चरणाब्जभक्तो
गोविन्द[3]शम्भो र्यदि भक्तिभाजनः ॥ २ ॥
षड्चक्रभेदार्थविशेषसाधनं
जानाति यो वा सजनोऽतिदुर्लभः ।
स एव संसारनिषेधसाधनं
सदा विहायाचलभक्तिमाप्नुयात् ॥ ३ ॥

श्री आनन्दभैरव उवाच—

यदि वा कथिता कान्ते षड्दलप्रक्रिया शुभा ।
राकिण्या मिलनं देव्याः कुण्डलिन्याः पराक्रमम् ॥ ४ ॥
सार्द्धं श्रीविष्णुना कालरूपिणा बहुरूपिणा ।
शुद्धनिर्मलतत्त्वेन परिवारगणैः सह ॥ ५ ॥
न तद्धि कथितं सर्वं श्रीकृष्णस्य [4]पराक्रमम् ।
स्तवनं देवराकिण्या सहितं कृष्णसाधनम् ॥ ६ ॥

---

१. ॐ नमो भगवत्यानन्दभैरव्युवाच ग० ।

२. सुनिन्दो ग० ।

३. भावो क० ।

४. प्रकाशकम् ग० ।

मंगलं परमं ब्रह्मसाधनं [1]कुलवर्द्धनम् ।
कृष्णप्रकाशस्तवनं राकिणीशक्तिसंयुतम् ॥ ७ ॥
कथयस्व महाकालि यदि स्नेहोऽस्ति मां प्रति ।
अत्यन्तगुह्यं कथनं सहस्र[2]नाममंगलम् ॥ ८ ॥
अष्टोत्तरं महाविष्णो राकिण्या सहितं प्रिये ।
इदानीं राकिणीस्तोत्रं वद भामिनि कामदे ॥ ९ ॥

श्रीआनन्दभैरव्युवाच—

योगेन्द्र परमानन्दसिन्धो चन्द्रशेखर ।
शृणुष्व श्रीराकिणीस्तोत्रं परमानन्दवर्धनम् ॥ १० ॥
सर्वत्र सुखदं प्रोक्तं सिद्धानामपि साधनम् ।
एतत् स्तवनपाठेन योगी योगेन्द्रद्दढो[4] भवेत् ॥ ११ ॥
वैष्णवीसाधने यस्तु पश्चाचारं करोति वा ।
सर्वेषां साधनोत्कृष्टं[5] नातिभ्रष्टोऽपि नो भवेत् ॥ १२ ॥
समता शत्रुमित्रेषु कर्माकर्मसु तत्त्ववित् ।
यदि वा [6]वैष्णवे नाथ समभावः प्रजायते ॥ १३ ॥
पश्चाचारक्रमेणैव सिद्धो भवति नान्यथा ।
राधादि गोपिकाभिश्च गोपवृन्दैः समन्ततः ॥ १४ ॥
पश्चाचारं मुदा कृत्वा सर्वेषां परिपालनम् ।
चकार कमलानाथोऽतः पश्चाचारमाश्रयेत् ॥ १५ ॥
पश्चाचारक्रमेणैव चैतन्या कुण्डली भवेत् ।
कृष्णचैतन्यहेतोश्च राकिण्याश्च तथा प्रभो ॥ १६ ॥

---

१. ज्ञान ग० ।
२. साम ग० ।
३. सिद्धश्री ग० ।
४. योगेन्द्रमाक् ग० ।
५. कृष्णम् ग० ।
६. वैष्णवं नाथा ग० ।

चैतन्याय षड्दलस्थदेवचैतन्यहेतुना ।
कुण्डलीवधुराकिण्याः स्तोत्रं शृणु कुलार्णव ॥ १७ ॥
अन्दोलिता रसनिधौ कुलचञ्चला या
माया[1]मयी सकलदुःखविनाश[2]वीरा ।
[3]वीरासना स्थितिगता सुलभा मुनीनाम्
भव्या प्रपातु भविका कुलराकिणी माम् ॥ १८ ॥
आनन्दसिन्धुजडिताखिलसारपा[4]ना
बाला कुलीननमिता दलषट्कुलस्था ।
[5]कालीकलामलगुणा धनिनां धनस्था
कृष्णेश्वरी समुदयं कुरु राकिणी मे ॥ १९ ॥
या राकिणी त्रिजगतामुदयाय चेष्टा
संज्ञामयी कुलवती[6] कुलवल्लभस्था ।
विश्वेश्वरी स्मरहरप्रियकर्मनिष्ठा
कृष्णप्रिया मम सुखं परिपातु देवी ॥ २० ॥
षड्वर्गनाथकरपद्मनिषेविता या
राधेश्वरी प्रियकरी सुरसुन्दरी सा ।
माता कुलेशजननी जगतां मनुस्था
विद्या परा रिपुहरावत मे शरीरम् ॥ २१ ॥
गोविन्दरामरमणी नवमालिनी या
[7]राज्येश्वरी स्मरहरा नवकामिनी [8]वा ।

---

१. मही ग० ।
२. बीजा ग० ।
३. विलासनस्थितिगता ग० ।
४. पारा ग० ।
५. कमलामल गुणाधनस्था ग० ।
६. कुलवली ग० ।
७. वाक्येश्वरी ग० ।
८. या ग० ।

मे षड्दलाश्रितसुरं [1]परिपातु नित्यम्
श्रीकुण्डली सुविमला कुलराकिणी सा ॥ २२ ॥

श्रीसुन्दरी कुलपरा कुलवृन्दवन्द्या
[2]सन्ध्याविधिप्रभवतामतिकामतीर्था ।
[3]श्रीदायिनी कुलगणामलभावदात्री
नित्यं प्रपातु विषयं कुलषड्दलानाम् ॥ २३ ॥

चैतन्यदाननिरतां[4] त्रिगुणाभिरामां
श्यामां नितम्बधृतसुन्दररत्नघण्टाम् ।
नीलाचलस्थितकरां वरदानहस्ताम्
श्रीकृष्णवाम[5] कमलोपरि पूजयामि ॥ २४ ॥

ताम्राकिणीं त्रिरमणीं [6]समलापहन्त्रीम्
[7]सर्वस्थितां गगनमातरमम्बुजस्थाम्
पद्मासनां श्रुतिभुजां गुरुजामनन्ताम् ॥ २५ ॥

शान्तां षडम्बुजदलोपरि पूजयामि
शान्तिं कृपाकपटकोपरि नाशमुक्तिं ।
शिवां परमवैष्णवपूजिताङ्घ्रिं ।
[8]राधां सुधां वरमयीं जगतां गुणस्थाम् ॥ २६ ॥

धर्मार्णवां रसदले परिपूजयामि
कर्त्रींकरां सकरुणां रमणीं त्रिसर्गाम् ।

---

१. परिपातु ग० ।
२. न — — — ग० ।
३. श्री दामिनी ग० ।
४. दाम ग० ।
५. राम कमलोपरि ग० ।
६. रामना ग० ।
७. सर्वाश्रितां त्रिजगतां जनमम्बुजस्थाम् ग० ।
८. राधासुताम् ग० ।

ताम्राकिणींमतिदयाममलार्थचिन्ताम्

भ्रान्ति भ्रमागमवरां स्मृतिमादिपूज्याम् ॥ २७ ॥

भार्यां हरेरतिसुखां परिपूजयामि

या कातरं निरवधिप्रणय[1]स्ववस्था ।

वागीश्वरी भगवती [2]थतिकोटिनम्रा

ताम्राकृति[3]प्रकृति[4]चेतसि रक्तवर्णा ॥ २८ ॥

मायामयी सुरकलावति पातु मेऽङ्गम्

कल्पद्रुमाशयलता फलरूपिणी या ।

मर्गस्थिता पुरुषकोटिमुनिस्तुवन्ती

सा मे कुलेश्वररसं हरिहस्तपूज्या ॥ २९ ॥

क्षान्तिः सदा मम धनं परिपातु राधा

क्षेमंकरी वरकरी सुकरी हरिस्था ।

या सौकरी भवकरी त्रिपुरा महेशी

वायुस्थिता लयमयी स्थितिमार्गसंगा ॥ ३० ॥

भंगप्रिया सकलका परिपातु राधा ॥

गंगा निर्मलभावदाममशिरोदेशं सदा रक्षतु

श्रीराधा कुलराकिणी मम कपालोर्ध्वं महावाक्प्रिया ।

मन्त्रस्था जयदा मुदा कुमुदिनी भालं भ्रुवोरन्तरं

विद्या वाग्भवकुण्डलीफलवलावाला[5] च नेत्रत्रयम् ॥ ३१ ॥

गण्डं[6] चण्डसरस्वती श्रुतिकुलं [7]कैलासशैलस्थिता

मेघाटं घटवासिनी शशिमुखी सूक्ष्मातिसूक्ष्माशया ।

---

१. प्रश्रया सुवस्था ग० ।
२. नति ग० ।
३. ताम्राकिणी ग० ।
४. तेजसि ग० ।
५. नीला क० ।
६. चण्डम् ग० ।
७. कौल ग० ।

जिह्वाग्रं चिबुकं [1]रदावधिवहा कण्ठं गलं स्कन्धगं
स्कन्देशी दशनप्रभामलमति वैकुण्ठधामेश्वरी[2] ॥ ३२ ॥
नानावर्णविलासिनी [3]मृदुरसं शम्भोर्भवानी शिवा
पृष्ठं [4]कर्मसु पृष्ठगा गतिकरी [5]नित्योल्वणी भास्वती ।
[6]पार्श्वं मे कुलमालिनी मम कटीलिंगं नितम्बाम्बरं
कामाख्या धनदायिनी सकरुणा पादद्वयं पातु सा[7] ॥ ३३ ॥
मातृक्रोधनिवारिणी मम शिवं षट्पत्रशोभाकरम्
पातु श्रीचरुवासिनी कुलतरुं गौरी परानन्ददा ।
चैतन्यस्थलवासिनी मम गता गोविन्द[8]मातृप्रिया
चैतन्यं सततं प्रपातु धरणी धात्री परक्षेत्रगा ॥ ३४ ॥
[9]धन्या पिंगललोचनाम्बुजमुखी चैतन्यकर्मप्रिया
सर्वत्र[10] प्रियमाकरोतु नियतं शक्तिः क्षमाकर्तृका ।
कीर्तिस्था मम कीर्तिचक्रनिलयं लाक्षारुणा वल्वरी
[11]नीचा चक्रनिवासिनी मम जया जीवं मुदा पातु माम् ॥ ३५ ॥
एतत्स्तोत्रं पठेन्नित्यं प्राणवायुवराशुभे ।
षट्चक्रभेदसमये सदा पाठ्यं सुयोगिभिः ॥ ३६ ॥
कुलविन्याससमये कुलचक्रप्रवेशने ।
अवश्यं प्रपठेद्विद्वान् राकिणीराधिकास्तवम् ॥ ३७ ॥

१. वदानाधिभहा ग० ।
२. बोधेश्वरी क० ।
३. तदुरसम् क० ।
४. कर्म सुपृष्ठा ग० ।
५. नित्यो नृणाम् ग० ।
६. सर्वम् ग० ।
७. पातु मा ग० ।
८. सुस ग० ।
९. मध्या ग० ।
१०. माक.........शक्तिः खश्रिपाठः ।
११. नीला ग० ।

त्रिसन्ध्यं चेदमाकुर्यात् पठित्वा च पुनः पुनः ।
ध्यात्वा भावपरो भूत्वा मुच्यते भवबन्धनात् ॥ ३८ ॥
अचलां भक्तिमाप्नोति विश्वामित्रो यथा वशी ।
पठनात् पामरो याति ब्रह्मलोकं कुलाधिप ॥ ३९ ॥
एतत्पठनमात्रेण शीतलो गुणवान् भवेत् ।
अप्रकाश्यमिदं स्तोत्रं सर्वान्तकविनाशनम् ॥ ४० ॥
समभावं समाकृत्य जीवन्मुक्तो भवेद्वशी ।
पश्चाचाररतो भूत्वा साधयेद् यदि साधनम् ॥ ४१ ॥
कुण्डलीयोगकाले च कुलाचारं च वर्जयेत् ।
कुलाचारवर्जनेन महाहानिः प्रजायते ॥ ४२ ॥
ब्राह्मणः क्षत्रियो वापि वैश्यो वा शूद्र एव च ।
समभावं सदा कृत्वा कुलाचारं समाश्रयेत् ॥ ४३ ॥
कुण्डली पृथिवी देवी राकिणी स्वारिदेवता ।
[2]तद्गेहगामिनी देवी राधिका[3] राज्यकामिनी ॥ ४४ ॥
अस्याः साधनकाले च समयाचारमाश्रयेत् ।
समभावे महामोक्ष इति तन्त्रार्थनिर्णयः ॥ ४५ ॥
समभावार्थकथनं त्यक्त्वा योगी भवेत्कृती ॥ ४६ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवभैरवीसंवादे स्वाधिष्ठानराकिणीस्तोत्रं नामैकचत्वारिंशत्तमः पटलः ॥



---

१. मेदया ग० ।
२. तद्देह ग० ।
३. पाद्य ग० ।

# द्विचत्वारिंशः पटलः

श्रीआनन्दभैरवी उवाच—

कथयामि महाकाल[1] परमाद्भुतसाधनम् ।
कुण्डलीरूपिणी देवी राकिण्याः कुलवल्लभ ॥ १ ॥
मानसं द्रव्यमानीय चाथवा बाह्यद्रव्यकम् ।
[2]अनष्टहृष्टचित्तश्च पूजयेत् सावधानतः ॥ २ ॥
भक्त्या जपेन्मूलमन्त्रं मानसं सर्वमेव च ।
पूजयित्वा ततो जप्त्वा होमं कुर्यात् [3]परामृतैः ॥ ३ ॥
समासैः पक्वनैवेद्यैः सुगन्धिकुसुमैस्तथा ।
स्वयम्भूकुसुमैर्नित्यमर्घ्यं कृत्वा निवेदयेत् ॥ ४ ॥
सुमुखं पूजयेन्नित्यं मधुमांसेन शंकर ।
[4]हुत्वा हुत्वा पुनर्हुत्वा प्राणवाय्वग्निसंगमैः ॥ ५ ॥
भ्रामयित्वा मनो बाह्ये[5] स्थापयित्वा पुनः पुनः ।
पुनरागम्यगमनं कारयित्वा [6]सुमङ्गलम् ॥ ६ ॥
वाचयित्वा सुवाणीभिर्याचयित्वा स वापिकम् ।
तर्पणं चाभिषेकञ्च केवलासवमिश्रितैः ॥ ७ ॥
मांसैर्मुद्रादिभिर्मत्स्यैः सारद्रव्यैः सपिष्टकैः ।
घृतादिसुफलैर्वापि यद् यदायाति कौलिके ॥ ८ ॥
[7]अचलां भक्तिमाप्नोति विश्वामित्रो यथा वशी ।
तत्तद्द्रव्यैः साधकेन्द्रो नित्यं सन्तर्प्य संजपेत् ॥ ९ ॥

---

१. महाकालि ग० ।
२. अनन्त ग० ।
३. सावधारया क० ।
४. एवं श्रुत्वा ग० ।
५. राज्ये ग० ।
६. सुमेलनम् ग० ।
७. ग० पु० नास्ति ।

ॐ महाकाल कृष्णेन्द्र नीलमणिनिभ राकिणी-
वल्लभ कुण्डली महावीर राकिणी कैवल्य-
मोक्षदाज्यै नमः ॥ क्रां क्रौं क्रं क्रं क्रीं
श्रीं रां रीं रुं रें रैं रों रौं रं रः स्वाहा ॥
परमवैष्णवो महाभैरवो महाविष्णुः कुलदेवता
परजननिष्फल पुरुषोत्तम वासुदेव हृषीकेश
केशव नारायण दामोदर पञ्चचूड चतुर्भुज
शंखचक्रगदाधर राकिणी सूक्ष्मा कुलकुण्डली
राधिका बाह्यदेवता श्री श्री विद्याचैतन्यानन्द-
मयी विश्वव्यापिका जगन्मोहिनी मूलात्
प्रगच्छन्ती[1] षडाधारभेदिनी[2] षटदलाकार[3]प्रका-
शिनी मनोभवा मांस[4]मांसरुधिरादिशरीर परि-
वारादिकं[5] पालय पालय गोपय गोपय-स्थापय
स्थापय[6] शत्रून् घातय घातय ॐ ह्रौं ह्रौं स्थौं[7]
ह्सौं हसकल ह्रीं सकल ह्रीं श्रीं जुहोमि नमो
नमः स्वाहा ॥

एतन्मन्त्रं पठित्वा च तर्पणञ्च समाचरेत् ।
तर्पणान्ते चाभिषेकं सदा कुर्याच्च तान्त्रिकः[8] ॥ १० ॥
मूलान्ते चाभिषिञ्चामि नमः स्वाहा पदं ततः ।
ततो हि प्रणमेद्भक्त्या अष्टांगनतिभिः प्रभो ॥ ११ ॥

---

१. प्रगरवृत्ति ग० ।
२. मेदिनीम् ग० ।
३. यददनाकार ग० ।
४. मां मां मांसरुधिरादि ग० ।
५. परिधारादिकम् क० ।
६. स्थापय क० ।
७. स्थौं स्थौं हं सकल हं क० ।
८. तान्त्रिकात् ग० ।

सहस्रनाम्ना स्तवनमष्टोत्तरसमन्वितम् ।
अर्धाङ्ग[1]राकिणीयुक्तं राकिणीकेशवस्तवम् ॥ १२ ॥
शृणु तं सकलं नाथ यत्र श्रद्धा सदा तव ।
श्रवणार्थं [2]बहूक्तं तत् कृपया ते वदाम्यहम् ॥ १३ ॥
एतत् श्रवणमात्रेण सर्वपापक्षयो भवेत् ।
राकिणी [3]सङ्गमं नाथ स्तवनं नाम पावनम् ॥ १४ ॥
ये पठन्ति [4]श्रद्धया चाश्रद्धया वा पुनः पुनः ।
तस्य सर्वः पापराशिः क्षयं याति [5]क्षणादिह ॥ १५ ॥
काले काले महावीरो भवत्येव हि योगिराट् ।
संसारोत्तारणे युक्तो महाबलपराक्रमः ॥ १६ ॥

अस्य श्रीमहदानन्द[6]कुलमंगल[7]कालसुन्दर-कृष्णमुकुन्दनारायणराकिणीकुलकुण्डलिनी मिलन सर्वसाधननिष्फलाय [8]परममोक्षाय नित्यसुखाय योगसिद्धयेऽष्टोत्तरसहस्रनामस्तोत्रस्य गणेश कुलगणाधिपतिः ऋषिर्बृहती[9]च्छन्दः, श्रीमत्कृष्ण-महाकालपुरुषोत्तमकुलकुण्डलिनी राधाराकिणी-देवता, षड्दलाधारादिप्रकाशषट्पद्मसिद्धयर्थे जपे विनियोगः ॥

---

१. अभाङ्गम् ग० ।
२. यदुक्तम् ग० ।
३. मङ्गलम् ग० ।
४. श्रियाचार ग० ।
५. कुत्रा ग० ।
६. श्रीमदानन्द ग०
७. काल काल ग०
८. परमोक्षाय ग० ।
९. वृतीच्छन्दः इति ग० ।

ॐ श्रीकृष्णो महामाया यादवो देवराकिणी ।
गोविन्दो विश्वजननी महाविष्णुर्महेश्वरी ॥ १७ ॥
मुकुन्दो मालती माला विमला विमलाकृतिः ।
रमानाथो महादेवी महायोगी प्रभावती ॥ १८ ॥
वैकुण्ठो देवजननी दहनो दहनप्रिया ।
दैत्यारि दैत्यमथिनी मुनीशो मौनभाविता ॥ १९ ॥
नारायणो [1]जयकला करुणो करुणामयी ।
हृषीकेशः [2]कौशिकी च केशवः केशिघातिनी ॥ २० ॥
किशोरापि[3] कैशोरी महाकाली महाकला ।
महायज्ञो यज्ञहर्त्री दक्षेशो दक्षकन्यका ॥ २१ ॥
महाबली [4]महाबाला बालको देवबालिका ।
चक्रधारी चक्रकरा [5]चक्राङ्कः चक्रमर्द्दिका ॥ २२ ॥
अमरो युवती भीमो [6]भया देवो दिविस्थिता ।
श्रीकरो [7]वेशदा वैद्यो गुणा योगी कुलस्थिता ॥ २३ ॥
समयज्ञो मानसज्ञा क्रियाविज्ञः क्रियान्विता ।
अक्षरो वनमाला च कालरूपी कुलाक्षरा ॥ २४ ॥
विशालाक्षो दीर्घनेत्रा जयदो जयवाहना ।
शान्तः शान्तिकरी श्यामो विमलश्यामविग्रहा ॥ २५ ॥
कमलेशो महालक्ष्मी सत्यः साध्वी शिशुः प्रभा ।
विद्युताकारवदनो विद्युत्पुञ्ज[8] नभोदया ॥ २६ ॥

---

१. ज्वलाच्छन्ना ग० ।
२. कैषिकी च क० ।
३. किशोरश्चापि ग० ।
४. महाबालो ग० ।
५. चक्रकृच्चक्रमर्द्दिका ग० ।
६. भीकोऽमया ग० ।
७. देवे सदा ग० ।
८. निभोदरा ग० ।

[1]राधेश्वरो राकिणी च कुलदेवः कुलामरा ।
दक्षिणो दक्षिणश्रीदा क्रियादक्षो महालया ॥ २७ ॥
[2]वशिष्टगमनो विद्या विद्येशो वाक्सरस्वती ।
अतीन्द्रियो योगमाता रणेशो रणपण्डिता ॥ २८ ॥
कृतान्तको बालकृष्णा कमनीयः सुकामना ।
अनन्तोऽनन्तगुणदा वाणीनाथो विलक्षणा ॥ २९ ॥
गोपालो गोपवनिता गोगोप कुलात्मजा ।
मानी[3] मौनकरोन्लासा मानवो मानवात्मजा ॥ ३० ॥
[4]सर्वाच्छिन्नो मोहिनी च मायी माया शरीरजा ।
[5]अक्षुण्णो वज्रदेहस्था गरुडस्थो हि गारुडी ॥ ३१ ॥
सत्यप्रिया रुक्मिणी च सत्यप्राणोऽमृतापहा[6] ।
[7]सत्यकर्मा सत्यभामा सत्यरूपी त्रिसत्यदा ॥ ३२ ॥
[8]शशीशो विधुवदना कृष्णवर्णो विशालधीः ।
त्रिविक्रमो विक्रमस्था स्थितिमार्गः स्थितिप्रिया ॥ ३३ ॥
श्रीमाधवो माधवो च मधुहा मधुसूदनी ।
वैकुण्ठनाथो विकला विवेकस्थो विवेकिनी ॥ ३४ ॥
विवादस्थो विवादेशी कुम्भकः कुम्भकारिका ।
सुधापानः सुधारूपा [9]सुवेशो देवमोहिनी ॥ ३५ ॥
प्रक्रियाधारको धन्या धन्यार्थो धन्यविग्रहा ।
धरणीशो महानन्ता [10]सानन्तो नन्दनप्रिया ॥ ३६ ॥

---

१. धरेश्वरो ग० ।
२. विशिष्ट ग०।
३. मान ग० ।
४. सर्ववृन्दो ग० ।
५. रज ।
६. अमृतापहा ग० ।
७. सत्यश्रमोवाण सत्यो काल सत्योऽमृताऽध्यहा । क० अधिपाठ ।
८. शीश ग० ।
९. सुधंशो ग० ।
१०. सानन्दा ग० ।

[1]प्रियो विप्रियहरा विप्रपूज्यो द्विजप्रिया ।
कान्तो विधुमुखी वेद्यो विद्या वागीश्वरोऽरुणा ॥ ३७ ॥
अकामी कामरहिता कम्रो विलचरप्रिया ।
पुण्डरीको[2] त्रिकुण्डस्था वैकुण्ठो बालभाविनी ॥ ३८ ॥
पद्मनेत्रः [3]पद्ममाला पद्महस्तोऽम्बुजानना ।
पद्मनाभिः पद्मनेत्रा पद्मस्थः पद्मवाहना ॥ ३९ ॥
वासुदेवो बृहद्गर्भा[4] महामानी महाञ्जना ।
[5]कारुण्यो बालगर्भा च आकाशस्थो विभाण्डजा ॥ ४० ॥
तेजोराशिस्तैजसी च भयाच्छन्नो भय दा ।
उपेन्द्रो वर्णजालस्था स्वतन्त्रस्थो विमानगा ॥ ४१ ॥
नगेन्द्रस्थो नागिनी च नगेशो नागनन्दिनी[6] ।
सार्वभौमो महाकाली[7] नगेन्द्रः नन्दिनीसुता[8] । ४२ ॥
कामदेवाश्रयो माया मित्रस्थो मित्रवासना ।
मानभंगकरो रावा[9] वारणारिप्रियः प्रिया ॥ ४३ ॥
रिपुहा राकिणी माता सुमित्रो मित्ररक्षिका ।
कालान्तकलहादेवा पीतवासाम्बरप्रिया ॥ ४४ ॥

---

१. अप्रिये ग० ।

२ वाहनस्थो वाहनाख्या सिद्धेश. सिद्धिदायिनी ।
सिद्धिमात्रो विलोका च चञ्चलो विपयमापहा ॥
स्मशानवासिनी नाथो यमभूमिनिवासिनी ।
यमस्थो यामयस्था च यवनो भवनाश्रया ॥
क० पु० अ० पाठः ।

३. पद्म मात्रा ग० ।

४. बृहद्भानुः ग० ।

५. कारुण्यगर्भा करणा काशाख्यो विभातिंजा ।

६. नानान्दिनी ग० ।

७. सार्वभौमोऽमला ग० ।

८. शुभा ग० ।

९. रारी क० ।

पापहर्ता पापहन्त्री निष्पापः पापनाशिनी ।
[1]परानन्दप्रियो मीना मीनरूपी मलापहा ॥ ४५ ॥
इन्द्रनीलमणिश्यामो महेन्द्रनीलरूपिणी ।
नीलकण्ठप्रियो दुर्गा दुर्गा दुर्गतिनाशिनी ॥ ४६ ॥
त्रिकोणमन्दिरश्रीदो विमाया मन्दिरस्थिता ।
मकरन्दरसोल्लासो मकरन्दरसप्रिया ॥ ४७ ॥
[2]दारुणारिनिहन्ता च दारुणारिविनाशिनी ।
कलिकालकुलाचारः [3]कलिकालफलावहा ॥ ४८ ॥
कालक्षेत्रस्थितो रौद्री व्रतस्थो व्रतधारिणी ।
विशालाक्षो विशालास्या चमत्कारो करोद्यमा ॥ ४९ ॥
[4]लकारस्थो लाकिनी च लांगलो लोलयान्विता ।
नाकस्थो नाकपदका [5]नाकाक्षो नाकरक्षका ॥ ५० ॥
[6]कामगो नामसम्बन्धा सामदेव विशोधिका ।
सामवेदः सामसन्ध्या [7]सामगो मांसभक्षिणी ॥ ५१ ॥
सर्वभक्षो रात्रभक्षा रेतस्थो रेतपालिनी ।
रात्रिकारी महारात्रिः कालरात्रो महानिशा ॥ ५२ ॥
नानादोषहरो मात्रा मारहन्ता [8]सुरापहा ।
चन्दनांगो नन्दपुत्री नन्दपालः विलोपिनी ॥ ५३ ॥
मुद्राकारी महामुद्रा मुद्रितो मुद्रितारतिः ।
शाक्तो लाक्षा वेदलाक्षो लोपामुद्रा [9]नरोत्तमा ॥ ५४ ॥

---

१. परमानन्दजा ग० ।
२. दारुणाधि ग० ।
३. कालि काल पुत्रार्थो च काली काल पुत्रावहा ग० ।
४. नकारस्थो नाकिनी च लाङ्गलीशो कान्यान्विता क० ।
५. नाकरक्षा भूरक्षका क० ।
६. नामगो ग० ।
७. विशेषिका ग० ।
८. स्मरापहा ग० ।
९. नरोहरा ग० ।

[1]महाज्ञानधरोऽज्ञानी नीरा मानहरोऽमरा ।
सत्कीर्तिस्थो महाकीर्तिः कुलाख्यो [2]कुलकीर्तिता ॥ ५५ ॥
आशावासी वासना सा कुलवेत्ता सुगोपिता ।
अश्वस्थवृक्षनिलयो वृक्षसारनिवासिनी ॥ ५६ ॥
नित्यवृक्षो नित्यलता क्लृप्तः क्लृप्तपदस्थितः ।
कल्पवृक्षो कल्पलता सुकाल कालभक्षिका ॥ ५७ ॥
सर्वालंकारभूषाढ्यो सर्वालंकारभूषिता ।
अकलंकी निराहारा दुर्निरीक्ष्यो निरापदा ॥ ५८ ॥
[3]कामकर्त्ता कामकान्ता कामरूपी महाजवा ।
जयन्तो याजयन्ती च जयाख्यो जयदायिनी ॥ ५९ ॥
त्रिजीवनो जीवमाता [4]कुशलाख्यो विसुन्दरा ।
केशधारी केशिनी च कामजो कामजाव्यदा ॥ ६० ॥
किंकरस्थो विकारस्था [5]मानसंज्ञो मनीषिणी ।
मिथ्याहरो महामिथ्या मिथ्यासर्गो निराकृतिः ॥ ६१ ॥
[6]नागयज्ञोपवीतश्च नागमालाविभूषिता ।
नागाख्यो नागकुलपा नायको नायिका वधूः ॥ ६२ ॥
नायकक्षेमदो नारी नरो नारायणप्रिया ।
किरातवर्णो रासज्ञी तारको गुणतारिका ॥ ६३ ॥
[7]शङ्कराख्योऽम्बुजाकारा कृपणः कृपणावती ।
देशगो देशसन्तोषा दर्शो दर्शनिवासिनी ॥ ६४ ॥

---

१. महाज्ञानहरो वाणी बाण सानहरोऽमरा क० ।
२. कीर्तिका क० ।
३. कामकर्त्री ग० ।
४. कुशालाख्यो ग० ।
५. मनसाज्ञो ग० ।
६. नागयज्ञोपवीतीच ग० ।
७. शङ्कराख्यो रुजाकराः ग० ।

दर्शनज्ञो दर्शनस्था दृग् दिदृक्षा सुरोऽसुरा ।
सुरपालो देवरक्षा त्रिरक्षो रक्षदेवता ॥ ६५ ॥
[1]श्रीरामसेवी सुखदा सुखदो [2]व्यासवासिनी ।
वृन्दावनस्थो वृन्दा च वृन्दावन्यो [3]महत्तनू ॥ ६६ ॥
ब्रह्मरूपी त्रितारी[4] च तारकाक्षो[5] हि तारिणी ।
[6]तन्त्रार्थज्ञः तन्त्रविद्या सुतन्त्रज्ञः सुतन्त्रिका ॥ ६७ ॥
[7]तृप्तः सुतृप्ता लोकानां तर्पणस्थो विलासिनी ।
मयूरा मन्दिररतो मथुरा मन्दिरोऽमला ॥ ६८ ॥
मन्दिरो मन्दिरा देवी निर्म्मायी मायसंहरा ।
श्रीवत्सहृदयो वत्सा वत्सलो भक्तवत्सला ॥ ६९ ॥
भक्तप्रियो भक्तगम्या भक्तो भक्तिः प्रभुः प्रभा ।
जरो जरा वरो रावा हविर्हेमा क्षमः क्षितिः ॥ ७० ॥
क्षौणीपो विजयोल्लासा विजयो जयरूपिणी ।
[8]जयदाता दातृजाया[9] बलिपो बलिपालिका ॥ ७१ ॥
कृष्णमार्जाररूपी च कृष्णमार्जाररूपिणी ।
घोटकस्थो हयस्था च गजगो गजवाहना ॥ ७२ ॥
गजेश्वरो गजाधारा गजो गर्जनतत्परा ।
गयासुरो गयादेवी [10]गजदर्पो गजार्पिता ॥ ७३ ॥

---

१. श्रीवासो वार सुखदो क० ।
२. व्यापवासिनी क० ।
३. बृहत्तनु ग० ।
४. वितारी क० ।
५. तारकाख्यो ग० ।
६. तन्त्रज्ञस्तन्द्रविद्या ग० ।
७. तृप्ता सुतृप्त ग० ।
८. जयदात्री ग० ।
९. दातृजयो ग० ।
१०. गयदर्पो गयापिता ग० ।

कामनाफलसिद्ध्यर्थी कामनाफलसिद्धिदा ।
धर्मदाता धर्मविद्या [1]मोक्षदो मोक्षदायिनी ॥ ७४ ॥
मोक्षाश्रयो मोक्षकर्त्री नन्दगोपाल ईश्वरी ।
श्रीपतिः श्रीमहाकाली [2]करिशावः वायुरूपिणी ॥ ७५ ॥
वाय्वाहारी वायुनिष्ठा वायुबीजयशस्विनी ।
[3]जैता जयन्ती यागस्थो यागविद्या शिवः शिवा[4] ॥ ७६ ॥
वासवो वासवस्थी च वासाख्यो [5]घनविग्रहा ।
आखण्डलो विखण्डा च [6]खण्डस्थो खण्डखञ्जनी ॥ ७७ ॥
खड्गहस्तो बाणहस्ता वाणगो बाणवाहना[7] ।
सिद्धान्तज्ञो [8]ध्वान्तहन्त्री धनस्थो धान्यवर्द्धिनी ॥ ७८ ॥
लोकानुरागो रागस्था स्थितः स्थापकभावना ।
स्थानभ्रष्टोऽपदस्था च शरच्चन्द्रनिभानना ॥ ७९ ॥
चन्द्रोदयश्चन्द्रवर्णा चारुचन्द्रो रुचिस्थिता ।
रुचिकारी रुचिप्रीता रचनो रचनासना ॥ ८० ॥
राजराजो राजकन्या भुवनो भुवनाश्रया ।
सर्वज्ञः सर्वतोभद्रा [9]वाचालो लयघातिनी ॥ ८१ ॥

---

१. धमंदो ग० ।

२. किरणो ग० ।

३. जेत्रा ग० ।

४. शिशिराचलदेशस्थः शिशिराचलरक्षिका ।
सामवेदान्ततर्कश्च सामवेदफलोदया ॥
श्यामचन्द्रो वारमुख्या वारुणो वारुणिप्रिया ।
वरुणो वरुणानन्दा वरुणाख्यो व्रतान्तरा ॥ क० पु० अ० पाठः

५. वंशनिग्रहा ग० ।

६. खण्डस्योऽखण्डखञ्जनी ग० ।

७. वाह ग० ।

८. धनादात्री ग० ।

९. वाचाला लयघातिनी ग० ।

लिंगरूपधरो लिंगा कलिंगः कालकेसरी[१] ।
केवलानन्दरूपाख्यो निर्वाणमोक्षदायिनी ॥ ८२ ॥
महामेघगाढ़ो महानन्दरूपा
[२]महामेघजालो महाघोररूपा ।
महामेघमालः सदाकारपाला
महामेघमालामलालोल काली ॥ ८३ ॥
वियद्व्यापको व्यापिका सर्वदेहे
महाशूरवीरो महाधर्मवीरा ।
महाकालरूपी महाचण्डरूपा
विवेकी मदैकीकुलेशः कुलेशी ॥ ८४ ॥
सुमार्गी सुगीता शुचिस्वी [३]विनीता
[४]महार्को वितर्का सुतर्कोऽवितर्का ।
कृतीन्द्रो महेन्द्री भगो भाग्यचन्द्रा
चतुर्थो महार्था नगः कीर्तिचन्द्रा[५] ॥ ८५ ॥
विशिष्टो महेष्टिर्मनस्वी सुतुष्टि-
र्महाषड्दलस्थो महासुप्रकाशा ।
गलच्चन्द्रधारामृतस्निग्धदेहो
गलत्कोटिसूर्यप्रकाशाभिलाषा ॥ ८६ ॥
महाचण्डवेगो महाकुण्डवेगी
महारुण्डखण्डो महामुण्डखण्डा ।
कुलालभ्रचक्रसारः प्रकारा
कुलालो मलाका[६]रचक्रप्रकारी ॥ ८७ ॥

१. कालकेश्वरी ग० ।
२. महामेघगाढमनानन्द रूपो महामना वोररूपा महामेघमाला········ग० ।
३. विनता ग० ।
४. महर्को ग० ।
५. नगाकीर्तिचन्द्रा ग० ।
६. मलाकार ग० ।

कुलालक्रियावान् महाघोरखण्डः
कुलाल[1]क्रमेण भ्रमज्ञानखण्डा ।
प्रतिष्ठः प्रतिष्ठा प्रतीक्षः प्रतीक्षा
महाख्यो महाख्या सुकालोऽतिदीक्षा ॥ ८८ ॥
महापञ्चमाचारतुष्टः [2]प्रचेष्टा
महापञ्चमा प्रेमहा कान्तचेष्टा ।
महामत्तवेशो महामंगलेशी
सुरेशः क्षपेशी[3]वरो दीर्घवेशा ॥ ८९ ॥
चरो [4]बाह्यनिष्ठा चरश्चारुवर्णा
कुलाद्योऽकुलाद्या यतिर्यागवाद्या ।
कुलोकापहन्ता महामानहन्त्री
महाविष्णुयोगी महाविष्णुयोगा ॥ ९० ॥
क्षितिक्षोभहन्ता क्षितिक्षुब्धबाधा[5]
महार्घो महार्घा धनी राज्यकार्या ।
महारात्रि[6]सान्द्रान्धकारप्रकाशो
महारात्रि[7]सान्द्रान्धकारप्रवेशा ॥ ९१ ॥
महाभीमगम्भीरशब्दप्रशब्दो
महाभीमगम्भीरशब्दापशब्दा[8] ।

---

१. क्रमान ग० ।
२. प्रवेष्टो ग० ।
३. क्षपेशा ग० ।
४ वाक्य ग० ।
५. सुणहन्ता महार्घी महार्घा घनी चार्यं ग० ।
६ शाख ग० ।
७. शाख ग० ।
८. नृशब्दा ग० ।

[1]कुला ज्ञानदात्री [2]यमो यामयात्रा
वशी सूक्ष्मवेशाश्वगो नाममात्रा[3] ॥ ९२ ॥
[4]हिरण्याख्यहन्ता महाशत्रुहन्त्री
विनाशप्रियो बाणनाशप्रिया च ।
[5]महाडाकिनीशो महाराकिणीशो
महाडाकिनी सा महाराकिणी सा ॥ ९३ ॥
मुकुन्दो महेन्द्रो महाभद्रचन्द्रा
क्षितित्यागकर्त्ता महायोगमन्त्री ।
हितो मारहन्त्री महेशेश इन्द्रा
गतिक्षोभभावो [6]महाभावपुञ्जा ॥ ९४ ॥
शशीनां समूहो विधोः कोटिशक्तिः[7]
कदम्बाश्रितो बारमुख्या सतीनाम् ।
महोल्लासदाता महाकालमाता
स्वयं सर्वपुत्रः स्वयं लोकपुत्री ॥ ९५ ॥
महापापहन्ता महाभावभर्त्री[8] हरिः
कार्तिकी कार्तिको देवसेना ।
जयाप्तो विलिप्ता कुलाप्तो गणाप्ता
[9]सुवीर्य्यो सभाषा क्षितीशोऽभियाता[10] ॥ ९६ ॥

---

१. गुणी ग ।
२. मयो ग० ।
३. खगोनागमात्रा ग० ।
४. हिरणाख्य क० ।
५. महाकाडि ग० ।
६. पहोभाव प्रज्ञा ग० ।
७. राख्यः ग० ।
८. हार्थो ग० ।
९. सुधीर्व्यो ग० ।
१०. क्षितिशोऽतिया ग० ।

भवान् भावलक्ष्मीः प्रियः प्रेमसूक्ष्मा
जनेशो धनेशी कृपो मानभंगा ।
कठोरोत्कटानां महाबुद्धिदाता
कृतिस्था गुणज्ञो गुणानन्दविज्ञा ॥ ९७ ॥
[1]महाकालपूज्यो महाकालपूज्या[2]
खगाख्यो नगाख्या खरः खड्गहस्ता ।
[3]अथर्वोऽथर्वान्दोलितस्थः महार्था
[4]खगक्षोभनाशा हविः कूटहाला ॥ ९८ ॥
महापद्ममालाधृतो गाणपत्या
गणस्थो गभीरा [5]गुरुः ज्ञानगम्या ।
घटप्राणदाता घनाकाररूपा
भयार्थोङ्बीजाङ्वारीङ्कर्ता[6] ॥ ९९ ॥
भवो भावमाता नरो यामख्याता
चलान्तोऽचलाख्या चयोऽञ्जालिका च ।
छलज्ञश्छलाढ्या[7] छकारश्छकारा
जयो जीवनस्था जलेशो [8]जलेशा ॥ १०० ॥
जपञ्जापकारी[9] जगज्जीवनीशा
[10]जगत्प्राणनाथो जगह्लादकारी ।

---

१. काल ग० ।
२. कान्त ग० ।
३. खगोग्र खर्वा ग० ।
४. मग ग० ।
५. पुरु ग० ।
६. कर्णा ग० ।
७. छलज्ञो छलाज्ञा क० ।
८. जनेशो जनेशा क० ।
९. जगज्जापकारी क० ।
१०. [illegible]दुप्राणनाथो क० ।

झरो झर्झरीशा[1] झनत्कारशब्दो[2]
झनञ्झञ्झनानादझङ्काररावा ॥ १०१ ॥
ञ चैतन्यकारी ञ कैवल्यनारी
हनोल्लासधारी टनत्टंकहस्ता ।
[3]ठरेशोपविष्टष्ठकारादिकोटी[4]
डरो डाकिनीशो डरेशो डमारा ॥ १०२ ॥
ढमेशो हि ढक्का वरस्थानबीजो
णवर्णा तमाल[6]तनुः स्थानर्निष्ठा ।
[7]थकारार्णमानस्थनिस्थोऽसंख्या
दयावान् दयार्द्रा धनेशो धनाढ्या ॥ १०३ ॥
नवीनो नागेभागतीर्णगहारा
नगेशी परः [8]पारणी सादिपाला ।
[9]फलात्मा फला फाल्गुनी फेणनाशः
फलाभूषणाढ्या वशी [10]वासरम्या ॥ १०४ ॥
भगात्मा [12]भवस्त्री महाबीजमानो
महाबीजमालाप्रुकुन्दः सुसूक्ष्मा ।

---

१. झर्झरीगा ग० ।
२. नन्द्रा क० ।
३. टमत् ग० ।
४. ठकेशो क० ।
५. कूट क० ।
६. डामरा डाकिनी पोडसारा ग० ।
७. तमाल स्तन स्थान ग० ।
८. माल.ः स्वन्ति स्थान संस्या दयावान दाया ग० ।
९. पारसी ग० ।
१०. फलाम्राफलदोऽङ्गुली क० ।
११. व्या सवस्या क० ।
१२. भवश्रीमहावीजमाता क० ।

यतिस्था यशस्था रतानन्दकर्त्ता
[1]रतिर्लाकिनीशो लयार्थप्रचण्डा ॥ ११० ॥

[2]प्रवालाङ्गधारी प्रवालांगमाला
हलोहालहेलापदः पादताला[3]।
वशीन्द्रप्रकाशो वरस्थानवासा
शिवः [4]श्रीधरांगः शलाकाशिला च ॥ १११ ॥

[5]षडाधारवासी षडाधारविद्या
षडाम्भोजसंस्थः षडब्जोपविष्टा।
सदा साधरोग्रोपविष्टाऽपरागी
सुसूक्तापयस्था पला श्रयस्थिता ॥ ११२ ॥

हरस्थोग्रकर्मा हरानन्दधारा [6]लघुस्थो
लिपिस्था त्रयीक्षुब्धक[7] संख्या ।
अनन्तो[8] निवर्णाहराकारवीजा
उरःस्थोऽप्युरुस्था उरा ऊर्ध्वरूपा[9] ॥ ११३ ॥

ऋचस्थो हि ऋगालसो[10] दीर्घलस्था
त्वमेको हि चैंबीजगुर्वी गुणस्था।

---

१. नयार्थं ग० ।
२. प्रवालाब्धि ग० ।
३. पत्रपाल ग० ।
४. शिश्रीधराड़ा ग० ।
५. राशी ग० ।
६. लयस्थो ग० ।
७. कु क संख्या ग० ।
८. अनर्णो निरर्णा इरा नाय ईशा क० ।
९. ऊर्ध्वं पाशा ग० ।
१०. गोदीर्घं ग० ।

सदौंकारवर्णाह्सौं[1]कारबीजा
[2]असंकारचन्द्रो ह्युसःकारवीरा ॥ ११४ ॥
हरीन्द्रो हरीशा हरिः कृष्णरूपा
शिवो वेदभाषा च शौरिः प्रसंगा[3]।
गणाध्यक्षरूपी [4]परानन्दभक्षा परेशो
गणेशी रसो वासपूज्या ॥ ११५ ॥
चकोरिकुलप्राण[5]बुद्धिस्थितिस्था
स्वयं [6]कामधेनुस्वरूपी विरूपा ।
श्रीहिरण्यप्रभः श्रीहिरण्यप्रभांगी
प्रभातार्कवर्णोऽरुणाकारणांगी[7] ॥ ११६ ॥
विभाकोटिधारा धराधार कोषा रणीशो
[8]प्रत्यादिकूटोधरो''धारणाशौरिरार्या ।
महायज्ञसंस्थो महायज्ञनिष्ठा
सदाकर्मसङ्गः सदामङ्गरङ्गा ॥ ११७ ॥
किरातीपतो राक्िणी [9]कालपुत्री
[10]शिलाकोटनिर्माणदोहा विशाला[11]।

---

१. लौं ग० ।

२. असंकार ग० ।

३. प्रसन्ना ख० ।

४. परानन्दहार्या ख० ।

५. म्लय ग० ।

चकोरी गणस्थः स्वबुद्धि ख० ।

६. काम रूपः क० ।

७. कारकाङ्गी ख० ।

८. धरासौधसंस्था धरा धारयेशः क्षमा सौख्य सद्मा ख० ।

प्रभापादि कूटोधरो.........धारगा गौ विरार्या ग० ।

९. कोल ख ग० । १०. देहे ग० ।

११. शिलाकोटी इत्यारभ्य किङ्किणिस्येत्यन्तं ख पु० नास्ति ।

कलाकंकलस्थो[1] कलाकिंकिणीस्था
किशोरः किशोरी कुरुक्षेत्रकन्या ॥ ११८ ॥
महालांगलिश्री [2]बलोद्धामकृष्णः
कुलालादिविद्याऽभयो भावशून्या[3] ।
महालाकिनी काकिनी शाकिनीशो
महासुप्रकाशा परो हाकिनीशा ॥ ११९ ॥
कुरुक्षेत्रवासी कुरुप्रेममूर्ति-[4]
र्महाभूतिभोगी महायोगिनी च ।
कुलांगारकारी कुलांगीशकन्या
तृतीयस्तृतीयाऽद्वितीयोऽद्वितीया ॥ १२० ॥
महाकन्दवासी महानन्दकाशी[5]
पुरग्रामवासी महापीठदेशा ।
जगन्नाथवक्षःस्थलस्थो वरेण्या
[6]च्युतानन्दकर्त्ता रसानन्दकर्त्री ॥ १२१ ॥
जगद्दीपकालो[7] जगद्दीपकाली
महाकाममरूपी महाकामपीठा ।

---

१. कंकन ग० ।
२. राम ख० ।
बनोद्धाम ग० ।
३. मानोभावपूर्णा ख० ग० ।
४. हर्त्री ख० भर्ता ग० ।
५. वासी ग० ।
वासा ख० ।
६. शिवानन्द कर्त्ता शिवानन्द कर्त्री ख० ।
वृलनन्द कती ग० ।
७. काशो जगद्दीनी सा ख, ग० ।

महाकामपीठस्थिरो[1] भूतशुद्धि-
महाभूतशुद्धिः महाभूतसिद्धिः ॥ १२२ ॥

प्रभान्तः प्रवीणा गुरुस्थो
गिरिस्था गलद्धारधारी महाभक्तवेषा ।
[2]क्षणक्षुन्निवृत्तिर्निवृत्तान्तरात्मा
[3]सदन्तर्गतस्था लयस्थानगामी ॥ १२३ ॥

लयानन्दकाम्या[4] विसर्गास्तवर्गो
विशालाक्षमार्गा[5] कुलार्णः कुलार्णा ।
[6]मनस्था मनश्रीः भयानन्ददाता सदा
लाणगीता [7]गजज्ञानदाता महामेरुपाया[8] ॥ १२४ ॥

तरोर्मूलवासी [9]तरज्ञोपदर्शा सुरेशः
समेशः[10] सुरेशा सुखी खड्गनिष्ठा[11] ।
भयत्राणकर्त्ता भयज्ञानहन्त्री[12]
जनानां मखस्थो मखानन्दभंगा ॥ १२५ ॥

---

१. भूति क० ।
२. क्षणः सुण्णवृत्तिः क० ।
३. सदान्तंगतस्था क० ।
४. काम्यो ख० ।
५. सर्गा ख० सर्गो ग० ।
६. नव स्थान लक्ष्मीः ग० ।
७. सद इति ख० सज ग० ।
८. गाथा ग० ।
९. तरुस्थापदेशा तरुण्यापदेश ग० ।
१०. सुरेशः ग० ।
११. नीशा ख० नीसा ग० ।
१२. कत्री भयज्ञानदानी ग० ।

महासत्पथस्थो महासत्पथज्ञा
महाविन्दुमानो महाविन्दुमाना ।
खगेन्द्रोपविष्टो विसर्गान्तरस्था
विसर्गप्रविष्टो महाविन्दुनादा ॥ १२६ ॥
सुधानन्दभक्तो[1] [2]विधानन्दमुक्तिः
[3]शिवानन्दसुस्थो विनानन्दधात्री ।
[4]महावाहनाह्लादकारी सुवाहा
[5]सुरानन्दकारा [6]गिरानन्दकारी ॥ १२७ ॥
[7]हयानन्दकान्तिः मतंगस्थदेवो
मतंगाधिदेवी महामत्तरूपः ।
तदेको महाचक्रपाणिः प्रचण्डा
खिलापस्थलस्थोऽविहन्नीशपत्नी[8] ॥ १२८ ॥
शिखानन्दकर्त्ता शिखासारवासी[9] सुशाकम्भरी
[10]क्रोष्टरी वेदवेदीसुगन्धा ।
युगो योगकन्या दवो दीर्घकन्या शरण्यः शरण्या
मुनिज्ञानगम्या[11] सुधन्यः सुधन्या ॥ १२९ ॥

---

१. विधा ग० ।
२. संस्थः संस्था ग० ।
३. शिवा ग० ।
४. महावाहना ग ।
५. सुवाहा ग० ।
६. ह्रदानना ख० ।
७. खलाप क० ।
८. हरि हन्त्री सपत्नी क० ।
९. देशवासा काशवासी ग० ।
१०. सुशाकम्भरी सुसाकम्मरी ग० ।
११. मुनिज्ञानमान्या मुनिज्ञानमान्या ग० ।

शशीवेदजन्या[1] यमी यामवामा
ह्यकामो ह्यकामा सदा ग्रामकामा ।
धृतीशः[2] धृतीशा सदा हाटकस्था
[3]ऽयनेशो ऽयनेशी भकारो[4] भगीरा ॥ १३० ॥

चलत्खञ्जनस्थः खलत्खेलनस्था[5]
विवाती[6] किराती खिलांगोऽखिलांगी ।
बृहत्खेचरस्थो बृहत्खेचरी च
महानागराजो महानागमाला ॥ १३१ ॥

हकारार्द्धसञ्ज्ञा वृतोहारमाला
महाकालनेमि[7]प्रहा पार्वती च ।
[8]तमिस्रा तमिस्रावृतो दुःखहत्या
विपन्नो विपन्ना गुणानन्दकन्या ॥ १३२ ॥

सदा दुःखहन्ता [9]महादुःखहन्त्री
प्रभातार्कवर्णः प्रभातारुणश्रीः ।
महापर्वतप्रेमभावोपपन्नो[10]
महादेवपत्नीशभावोपपन्ना ॥ १३३ ॥

---

१. शयी कान्तवासा सकामः सकामा
थसी यास कसा ओत्रासा ग्रामकामा ग० ।
२. प्रघीणा ग० ।
३. धनेशो ख० ।
४. इति तीग्मा ख० ।
५. चलत रवाजनस्था ख० ।
६. किरातः किराती शिताङ्गः शिताङ्गी ख० ।
७. महा ख० ।
८. विपद्भङ्ककारी विपन्नाशिनीच सुखानन्द दाता महादुःख हन्त्री ख० ।
९. सदा ख० । १०. भारो ग० ।

महामोक्षनीलप्रियाभक्तिदाता ।
नयानन्दभक्तिप्रदा देवमाता[1] ॥ १३४ ॥
इत्येतत्कथितं नाथ महास्तोत्रं मनोरमम् ।
सहस्रनामयोगाऽङ्ग[2]मष्टोत्तरसमन्वितम् ॥ १३५ ॥
यः पठेत् प्रातरुत्थाय शुचिर्वाशुचिमानसः ।
भक्त्या शान्तिमवाप्नोति अनायासेन योगिराट् ॥ १३६ ॥
प्रत्यहं ध्यानमाकृत्य त्रिसन्ध्यं यः पठेत् शुचिः ।
षण्मासात् परमो योगी सत्यं सत्यं सुरेश्वर ॥ १३७ ॥
अकालमृत्युहरणं सर्वव्याधिविनाशनम् ।
अपमृत्य्वादिहरणं वारमेकं पठेद्यदि ॥ १३८ ॥
पठित्वा ये [3]न गच्छन्ति विपत्काले महानिशि ।
अनायासेन ते यान्ति महाघोरे भयार्णवे ॥ १३९ ॥
अकाले यः पठेन्नित्यं सुकालस्तत्क्षणाद्भवेत् ।
राजस्वहरणे चैव सुवृत्तिहरणादिके ॥ १४० ॥
मासैकपठनादेव राजस्वं स [4]लभेद् ध्रुवम् ।
विचरन्ति महावीराः स्वर्गे मर्त्ये रसातले ॥ १४१ ॥
गणेशतुल्यबलिनो [5]महाक्रोधशरीरिणः ।
एतत्स्तोत्रप्रसादेन जीवन्मुक्तो[6] महीतले ॥ १४२ ॥
महानामस्तोत्रसारं धर्माधर्मनिरूपणम् ।
अकस्मात् सिद्धिदं काम्यं काम्यं परमसिद्धिदम् ॥ १४३ ॥

---

१. सर्वदाता क० ।
२. योगाङ्गः ग० ।
३. प्रयच्छन्ति ग० ।
४. भवेत् ग० ।
५. महाक्रोधा ख० ।
६. जीवन्मुक्ताः ख० ।

महाकुलकुण्डलिन्याः भवान्याः साधने शुभे ।
अभेद्यभेदने चैव महापातकनाशने ॥ १४४ ॥
महाघोरतरे काले[1] पठित्वा सिद्धिमाप्नुयात् ।
षट्चक्रस्तम्भनं[2] नाथ प्रत्यहं यः करोति हि ॥ १४५ ॥
मनोगतिस्तस्य हस्ते स शिवो न तु मानुषः ।
योगाभ्यासं यः करोति न स्तवः[3] पठ्यते यदि ॥ १४६ ॥
योगभ्रष्टो भवेत् क्षिप्रं कुलाचारविलङ्घनात् ।
कुलीनाय प्रदातव्यं [4]न खल्वकुलेश्वरम् ॥ १४७ ॥
कुलाचारं समाकृत्य ब्राह्मणाः क्षत्रियादयः ।
योगिनः प्रभवन्त्येव स्तोत्रपाठात् सदामराः[5] ॥ १४८ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रदीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे कृष्णराधिकोल्लासे भैरवीभैरवसंवादे अष्टोत्तरसहस्रनामस्तोत्रं[6] नाम एकचत्वारिंशत्तमः पटलः ।



---

१. तरा ग० ।
२. भुवनम् क० ।
३. स्तवं पठते क० ।
४. स्तव एष ख० ।
५. सदा नरः क० ।
६. द्विचत्वारिंशत्तमः ख० ।

## द्विचत्वारिंशः पटलः

आनन्दभैरव उवाच—

वद कान्ते रहस्यं मे मया सर्वञ्च विस्मृतम् ।
महाविषं कालकूटं पीत्वा देवादिरक्षणात् ॥ १ ॥
कण्ठस्थाः देवताः सर्वा भस्मीभूताः [1]सुसम्भृताः ।
महाविषज्वालया च मम देहस्थदेवताः ॥ २ ॥
[2]कैवल्यनिरताः सर्वे प्रार्थयन्ति निरन्तरम् ।
षट्चक्रं[3] कथयित्वा तु सन्तोषं मे कुरु प्रभो ।
षट्चक्रभेदकथनममृतश्रवणादिकम् ॥ ३ ॥
कथित्वा मम सन्तोषं कुरु कल्याणि वल्लभे ।
अमृतानन्दजलधौ[4] सुधाभिः सिक्त[5]विग्रहम् ॥ ४ ॥
कृत्वा कथय शीघ्रं मे चायुषं[6] परिवर्धय ।

श्रीआनन्दभैरवी उवाच—

निगूढार्थं महाकाल कालेश जगदीश्वर ॥ ५ ॥
भैरवानन्दनिलय कालकूटनिषेवण ।
इदानीं शृणु योगार्थं मयि संयोग[7] एव च ॥ ६ ॥

---

१. समरस्मृताः क० ।
२. वैकुण्ठनिरताः क० ।
३. षट्चक्रवासी सुसूक्ष्मापथस्थापना ग० पु० अधि० पा० ।
४. अमृतानन्दसुदधौ ग० ।
५. सुधाभिषिक्त ग० ।
६. चायुषमिति ग० ।
७. संयोगमिति ख० ।

श्रुत्वा चैतत्क्रियाकार्यं नरो योगीश्वरो भवेत् ।
ममोद्भवः खेऽमले[1] च सर्वाकारविवर्जिते ॥ ७ ॥

भ्रूमध्ये सर्वदेहे च स्थापयित्वा च [2]मां नरः ।
भाव्यते चापरिच्छिन्नं ब्रह्मविष्णुशिवात्मकम् ॥ ८ ॥

मम रूपं महाकाल सत्त्वरजस्तमः[3]प्रियम् ।
केवलं [4]रजोयोगेन शरीरं नापि तिष्ठति ॥ ९ ॥

तथा केवलयोगेन [5]तमसा नापि तिष्ठति ।
तथा केवलसत्त्वेन कुतो देही प्रतिष्ठति ।
अतस्त्रिगुणयोगेन धारयामि नवाङ्गकम् ॥ १० ॥

शनैः शनैः विजेतव्याः सत्त्वरजस्तमोगुणाः ।
आदौ जित्वा रजोधर्मं[5] पश्चात्तामसमेव च ॥ ११ ॥

सर्वशेषे सत्त्वगुणं नरो योगीश्वरो भवेत् ।
गुणवान् ज्ञानवान् वाग्मी [6]सुश्रीर्धर्मी[7] जितेन्द्रियः ॥ १२ ॥

शुद्धनिर्मलसत्त्वं तु गुणमाश्रित्य मोक्षभाक् ।
सदा सत्त्वगुणच्छन्नं[8] पुरुषं काल एव च ॥ १३ ॥

पश्यतीह न कदाचिज्जरामृत्युविवर्जितम् ।
तं जनं परमं शान्तं निर्मलं द्वैतवर्जितम् ॥ १४ ॥

---

१. स्वचित्ते च ख० ।
२. मानवः क० ।
३. तमोवृतमिति ख० ।
३. राजयोगेन क० ।
४. तमसमिति क० ।
५. धर्म्यमिति ग० ।
६. सुखी ग० ।
७. धर्मं ग० ।
८. गुणावृतमिति ग० ।

सर्वत्यागिनमात्मानं कालः सर्वत्र रक्षति ।
जले वा पर्वते वापि महारण्ये रणस्थले ॥ १५ ॥
[1]भूगर्त्तनिलये भीते संहारे दुष्टविग्रहे ।
सन्तिष्ठति महायोगी सत्यं सत्यं कुलेश्वर ॥ १६ ॥
महायोगं शृणु प्राणवल्लभ श्रीनिकेतन ।
योगार्थं परमं ब्रह्मयोगार्थं परमन्तपः ॥ १७ ॥
ये जानन्ति महायोगं म्रियन्ते न च ते नराः ।
कृत्वा कृत्वा षड्दलस्य साधनं [2]कृत्स्नसाधनम् ॥ १८ ॥
ततः [3]कुर्यान्मूलपद्मे कुण्डलीपरिचालनम् ।
मुहुर्मुहुश्चालनेन नरो योगीश्वरो भवेत् ॥ १९ ॥
एकान्तनिर्मले देशे दुर्भिक्षादिविवर्जिते ।
वर्षमेकासने योगी योगमार्गपरो भवेत् ॥ २० ॥
पद्मासनं सदा कुर्याद् बद्धपद्मासनं तथा ।
महापद्मासनं कृत्वा तथा [5]चासनमञ्जनम् ॥ २१ ॥
[6]तत्पश्चात् स्वस्तिकाख्यश्च बद्धस्वस्तिकमेव च ।
[7]योगाभ्यासे सदा कुर्यात् मन्त्रसिद्ध्यादिकर्मणि ॥ २२ ॥

---

१. भूर्गता क० ।
२. कृष्ण ग० ।
३. मलपद्म मूलपद्म, ख० ।
४. बद्धैकमासनमिति ग० ।
५. चालनभञ्जनमिति ग० ।
६. तत्पश्यतीति क० ।
७. महास्वस्तिकमाकृत्य त्रिगुणं वशमानयेत् ।
तत्रासनं बद्धभद्रासनं कुर्यात् क्रमेण तु ।
महाभद्रासनं कृत्वा कार्मुकासनमाश्रयेत् ।
बद्धकार्मुकमेवं हि महाकार्मुकमेव च । इति क० पु० अधिकः ।

चक्रासनं सदा योगी योगसाधनकर्मणि ।
बद्धचक्रासनं नाम महाचक्रासनं तथा ॥ २३ ॥
कृत्वा पुनः प्रकर्तव्यं बद्धयोगेश्वरासनम् ।
योगेश्वरासनं कृत्वा महायोगेश्वरासनम् ॥ २४ ॥
वीरासनं ततः कुर्यात् महावीरासनं तथा ।
बद्धवीरासनं कृत्वा नरो योगेश्वरो भवेत् ॥ २५ ॥
ततः कुर्यान्महाकाल बद्धकुक्कुटमासनम् ।
महाकुक्कुटमाकृत्य केवलं कुक्कुटासनम् ॥ २६ ॥
मयूरासनमेवं हि [४]महामयूरमेव च ।
बद्धमयूरमाकृत्य नरो योगेश्वरो भवेत् ॥ २७ ॥
एतत् सर्वं प्रवक्तव्यं विचार्य सुमनःप्रिय ।
अभिषेकप्रकरणे आसनादिप्रकाशकम् ॥ २८ ॥
कथितव्यं विशेषेण इदानीं शृणु षट्क्रमम् ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ २९ ॥
ततः [४]परशिवो देवः षट्शिवाः षट्प्रकाशकाः ।
एतेषां षड्गुणानन्दाः शक्तयः[५] परदेवताः ॥ ३० ॥
षट्चक्रभेदनरता महाविद्याधिदेवताः ।
[६]एतेषां स्तवनं कुर्यात् परदेवसमन्वितम् ॥ ३१ ॥
एतत्प्रकारकरणे [७]यश्च प्रत्यहमादरात् ।
क्रियानिविष्टः सर्वत्र भावनाग्रहरूपधृक् ॥ ३२ ॥

---

१. त्रिशूलमिति ख० ।
२. भद्रासनमिति ख० ।
३. मायारंभेण ग० ।
४. परशिवो शम्भो ग० ।
५. षड्गुणानन्दशक्तयः ग० ।
६. एतासामिति क० ।
७. माथुगः ग० ।

स पश्यति जगन्नाथं [1]कमलोपगतं हरिम् ।
आदौ हरेर्दर्शनञ्च [2]कारयेद्येन कुण्डली ॥ ३३ ॥
ततो रुद्रस्य सञ्ज्ञायां[3] लाकिन्याः शुभदर्शनम् ।
सर्वशः[4] क्रमशो नाथ दर्शनं प्राप्यते नरः ॥ ३४ ॥
शनैः शनैर्महाकाल कैलासदर्शनं भवेत् ।
क्रमेण सर्वसिद्धिः स्यात् अष्टाङ्गयोगसाधनात् ॥ ३६ ॥
अष्टांगसाधने काले यद्यत् कर्म करोति हि ।
[5]तत्सर्वं परियत्नेन शृणु सादरपूर्वकम् ॥ ३७ ॥
तत्क्रियादिकमाकृत्य[6] शीघ्रं योगी भविष्यति[7] ।

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्र-
प्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे
[8]द्विचत्वारिंशत्तमः पटलः ॥

---

१. कमलोरुगत ग० ।
२. कारयत्येव ग० ।
३. सञ्ज्ञाया ग० ।
४. सर्वासां क्रमतोनाथ ग० ।
५. श्रृणु क० ।
६. माश्रिन्य ग० ।
७. भविष्यसि ख० ।
८. त्रिचत्वारिंशत्तमः पटल ख० ।



# त्रिचत्त्वारिंशः पटलः

आनन्दभैरवी उवाच

अथ कामातुराणाञ्च कामनि[1]र्मूलहेतुना ।
कथयामि महाकाल यत् कृत्वा कामिनीवशम् ॥ १ ॥
तत्प्रकारं प्रवक्ष्यामि योगसाधनहेतुना ।
[2]हस्तासनं समाकृत्य ऊद्र्ध्वे पद्मासनं चरेत् ॥ २ ॥
शिरोमूले करद्वन्द्वं नियोज्य जपमाचरेत् ।
अल्पाल्पधारणं कुर्यात् श्वाससंख्यां समाचरेत् ॥ ३ ॥
श्वाससंख्यां तदा कुर्याद् यदा कुम्भकसुस्थिरः ।
विना श्वाससंख्यया च कुतो योगिवरो वशी ॥ ४ ॥
विना संख्याप्रयोगेण विना कुयोगवारणात् ।
कदाचिन्न प्रकर्तव्यं संख्याकुम्भकवर्जितः ॥ ५ ॥
अल्पाल्पकुम्भकं कुर्यात् खेचरप्रियकर्मणि ।
सर्वकाले प्रकर्तव्यं सर्वकाले सुखी भवेत् ॥ ६ ॥
आनन्दकल्पमाकृत्य विजयाद्यासवादिभिः ।
क्रमेण भेदनं कुर्यात् ततः साधकयोगिराट् ॥ ७ ॥
योगिनामपरिच्छिन्नं भावं विद्युत्प्रभाकरम् ।
विद्युत्कोटिसमाभासं[3] वारिधारासमाकुलम् ॥ ८ ॥
यद्येवं [4]सुतभावज्ञा विपाकेन पतन्ति ते ।
ते यान्ति परमं स्थानं ते यान्ति कोटिराज्यपाः ॥ ९ ॥

---

१. निर्माण ग० ।

२. मुण्डासन ग० ।

३. समाभाषम् ? ग०

४. यद्येव सुतभावाकाः इति यद्येवं स्वं भावशून्य क० । यद्येव सुतभावज्ञो ग० ।

ते भोगिनो योगिनश्च ते लोकपालकाः स्मृताः ।
ते महद्गुणसम्भोग्या म्रियन्ते न कदा कुतः ॥ १० ॥
ते [1]भवन्ति महाश्रेष्ठास्ते भवन्ति सुधाकराः ।
ते भेदकरणे युक्तास्ते मनुष्या न देवताः ॥ ११ ॥
ते सर्वे यान्ति सर्वत्र ते शिवास्ते च किङ्कराः ।
ते मे भक्ता महाकाल इति मे [2]स्वागमोदयम् ॥ १२ ॥
ये [3]भजन्ति तव पदाम्भोजं भावपरायणाः ।
ते [4]ज्ञानिनो भवन्त्येव तेषां कालो वशो भवेत् ॥ १३ ॥
ये प्राणवायुसंयोगा ये प्राणपरिरक्षकाः ।
आत्महत्यां परीहाय ब्रह्मलोकं मुदान्विताः ॥ १४ ॥
यान्ति नाथ ध्यानपराः संसारार्थविवर्जिताः ।
अरण्यवासिनो ये च [5]नारण्यवासिनो नराः ॥ १५ ॥
एकान्तनिर्जने देशे सर्वविघ्नविवर्जिते ।
षट्चक्रभेदमाकृत्य ते नराः फलभागिनः ॥ १६ ॥
महाकालफलं यस्तु [6]सदेच्छति सतां गतिम् ।
स एव योगी भ्रूमध्ये स्थित्वा सर्वत्रगो भवेत् ॥ १७ ॥
सर्वदेशे सदा पूज्यः सर्वेशो निर्मलोऽद्वयः ।
अनाद्यनन्तविभवः कालात्मा स भवेत् क्षणात् ॥ १८ ॥

---

१. महन्ति ग० ।

२. बुद्धिमेधागमोदयम् ग० ।

३. ये भजन्ति तव पादाम्भोजभावनतत्पराः क० ।
ये भवन्ति पदाम्भोजे तव भावपरायणाः ख० ।

४. ते भेदज्ञा प्रभवन्ति ग० ।

५. ये चान्यवासिनो नराः क० ।

६. सदैवैति सतीगतिः ( विशुद्धधीः ) ग० ।

एतेषां साधनं शीघ्रं [1]सिद्धिविद्यासुकल्पनम् ।
एतद्रूपं [2]निजं ध्यात्वा भेदं कृत्वा निजस्थलम् ॥ १९ ॥

मूलाधारं स्वाधिष्ठानं भेदज्ञानी विभेद्य[3] च ।
कुर्यात् [4]परमसन्दर्भं मणिपूरे विचक्षणः ॥ २० ॥

कृत्वा च दर्शनं विद्वान् श्रीकृष्णचरणाम्बुजम् ।
स्वाधिष्ठानादिदेवेन्द्रं शक्तियुक्तं निरञ्जनम् ॥ २१ ॥

राकिणीराधिकाव्याप्तं त्रिलोकरक्षणं परम् ।
परमाकाशनिलयं त्रैगुण्यं वारिरूपिणम् ॥ २२ ॥

वाञ्छाकल्पतरोर्मूलवासिनं शिववैष्णवम् ।
विलोक्यानन्दहृदयोऽशङ्कः सर्वत्र दर्शकः ॥ २३ ॥

कृत्वा योगी सदाभ्यासी मणिपूरं विलोकयेत् ।
मणिपूरं महाचिह्नं सिद्धिक्षेत्रं [5]सुधामयम् ॥ २४ ॥

हिरण्यकोटिदानेन गोकोटिदानहेतुना ।
कोटिब्राह्मणभोज्येन यत्फलं लभते नरः ॥ २५ ॥

तत्फलं लभते ध्यात्वा मणिपूरं मनोरमम् ।
मणिपूरं महास्थानं योगिनामप्यदर्शनम् ॥ २६ ॥

सूक्ष्मातिसूक्ष्मं परमं ज्ञानिनां ज्ञानगोचरम् ।
अप्रकाश्यं महागुह्यं[6] योगयोगेन लभ्यते ॥ २७ ॥

---

१. सिद्धिसन्ध्यासुकल्पनम् क० ।

२. ज्ञात्वा ग० ।

३. विभिद्य क० ।

४. नन्दार्द्धमिति गानन्दार्थं ख० ।

५. हिरण्मय क० ।

६. स्थान क० ।

श्रीआनन्दभैरवी उवाच—

योगार्थं यत्र कमले कोटिविद्युत्समप्रभे ।
कोटिकालाग्निमिलिते कोटिचन्द्रविनिर्मिते ॥ २८ ॥
कोटिसूर्यादिकिरणे मनः केन विलीयते ।
सूची[1]रन्ध्रे यथा सूत्रं तदेव फलदं सुखम् ॥ २९ ॥
[2]यन्न दृष्टं श्रुतं क्वापि ज्ञानं न तत्र सुन्दरि ।
तत्र केन प्रकारेण मनोनिवेशनं भवेत् ॥ ३० ॥
यत्र न गमनं नृणां[3] तस्य देवस्य यत्फलम् ।
तत्फलं किं न जानाति अदृष्टे गमनं कुतः ॥ ३१ ॥
कुतो राज्ञां न[4]सम्पत्तिः कुतो वा [5]स्वार्थदर्शनम् ।
कुतो वा जायते सिद्धिर्भेदने किं फलं [6]भवेत् ॥ ३२ ॥
तत्त्वं जानासि देवेशि तत्प्रकारं प्रकाशय ।

आनन्दभैरवी उवाच—

यदुक्तं तद्धि सकलं सफलं परमेश्वर ॥ ३३ ॥
तत्र[8] पूर्वंयोगधर्मस्वाश्रयं[7] शृणु तत्क्रमम् ।
पूर्वस्मरणमात्रेण जीवन्मुक्तो भविष्यसि ॥ ३४ ॥
जीव एव [9]महाभाग लोकानां मोक्षबन्धगः ।
स जीवो[9] वायुरूपेण महाबलपराक्रमः ॥ ३५ ॥

---

१. विद्धे, तथा, ग० ।
२. मया दृष्टं श्रुतं नापि ग० ।
३. प्रजानामपि ग० ।
४. राज्ञाञ्च ग० ।
५. आत्मदर्शनमिति क० ।
६. लभेत ख० ।
७. तव क ग० ।
८. तत्र पूर्वं योगधममाश्रित्न्य ख० ।
९. जीव एव हि कालेन योगानां मोक्षबन्धनः महाकाल ख० ।

गच्छति प्रत्यहं नित्यं सर्वदा च पुनः पुनः ।
पुनरायाति धरणीं[1] स्वभावेन निरन्तरम् ॥ ३६ ॥
नानाभावप्रियः सोऽपि नानाकारनिरूपकः ।
नानाधर्मप्रियः [2]शुद्धोऽशुद्धवेशधरो महान् ॥ ३७ ॥
कन्दर्पनिलयो योगी स योगी परमार्थवित् ।
स ज्ञानी निरहङ्कारी [3]सोऽहङ्कारी शरीरधृक् ॥ ३८ ॥
सर्वगन्धप्रियोऽदृश्यो भावयेत्तां[4] रहस्यवित् ।
स एव निष्कलः शुद्धः सदा ध्यानपरायणः ॥ ३९ ॥
[5]यदा चात्मनि ब्रह्माण्डे[6] ब्रह्मणि त्वयि शङ्करे[7] ।
तन्मनो विलयं याति [8]तदा भावो [9]महान् स्मृतः ॥ ४० ॥
तद्भावः परमं ज्ञानं न कथ्यं[10] विपरीतकम् ।
[11]आधारं सुसुखं नित्यं स्वल्प[12]कालविवर्जितम् ॥ ४१ ॥
अत्यन्तधर्मसन्धानं[13] प्राप्य योगी भवेन्नरः ।
शनैः शनैः प्रगन्तव्यं तत्र तत्र [14]सुदर्शनम् ॥ ४२ ॥

---

१. अवनीमिति क० ।
२. प्रियः शुद्धः शुद्धवेशधरो महानिति क० ।
३. नाहङ्कारी क० ।
४. ता क० ।
५. सदा क० ।
६. ब्रह्माण्ड ग० ।
७. ब्रह्मण्यद्भय ख० ।
८. यदभाव तदभाव ख० ।
९. महास्मृतः ग० ।
१०. मकथ्यमिति क० ।
११. स्वाधीन ख० ।
१२. कार्यति ख० ।
१३. पद्मानमिति क० ।
१४. स्वदर्शनं क० ।

तत्र तत्र महासिद्धो भूत्वा संसारपुत्रवान्[1] ।
योगिनां बहुकालस्थं मृतानामल्पकालकम् ॥ ४३ ॥
श्वासधारणमाकृत्य बहुकालं सुखी भवेत् ।
यथा बृहस्पतिः श्रीमान् यथा[2] सूर्यो दिवाकरः ॥ ४४ ॥
तथा प्रकाशमाकुर्यात् कोटिभिः[3]स्तोत्रनामभिः ।
स्तुत्वा भूत्वा महाद्रव्यैस्तर्पयित्वा यथाक्रमम् ॥ ४५ ॥
अभिषिक्तः[4] पुनर्ध्यात्वा पूजयित्वा यथाविधि ।
मानसोपचारद्रव्यैः स्वधायुक्तैरथापि वा ॥ ४६ ॥
परमानन्दितो भूत्वा भावयेत् पीठदेवताः ।
भावयित्वा ततो जप्त्वा धर्माधर्मौविचिन्तयेत् ॥ ४७ ॥
देवतायां मनो योज्य स्थापयित्वा स्वपीठके ।
पुनरुत्फुल्लकमलं मुद्रितं [5]परिकारयेत् ॥ ४८ ॥
षड्दलं[6] मूर्च्छितं कृत्वा दलाग्रे संविशेत् सुधीः ।
सदानन्दः सर्वमयो वेदवेदान्तनामभिः ॥ ४९ ॥
स्तवकोटिभिरेकत्र ध्यात्वा संहारमुद्रया ।
अधोमुखे दशदलकमलाग्रे नियोजयेत् ॥ ५० ॥
षड्दलाग्रं महाकाल नियोज्य गमनं चरेत् ।
ततो गच्छेत् प्रज्वलिते पद्मे दशदले पुरे[7] ॥ ५१ ॥
प्रविश्य कर्णिकामध्ये तन्मयस्तत्क्षणाद्भवेत् ।
तत्क्षणात्तन्मयो भूत्वा कुण्डलीचक्रसंस्थितः ॥ ५२ ॥

---

१. युक्तिमानिति ख० ।
२. तथा ग० ।
३. तत्रनामभिः क० ।
४. अभिषिच्य क०
५. परिकल्पयेत् ख० ।
६. षड्गुणम्, क० ।
७. परे क० ।

असाध्यसाधनं सर्वं [1]मणिपूरस्थनिर्मलम् ।
मणिपूरे महापीठे ध्यानगम्ये [2]सति प्रभो ॥ ५३ ॥
मनोनिवेशनं कृत्वा नरो मुच्येत संकटात् ।
मनोयोगी मनोभोगी मनोभक्तो [3]मनोयुवा ॥ ५४ ॥
मन एव मनुष्याणां कारणं [4]त्राणमोक्षयोः ।
कारणं सर्वभावानां तद्भावं सन्त्यजेद् बुधः ॥ ५५ ॥
सर्वभावं विहायापि महाभावं समाश्रयेत् ।
भावेन लभ्यते मोक्षो भावेन लभ्यते सुखम् ॥ ५६ ॥
एतद्भावं सदा कुर्याद्भावाद्भवति[5] योगिराट् ।
भावेन भक्तिमाप्नोति विषयाद्भावमाश्रयेत् ॥ ५७ ॥
विषयं विकृतिग्राह्यं सुकृतिज्ञानवर्जितम् ।
[6]त्यक्त्वा दिव्यं महापीठं मणिपूरं समाश्रयेत् ॥ ५८ ॥
महायन्त्रे मनो दत्वा निर्माणं कारयेद् बुधः ।
मणिभिर्ग्रथनं[7] कृत्वा नानामणिविभूषितम् ॥ ५९ ॥
सुपीठं [8]कुलपीठे वा लिङ्गपीठमथापि वा ।
श्रीविद्यापीठमालिख्य विभाव्य च पुनः पुनः ॥ ६० ॥
ततः प्रस्फुटिते पद्मे दलाग्रे षड्दलस्य च ।
स्थापयित्वा महाविष्णुं पूजयित्वा सुसंयतः ॥ ६१ ॥

---

१. मणिपूर सुनिर्मलमिति क० ।
२. सतामिति क० ।
३. मनोवरः क० ।
४. भोग ग० ।
५. त्तरति क० ।
६. अत ग० ।
७. ग्रन्थन ग० ।
८. परमं ध्यात्वा कुल पीठमथायिवा ग० ।

जप्त्वा च तन्मयो भूत्वा निधाय मणिपूरके ।
दृढाकारमूर्ध्वगतं[1] षड्दलं[2] परिरक्षयेत्[3] ॥ ६२ ॥
ततश्चोदूर्ध्वतरे स्थाने महोच्चोत्तरसुन्दरे[4] ।
मनोनिवेशनं कृत्वा शक्तिं रुद्रं समाश्रयेत् ॥ ६३ ॥
चैतन्यरूपिणीं शक्तिं चैतन्यं रुद्ररूपिणम् ।
[5]तत्र भद्रात्मकं रौद्रं रौद्रीं प्रकाशकारिणीम् ॥ ६४ ॥
भक्त्या पुनः पुनर्ध्यायेदूर्ध्वरेतास्तमीश्वरम्[6] ।
प्रगच्छन्ति चोदूर्ध्वमार्गे [7]ध्येया योगिभिरेव च ॥ ६५ ॥
[8]अहं देवी परानन्दा मणिपूरनिवासिनी ।
तथा श्रीलाकिनीशक्तिः श्रीरुद्रस्त्वं[9] न संशयः ॥ ६६ ॥
रुद्ररूपी महादेवो रुद्ररूपा सरस्वती ।
सर्वदा ऊदूर्ध्वगामी च सा शक्तिरूदूर्ध्वगामिनी ॥ ६७ ॥
ऊदूर्ध्वमार्गं काशयन्तीं योगिनीं योगमातरम् ।
महारुद्रं तथा ध्यात्वा मणिपूरे सुनिर्मले ॥ ६८ ॥
ऊदूर्ध्वमुखं समाकुर्याद् महापद्मं मनोरमम् ।
मणिपूरं महाकान्तं मणिकोटिसुनिर्मलम् ॥ ६९ ॥

---

१. मृदुगत क० ।
२. षड्गुणमिति ग० ।
३. परिचिन्तयेत् ख० ।
४. महोध्योद्भवसुन्दरे ग० ।
५. भद्रं भद्रात्मिका रौद्रं रौद्रीं प्रकाशकारिणीम् ग० ।
६. ऊर्ध्वरेतारमीश्वरम् ग० ।
७. ध्यायियोगिवरः सदा क० ।
८. स्वयमिति ग० ।
९. श्रीरुद्रस्यामिति ग० ।

कोटिकोटिशरच्चन्द्र[1]पूर्णज्योतिःसमाकरम् ।
ऊद्ध्र्वमुखं समाकुर्यात् स्वयंभावेन जायते ॥ ७० ॥

यदि चोर्द्ध्वमुखं [2]पद्मं यन्त्रमण्डलसंयुतम् ।
अतिकोमलपत्रेषु भाति चात्यद्भुतङ्करम् ॥ ७१ ॥

लेपयित्वा योजयित्वा[3] स्थापयित्वा पुनः पुनः ।
प्रापयित्वा महारुद्रं त्रैलोक्यजननीं शिवाम् ॥ ७२ ॥

रुद्राणीं रौद्रशक्तिश्च लाकिनीं [4]लोकसाक्षिणीम् ।
कुम्भकं प्राणवायोश्च प्राणवायोश्च योजनम् ॥ ७३ ॥

एकत्र मिलनं कृत्वा भावनं [5]परिकारयेत् ।
भावेन लभ्यते मोक्षो भाव एव निजप्रियः ॥ ७४ ॥

मनो निवेश्य तत्रस्थो रुद्राराधनमाचरेत्[6] ।
तथा श्रीलाकिनीदेव्याः परमाद्भुतसाधनम् ॥ ७५ ॥

शृणुष्व परमानन्द भैरव प्रियवल्लभ[7] ।
ममोपदेशं[8] सन्त्यज्य कोऽपि सिद्धो न सम्भवेत् ॥ ७६ ॥

ममाज्ञाबलयोगेन सिद्धो भवति मानवः ।
मुक्तिमूलं महाभावं मुक्तिमूलं हि साधनम् ॥ ७७ ॥

---

१. चन्द्र ग० ।
२. यन्त्रचन्द्रमण्डलसंयुतम् ग० ।
३. च तत्सर्वं मिति ग० ।
४. लोकरक्षिणीम् ग० ।
५. परिकल्पयेत् क० ।
६. माश्रयेत् इति क० ।
७. प्राणवल्लभ इति क० ।
८. ममोपदेश विधिना इति क० ग० ।

मुक्तिक्रमेण कालेन सिद्धो भवति साधकः ।
मम योगक्रमेणैव मम [1]तन्त्रावलोकनात् ॥ ७८ ॥

कोऽपि नाथ ब्रह्मयोगी भवत्येव न चाखिले ।
सर्वे च योगिनः शीघ्रं प्रभवन्ति[2] न संशयः ॥ ७९ ॥

स्फुटाकारदलं कृत्वा विन्यासं तत्र कारयेत् ।
महायोगिकुलन्यासं विद्यान्यासं समाचरेत् ॥ ८० ॥

सर्वन्यासं निजन्यासं [3]ज्ञानजालं समाचरेत् ।
मानसक्रियया व्याप्तं देहं [4]मधुरसम्प्लुतम् ॥ ८१ ॥

शिवरूपिणमात्मानं वैष्णवं ज्ञानचक्षुषम् ।
[5]एकाकारं मूलयन्त्रध्यानं तत्र समाचरेत् ॥ ८२ ॥

ध्यात्वा चार्घ्यं समाकुर्यात् कुलचक्रक्रमेण तु ।
आत्मानमपरिच्छिन्नं विचिन्त्य पुनरेव च ॥ ८३ ॥

सन्ध्यायेन्निजचैतन्यदेवतां कुलदेवताम् ।
पाद्यार्घ्यादिक्रमेणैव पूजयित्वाऽप्यहर्निशम् ॥ ८४ ॥

परिवारांस्ततो ध्यात्वा तत्सर्वान् परिपूजयेत् ।
धूपदीपौ ततो दद्याद् निजपूजाविधानतः ॥ ८५ ॥

प्राणायामं दीपनादौ[6] कुर्यात् साधक एव च ।
भक्त्या ध्यात्वा मनुं जप्त्वा मणिपूरस्थदैवते ॥ ८६ ॥

---

१. मन्त्रविलोकनमिति ख० ग० ।
२. भवन्ति च इति ग० ।
३. न्यासजालमिति ग० ।
४. मधुरसंयुतमिति क० ।
५. एकाकारं मूलमन्त्रं ध्यानमिति ग० ।
६. द्वादशादौ ग० ।

जपं [1]समर्प्य विधिना प्राणायामं पुनस्त्रयम्[2] ।
प्रणम्य स्तोत्रकवचैः स्वदेवीं हृदि चार्पयेत्[3] ॥ ८७ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोत्तरदीपने सिद्धिमन्त्र-
प्रकरणे भैरवभैरवीसंवादे मणिपूरचक्रभेदप्रकारो
नाम [4]त्रिचत्वारिंशत्तमः पटलः ॥



१. समाप्येति ग० ।
२. पुनर्द्वयमिति ग० ।
३. चालयेत् ग० ।
४. चतुश्चत्वारिंशदिति ख० पु० पाठः ।

# चतुश्चत्वारिंशः पटलः

आनन्दभैरवी उवाच—

मणिपूरविभेदार्थं[1] शृणु वक्ष्यामि तत्त्वतः ।
यं ज्ञात्वा मूढलोकाश्च प्रविशन्ति महाघटे ॥ १ ॥
अमूढत्वं प्राप्नुवन्ति[2] भवन्ति योगिनोऽमराः ।
खेचरत्वं प्राप्नुवन्ति[3] सांख्ययोगनिषेविणः[4] ॥ २ ॥
महापातकमुख्यानां नाशं शीघ्रं महारिपुम् ।
कियत्कालेऽनले दोषे जले पर्वतकानने ॥ ३ ॥
कुर्वन्ति च [5]दिग्दक्षूणां देवतावशमेव च ।
मणिपूरं महापीठं ध्यायेद् यः [6]प्राणसंयमम् ॥ ४ ॥
तथा पञ्चामराशवासिद्धिं[7] कृत्वा पूरं विभेदयेत् ।
[8]त्रिलोकजननीं सत्यां शिवामाद्यां त्रियोगिनीम् ॥ ५ ॥
मूलाधारात् समुत्पद्य[9] गच्छन्ती[10] रसषड्दले ।
प्रकाशं षड्दलं कृत्वा प्रगच्छन्ती प्रभान्विता ॥ ६ ॥

---

१. विभेदाय क० ।
२. अमूढत्वमवाप्नोतीति ख० ग० ।
३. मवाप्नोति ख० ग० ।
४. सांख्यतत्त्व निषेविणः ख० ग० ।
५. दिग्विदिक्षूणामिति क० ।
६. प्राणसंयमः क० ।
७. पञ्चाशवासिद्धमिति ख० ग० ।
८. पुस्तके नास्ति क० ।
९. समुत्पत्त्य क० ।
१०. प्रगच्छन्ति रसच्छदे ।

मणिपूरे महाचक्रे त्रैलोक्यजपसाधने ।
[1]सिद्धीनां निलये काम्ये कमनीये मनःप्रिये ॥ ७ ॥
[2]मनःप्रिया महादेवी [3]सर्वोल्लासनकारिणी ।
खेचरी महदानन्दमण्डिता मन्त्रयोगिनी ॥ ८ ॥
अनुग्रहकरी सिद्धा विभाव्या तत[4] एव हि ।
[5]आनन्दघनसन्दोहमात्मज्ञानं सुनिर्मलम् ॥ ९ ॥
मणिपूरं संविभाव्य किन्न सिध्यति भूतले ।
अणिमा लघिमा व्याप्तिर्महाश्रेष्ठादिसिद्धिभाक् ॥ १० ॥
कौलो वा वार[6]मुख्यो वा ज्ञानी वा साधकोत्तमः ।
योगाभ्यासं यः करोति मणिपूरं समाश्रयेत् ॥ ११ ॥
मणिपूरस्थितं यः स्तौति नियतः शुचिः ।
स्तवराजस्य पाठेन प्रबुद्धा कुण्डली भवेत् ॥ १२ ॥
सा देवी परमा माया मणिपूरे [7]स्थिता शिवा ।
प्रबुद्धां कारयत्येव ततः सिद्धो भवेन्मनुः ॥ १३ ॥
सिद्धे मनौ पराप्राप्तिरिति मे तन्त्रनिर्णयः ।
यदि चैतन्यमिच्छन्ति कुण्डलिन्याः पराक्रमम् ॥ १४ ॥
जानाति निजदेहे च महोदयमनुत्तमम् ।
तेषां चैतन्यहेतोश्च देवतानां कुलेश्वर ॥ १५ ॥

---

१. सिद्धि शून्यालये क० ।
२. पुनः प्रिया ख० ग० ।
३. सर्वोल्लङ्घनकारिणी क० ।
४. तत एवाहि क० ।
५. घट ख० ग० ।
६. नारकाख्योवा ।
७. मणिपूरनिवासिनी क० ।

महास्तोत्रं समाकुर्यात् प्रत्यहं सिद्धिहेतुना ।
सिद्धिकार्यं धर्मकार्यं मणिपूरे [1]समाप्नुयात् ॥ १६ ॥
[2]मणिपुरनिवासिन्याः भेदनं ज्ञानसाधनम् ।
सहस्रनाममलं सिद्धिद्रव्यनिरूपणम् ॥ १७ ॥
नित्यसिद्धिं काम्यसिद्धिं मणिपुरे समाश्रयेत् ।
प्राणबुद्ध्या स्वेष्टदेवीं पूजयेल्लाकिनीं पराम् ॥ १८ ॥
स्वदेवतां पूजयेद्वै मणिपूरे महालये ।
मणिपुरस्थितां रौद्रीं महाशक्तिं महोदयाम् ॥ १९ ॥
सर्वसञ्चारिणीं योग्यां महायोगिप्रियां पराम् ।
निजदेवीपदाम्भोज[3]पूजावत् पूजनं चरेत् ॥ २० ॥
पूजां समाप्य विधिना स्तोत्रं देव्याः समाचरेत् ।
तत्प्राणवायुरूपेण[4] सिद्धीनां नाशहेतवे ॥ २१ ॥
कृतं स्तोत्रं कोटिनाम ब्रह्मणा गुणकात्मना ।
तत्सर्वं प्रकरोम्येतत् प्रकारं ज्ञानशंकर ॥ २२ ॥
एतत्स्तोत्रप्रसादेन योगिनस्ते महौजसः ।
अहंकारघटी[5]ज्ञानं महाव्याधिनिवारणम् ॥ २३ ॥
महास्तवनमेवं हि साक्षादानन्दवर्धनम् ।
नय[6] भक्तिप्रदं शुद्धं [7]शुद्धानामप्यगोचरम् ॥ २४ ॥
शिवां श्यामाद्यां दशदलगतां रुद्रमहिषीं
विशालाक्षीं[8] सूक्ष्मां [9]शशियुतजटाजूटमुकुटाम् ।

---

१. समाश्रयेत् क० ।
२. मणिपर निवासिन्या इत्यारम्भ मणिपूरे समाश्रये दित्यन्तं क पुस्तके नास्ति ।
३. पदाम्भोजमिति ग० ।
४. तद्वायुप्राण सदने क० ।
५. अहङ्कार पराणाञ्च क० ।
६. लय क भक्तिप्रदमिति च क० ।
७. शुद्धानामात्म गोचरमिति क० ।
८. विशालाक्षीम् ख० ग० ।
९. शत ख० ग० ।

महाविद्युत्कोटिप्रियजडितपीठे त्रिनयनां
महालोकिन्याख्यां दशदल[1]कलां भावयति कः ॥ २५ ॥
[2]मृणालान्तर्ध्वान्तः प्रकटतटसंहारसुभगां
कुलक्षेत्रोल्लासां चरमपद्दां दीपकलिकाम् ।
सदानन्दाकारां [3]गतिगुणहरां चारुकिरणां ।
[4]प्रभावर्णश्यामां रुचिरवदनां भावयति कः ॥ २७ ॥
[5]प्रतीक्षानन्दाब्धिं प्रकटचरणाम्भोजयुगलां
वियद्वर्णां कान्तां सुरवरसुपूजाविधिरताम् ।
महासूक्ष्मद्वारप्रचलनकरीं भेदनकरीं
दिवायोगाह्लादप्रियजनशिवां भावयति कः ॥ २८ ॥
अयोध्यापीठस्थामरुणकमनीं प्रेमगलितां
महारौद्रीं भीमां शतशतरविप्रेमनिकराम् ।
महादुःखार्तानां[6] नयनशुभगां भावविरहां
[7]सतीं सोतामिन्द्रोत्सवनवघटां भावयति कः ॥ २९ ॥

---

१. गते ग० ।

२. सदान्तर्दंत्तध्यान विषयपरामिति ख० ।

·मूलान्तंवा क····················इति ।

कुलक्षेत्रोन्यन्ना मिति ख कुरुक्षेत्रोलासा ग० ।

३. मतिगुणाहरामिति क तया तारकमयीमिति क० ।

४. महारौप्यादिस्थां सकलकरुणामिति ग० ।

५. प्रसन्नां स्वे देहे कुलपथगतां गीतरमितां
परानन्दश्रेणीं नवरवलतां तामसहराम् ।
महारुद्राक्षिप्तां क्षितिमथहरां चारुकिरणाम्
महारौप्याद्रिस्थां सकलकरुणां भावयति कः
क पुस्तकपाठः किन्तु मूले देयः ।

६. प्रतीक्षानन्दां विप्रगतचरणां कोटि विधुगाम्
वियद्वर्णां स्वस्थां निखिलवसुपूजा···········

७. ············प्रचलनपरां ग० । महादुःखार्णान्तां

सुधाब्धेराह्लादप्रकरणसुरां सौरभकरां
क्रियारूपां योग्यां भुवमणिपूरप्रकृतिगाम् ।
गुरोः स्थानोद्‌योगां शमनदहनां[2] शीतलवरां
त्रितत्त्वां तत्त्वज्ञां समरहरशक्तिं[3] भजति कः ॥ ३० ॥
[4]विकाराकाराङ्गीं तरुणरविकोटिश्रियमिमां
कुलाधारां सारां परमरसधारां [5]जयवराम् ।
कृपाच्छन्नाकामां[6] परमरसभाण्डेषु शुभदां
[7]भजेदिन्द्रां रुद्रां शशिमुखकराह्लादनिकराम् ॥ ३१ ॥
रसाब्धौ विश्रान्तिं कुपितजनशान्तिं सकरुणां
त्रिलोकज्ञानस्थां मदननिलयां योगनिकराम् ।
मणिद्वीपच्छायां दशदलकलां केवलभवां
भवानीं [8]रुद्राणीं [9]वरदमणिपूरे भजति कः ॥ ३२ ॥
[10]कृपाब्धौ किंकिंकि मनुगतसुतां मौलिनमितां
शिवाङ्कां[11] मूलस्थां सकलमणिपूरस्थिरभवाम् ।
हिरण्याक्षीं तक्षां[12] क्षयकरणरश्मिच्छविशतां
विनोदीं पञ्चास्यप्रियगुणधरां भावयति कः ॥ ३३ ॥

---

१. सतां शीता मिति ग० ।
२. दमनां शीतल वरा मिति ग० ।
३. मुक्ति मिति क० ।
४. धारांगीम् ग० ।
५. जयवरा मिति ग० ।
६. मग्ना मिति ग० ।
७. भवोदभद्रामाद्यां ग० ।
८. रौद्राणी मिति क० ।
९. वरदेति क० ।
१०. कृपासारां दीर्घामनु गत-मौननमिग मिति ग० ।
११. शिवाख्यां वनाद्यां..........स्यल ग० ।
१२. सूक्ष्मां.........राद्यां स्थितिकरीम्, रश्मिमविशतोम् ग० ।

महापद्माख्यां सकलधनदानाकुलचलां
चलानन्दोद्रेकप्रचयरससिन्धूद्भवहृदि[1] ।
हृदानन्दो ध्यायेत् सकलगुणदात्रीं[2] सुखमयीं
कलां सूक्ष्मात्यन्तां तिमिरदहनां कोटिधनदाम् ॥ ३४ ॥
दशकं यः पठेन्नित्यं श्रीविद्यासुखदायिनीम्[3] ।
ध्यात्वा हृदयपद्माधो निर्मलात्मा सदा पठेत् ॥ ३५ ॥
मणिपूरस्थितं देवं रुद्रं पश्यति योगिराट् ।
रुद्राणीसहितं शम्भुं दृष्ट्वा मुक्तो भवेत् क्षणात् ॥ ३६ ॥
जीवन्मुक्तः स एवात्मा योगिनीवल्लभो भवेत् ।
योगात्मा परमात्मा च स हि साक्षादनीश्वरः ॥ ३७ ॥
स भित्त्वा मणिपूराब्धं निर्मलं ज्योतिरुज्ज्वलम् ।
शम्भोरीश्वरयोगज्ञक्रियानाथस्य श्रीपतेः ॥
निकटे याति देव्याश्च स्थाने योगी न संशयः ॥ ३८ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्र-
प्रकरणे षट्चक्रप्रकाशे मणिपूरभेदने भैरवीभैरव-
संवादे त्रितत्त्वलाकिनीशक्तिस्तवनं नाम
चतुश्चत्वारिंशत्तमः पटलः ॥



१ सिन्धुरसहृदा मिति क० ।
२. धात्री मिति क० ।
३. दायित्री मिति ग० ।
४. पञ्च चत्वारिंश मिति ख० ।

## पञ्चचत्वारिंशः पटलः

आनन्दभैरवी उवाच—

अथ कालक्रमं वक्ष्ये यत्काले योगिराड् भवेत् ।
तत्कालं प्राणवायूनां निलयं सूक्ष्मसञ्चयम् ॥ १ ॥
पुनः पुनः सञ्चयने दृढो भवति संवशी[1] ।
क्रियायां सञ्चरन्त्येव योगिन्यो योगमातरः ॥ २ ॥
[2]यत्काले यत्प्रकर्त्तव्यं भानुरूप्यकुलार्णव ।
काले काले वशो याति परमात्मा निरामयः ॥ ३ ॥
विना प्रयोगसारेण विना जाप्येन शंकर ।
कः सिद्धो जायते ज्ञानी योगी भवति कुत्र वा ॥ ४ ॥
अभ्यासमन्त्रयोगेन शनैर्योगी भवेन्नरः ।
प्रभाते ज्ञानशौचञ्च कुण्डलीभावनादिकम् ॥ ५ ॥
तन्मध्ये चापि संस्कुर्याद् योगं [3]पञ्चामरादिकम् ।
ततो मन्त्रस्नानकार्यं मस्तके जलसेचनम् ॥ ६ ॥
सन्ध्यावन्दनकार्यञ्च ततः कुर्यात् पृथक् पृथक् ।
तत उत्थाय सद्भूमौ [4]शुद्धकोमलजासने ॥ ७ ॥
उपविश्य सदाभ्यासी शुद्धकायासनञ्चरेत् ।
तत्कार्यसमये नाथध्यानं चैतन्यमेव च ॥ ८ ॥

---

१. साधकः ख ।

२. तत्काले तत्कर्तव्यमिति तन्निरूपा ग० ।

३. पञ्चासवादिकम् ग० ।

४. संभूसाविति ग० ।

५. ऊर्ध्वं ग० ।

[1]कुण्डलिन्याः सदा कुर्यात् तन्मध्ये जपमेव च ।
आसनं सुन्दरं कुर्यात् [2]सव्यापसव्यभेदतः ॥ ९ ॥
आसनादिकमाकृत्य शेषे [3]सुस्थासनं चरेत् ।
सुस्थासनं समाकृत्य चोर्ध्वपद्मासनं चरेत् ॥
मस्तकाधः केशमध्ये हस्तौ दत्त्वा मनुं जपेत् ॥ १० ॥
चतुरशीतित्रिगुणमासनं भञ्जनं तथा ।
प्रत्यासनं क्रमेणैव एतेषां द्विगुणं पुनः ॥ ११ ॥
एतेषामासनादीनां वक्तव्या [4]सङ्ख्यका पुनः ।
अष्टाङ्गसाधनेनाथ वक्तव्यं सर्वमासनम् ।
प्राणायामं षोडशकमथ[5] वा द्वादशादिकम् ॥ १२ ॥
स्वकर्णागोचरं कृत्वा पिबेद्वायुं सदा बुधः ।
ततः समाप्य तत्कार्यं मन्त्रयोगं समभ्यसेत् ॥ १३ ॥
समाप्य मन्त्रयोगं च प्राणायामत्रयं चरेत् ।
तत उत्थाय नद्यादिं[6] विलोक्य चान्तरात्मनि ॥ १४ ॥
स्नानं कृत्वा महायोगी मानसादिक्रमेण तु ।
तत्रैव मानसं जापं समाप्य जपमेव च ॥ १५ ॥

---

१. कुण्डलिन्यामिति ग० ।

२. सव्यासव्यविभेदत ग० ।

३. चोर्द्धे पद्मासनमिति ग० ।

४. वक्तव्याः संख्यकाः पुनः ख० ।

आसनं यः करोत्येव वज्रकायः स एव हि ।
समाप्यचासन सर्वं बद्धपद्मासने विशेत् ॥
चिबुकं वक्षसि श्रीमान् दत्त्वाकालीं विभावयेत् ।
ततः पद्मासनं कृत्वा प्राणायामं मुद्राचरेत् ॥

क० पुस्तके अधियाः किन्तु मूलेदेयः ।

५. तथा वा ग० ।

६. मद्यादि ग० ।

एकप्राणायामं[1] कुर्यात् कृत्वा तीरे विशेत् सुधीः ।
पिधाय पीतवसनं धर्माधर्मं विचिन्तयेत् ॥ १६ ॥

ततः सन्ध्यावन्दनं च कृत्वा पूजाविधिं चरेत् ।
सर्वत्र कुम्भकं कृत्वा भावयित्वा पुनः पुनः ॥ १७ ॥

मणिपूरे महापीठे ध्यात्वा देवीं कुलेश्वरीम् ।
पूजयित्वा विधानेन प्राणायामं पुनश्चरेत् ॥ १८ ॥

ततः कुर्यात् साधकेन्द्रो विधिना कवचस्तवम् ।
सर्वत्र प्राणसंयोगाद् योगी भवति निश्चितम् ॥ १९ ॥

अथवा कालजालानां वारणाय [2]महर्षिभिः ।
एतत् कार्यं समाकुर्याद् [3]योगनिर्णयसिद्धये ॥ २० ॥

विना योगप्रसादेन (न ?) [4]कालः संवशो भवेत् ।
कालेन [5]योगमाप्नोति योगध्यानं स्वकालकम् ॥ २१ ॥

योगाधीनं परं ब्रह्म योगाधीनं परन्तपः ।
योगाधीना सर्वसिद्धिस्तस्माद् योगं समाश्रयेत् ॥ २३ ॥

योगेन ज्ञानमाप्नोति ज्ञानान्मोक्षमवाप्नुयात् ।
तत्क्रमं श्रृणु भूचक्रे [6]सर्वसिद्ध्यादिसाधनम् ॥ २४ ॥

सिद्धिसाधनमन्त्रेण योगी भवति भूपतिः ।
शीघ्रं राजा भवेद् योगी शीघ्रं योगी भवेद् यतिः ॥ २५ ॥

---

१. एकं प्राणायामकार्यमिति ग० ।

२. महाऋषिः ग० ।

३. योगिना योगसिद्धये क० ।

४. न कालस्य वशोभवेदिति ग० ।

५. योगाधीन मिति ग० ।

६. सर्वसिद्धादिसाधनमिति क० ।

शीघ्रंयोगी भवेद्विप्रो यदि स्वधर्ममाश्रयेत् ।
स्वधर्मनिष्ठताज्ञानं [1]सज्ज्ञानं परमात्मनः ॥ २६ ॥
तज्ज्ञानेन लभेद् योगं योगाधीनाश्च सिद्धयः ।
सिद्ध्यधीनं परं ब्रह्म तस्माद् योगं समाश्रयेत् ॥ २७ ॥
स्वधर्मनिष्ठताज्ञानं स तज्ज्ञानं[2] समाश्रयेत् ।
योगयोगाद्भवेन्मोक्षो मम तन्त्रार्थनिर्णयः ॥ २८ ॥
योगी ब्रह्मा मुरारिश्च[3] तथा योगी महेश्वरः ।
तथा योगी महाकालः[4] कौलो योगी न संशयः ॥ २६ ॥
मणिपूरभेदने तु यत्नं कुर्यात् सदा बुधः ।
यदि चेन्मणिपूरस्थदेवताभेदको भवेत् ॥ ३० ॥
सर्वक्षणं सुखीभूत्वा चिरं तिष्ठति निश्चितम् ।
महाप्रभं सुन्दरञ्च महामोहनिघातनम् ॥ ३१ ॥
मेघाभं विद्युताभंच पूर्णतेजोमयं परम् ।
मणिभिर्ग्रथितं पद्मं मणीनां पूरमेव च ॥ ३२ ॥
सूर्यकान्तै[5]श्चन्द्रकान्तैर्वह्निकान्तैर्महोज्ज्वलैः ।
इत्यादिमणिभिः सर्वं परं कान्तिगुणोदयम् ॥ ३३ ॥
निविडे जलदे मेघे कोटिविद्युत्प्रभा यथा ।
तत्प्रकारं भावनीयं सिद्धानां ज्ञानगोचरम् ॥ ३४ ॥
अत्यन्तसूक्ष्ममार्गस्थं नित्यस्थानं हि योगिनाम् ।
मणिभिः शोभितं पद्मं मणिपूरं तथोच्यते ॥ ३५ ॥

---

१. स्वज्ञानमिति ग० ।

२. सत्यज्ञानमिति क० पुस्तके नास्ति च ।

३. ब्रह्माद्यवादी चेति ग० ।

४. भवेत्काल ग० ।

५ सूर्यकान्तवह्निकाणतवह्निकात्तमहोज्वलः इत्यादि मणिभिः सर्वं पूर्वं कान्ति गुणोदश क० ।

दशकोमलपत्रैश्च समायुक्तं मनोहरम् ।
डादिकान्तवर्णयुक्तं स्थिरविद्युत्समाकुलम् ॥३६॥

शिवेनाधिष्ठितं पद्मं विश्वालोकनकारकम् ।
आदौवर्णरूपकाणां[1] ध्यानं कुर्यात् [2]स्वधामयः ॥३७॥

महापद्मे मनोदत्त्वा निर्मलं परिभावयेत् ।
डादिफान्ता[3]क्षराणां च ध्यानाज्ज्ञानस्थिरो भवेत् ॥३८॥

[4]मनोधैर्यमुपागम्य दिव्यभक्तिं समालभेत् ।
वर्णध्यानं प्रवक्ष्यामि शृणुष्व परमेश्वर ॥३९॥

[5]यद्विभाव्यामरो भूत्वा चिरं तिष्ठति मानवः ।
महाधैर्याक्रियां कुर्याद् वायुपानं शनैः शनैः ॥४०॥

यत्र यत्र मनो याति तन्मयस्तत्क्षणाद्भवेत् ।
पूर्वादिदलमारभ्य ध्यानं कुर्यात् पृथक् पृथक् ॥४१॥

डां डां डां डाकिनीन्तां डमरुवररतां[6] तारिणींताररूपाम् ।
डिं डिं डिं डामरस्थां डमरुडमगृहे डंकडिंकिं[7] मनुस्थाम् ॥
डं डं डं डामरेशीं डिमिडिमिडिमिगध्वाननिर्माणडोरां ।
डों डों डों डाकडं डः प्रडुम[8]डमुडां दाडिमामाश्रयामि ॥४२॥

ढां ढां ढां गाढढक्कां वरनिकरकरां बाढमाबाढमन्त्राम्
ढिं ढिं ढिं नागरूपां भज भज विमलानन्दचित्तप्रकाशः ।

---

१. वल्गुरूपकाणामिति क० ।
२. सुधाशयः क० ।
३. डादिभान्ताक्षराणां च ख० ।
४. मनोश्चर्यमिति ग० ।
५. यदिभाव्यामर ग० ।
६. करामिति ख० ।
७. डंकडोंमिगां मनुस्थमिति क० ।
८. प्रडुम मुडुमडुं इति क० ।

श्रीं ढें ढं वज्रढूं खा खवट मटमरं स्वाहया टोंट बीजाम् ।
ढोंढोंढो ढकढकः प्रियढुनकरुणाकामिनीं लाकिनीं ताम् ।। ४३ ॥

वाणस्थित्यसंस्थां रुचिनकरवणाकारणा वाणवाणिं
बीणांवेणूत्सवाढ्यां मणिगुणकरुणां नं खटीजप्रवीणम् ।
वेणुस्थानां सुमानां मणिमयपवमामन्त्रमालाविलोलां
सिन्दूरारक्तवर्णां तरुणघननवीनामलां भावयामि ॥ ४४ ॥

तारांतारकमञ्जजालविमलां तालादिसिद्धिप्रदाम् ।
[1]ताडङ्कामतितेजसा मुनिमनोयोगं वहन्तीं पराम्
[2]तांतारां तुलसीं तुलां तनुतटां[3] तर्कोद्भवां तान्त्रिकां
श्रीसूर्यायुततेजसीं भज मनः श्रीमातरं तापसीम् ॥ ४५ ॥

व्यग्रस्थां[4] स्थानसुस्थां स्थितिपथपथिकां थार्णकूटां-
थमालीं गाथांयोगां विपथांथमिति थमिति थं-
वह्निजायां स्थिरासाम् । चन्द्रज्योत्स्नास्थलस्थां[5]
स्थिरपदमथनामुज्ज्वलामासनस्थां स्थैर्या
स्थैर्याभिरामां प्रणवनव[6]सुधां चन्द्रवर्णां भजामि ॥ ४६ ॥

द्रां द्रीं द्रूं दीर्घदंष्ट्रां दशनभयकरां साट्टहामां कुलेशीं
दोषच्छत्रापहन्त्रीं दिवितरणदशा[7]दायिनीमादरस्थाम् ।
श्लिष्टाह्लादप्रदीप्तामखिलधनपदां दीपनीं भावयामि ॥ ४७ ॥

---

१. तातङ्क ग० ।
२. तातङ्कानिमतेजसामिति ख० ।
३. तातीयांमिति ख० ।
४. व्यग्रस्थं स्थानसुस्थं·········धमानौं
गाथां गाथां विमोथामिति ख० योथामिति ग० ।
५ स्थिरास्थामिति, क० ।
६. प्रणवनवसुजामिति ग, सूजामिति क,
७ दोषैर्वृत्रापहन्त्री दिविदरणादशा दायिनी मादस्थाम् ।
शिष्टाह्लादप्रदीप्तामखिलधनमदनमिति ग० ।

धर्मां[1] श्रींध्यानशिक्षां धरणिधरधरां धूमधूमावतीं तां
धूस्तूराकारवक्त्रां कुवलयधरणीं धारयन्तीं कराब्जम् ।
विद्युन्मध्यार्ककोटिज्वलनधरसुधां कोकिलाक्षीं सुसूक्ष्मां
ध्यात्वा ह्लादैकसिद्धिं धरणिधननिधिं सिद्धिविद्यां भजामि ॥ ४८ ॥

नित्यां नित्यपरायणां त्रिनयनां बन्धूकपुष्पोज्ज्वलाम्
कोट्यर्कायुतसंस्थिरां नवनयां हस्तद्वयाम्भोरुहाम् ।
नानालक्षणधारणामलविधुश्रीकोटिरश्मिस्थिताम्
सानन्दां नगनन्दिनीं त्रिगुणगां नं नं प्रभां भावये[2] ॥ ४९ ॥

प्रीतिं प्रेममयीं [3]परात्परतरां प्रेष्ठप्रभापूरितां
पूर्णां पूर्णगुणोपरिप्रलपनां[4] मांसप्रियां पञ्चमाम् ।
व्यापारोपनिपातकापलपनां[5] पानाय पीयूषपां
चित्तं प्रापय[6] पीतकान्तवसनां पौराणिकीं पार्वतीम् ॥ ५० ॥

स्फें स्फे[7] समें फणिवाहनां फणफणां[8] फुल्लारविन्दाननाम्
फेरूणां वरघोरनादविकटास्फालप्रफुल्लेन्मुखीम् ।
फं फं फं फणिकंकणां फणिति फं[9] मन्त्रैकसिद्धेः [10]फलाम्
भक्त्या ध्यानमहं करोमि नियतं वाञ्छाफलप्राप्तये ॥ ५१ ॥

---

१. धर्क्षां श्रीध्यानसिद्धिं······वस्त्रां······ध्यानाह्लादादि सिद्धि धवनधत······इति ग० ।
२. भावयेदिति ग० ।
३. परां तपसियाज्ज्वालामिति क० ।
४. प्रपलनामिति ग० ।
५. कापललपा पानापपोयूषपामिति ग,
६. चित्तप्रापकपीव······पौराणिका मिति ग,
७. स्फामिति क० ।
८. फलफला मिति क० ।
९. फणा मिति ग० ।
१०. फणामिति ग० ।

विद्युतां कारमध्ये तु विजुलीरक्तवर्णकान् ।
एवं ध्यात्वाखिलान् वर्णान् रक्तविद्यु[1]द्दलोद्यताम् ॥ ५२ ॥

सदा ध्यायेत् कुण्डलिनीं कर्णिकामध्यगामिनीम्[2] ।
वरहस्तां[3] विशालाक्षीं चन्द्रावयवलक्षणाम् ॥ ५३ ॥

चारुचन्दनदिग्धाङ्गीं[4] फणिहारविभूषणाम् ।
द्विभुजां कोटिकिरणां भालसिन्दूरशोभिताम् ॥ ५४ ॥

त्रिनेत्रां कालरूपस्थां लाकिनीं लयकारिणीम् ।
सिद्धिमार्गसाधनाय ध्यायेद् वर्णान् दश क्रमात्[5] ॥ ५५ ॥

चतुर्भुजां षड्भुजां च अष्टहस्तां [6]परापराम् ।
दुर्गां दशभुजां देवीं निजवाहनसुस्थिताम्[7] ॥ ५६ ॥

सर्वास्त्रधारिणीं सर्वां [8]हस्तद्वादश शोभिताम् ।
चतुर्दशभुजां रौद्रीं तथा षोडशपालिनीम् ॥ ५७ ॥

अष्टादशभुजां श्यामां हस्तविंशतिधारिणीम् ।
एवं ध्यात्वा पूजयित्वा रुद्राणीस्तोत्रमापठेत् ॥ ५८ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे षड्चक्रप्रकाशे भैरवीभैरवसंवादे वर्णध्यानकथनं नाम [9]पञ्चचत्वारिंशत्तमः पटलः ॥



---

१. विद्युद्गणो······ख० ।

२. काशिनीमिति ग० ।

३. बहु हस्तामिति ग० ।

४. दीर्घाङ्गीमिति ग,

५. दशच्छदे क० ।

६. प्रभा ख० ।

७. सुप्रियामिति ग,

८. दशहस्ताश्च ग० ।

९. षट्चत्वारिंशत्तम ख० ।

# षट्चत्वारिंशः पटलः

आनन्दभैरवीउवाच—

श्रृणु भैरव[1] वक्ष्यामि रुद्राणीस्तोत्रमुत्तमम्।
श्रुत्वा पठित्वा देवेश धारयित्वा स्वदेहके ॥ १ ॥

महासिद्धो भवेदेव महाकालवशो भवेत्।
त्रैलोक्यरक्षणार्थाय ब्रह्मणा विष्णुना तथा[2] ॥ २ ॥

रुद्रयुक्तां महारौद्रीं स्तुत्वा[3] सर्वजयो भवेत्।
तच्छुत्वा मुनयः सर्वे योगिनो योगदर्शकाः ॥ ३ ॥

सर्वे देवाः सर्वलोकाधिपाः स्युः प्राणरक्षकाः।
एतत्स्तवनमात्रेण ब्रह्मा ब्रह्मत्वमाप्नुयात् ॥ ४ ॥

विष्णुर्विष्णुत्वमाप्नोति देवत्वं सर्वदेवताः।
इदानीं श्रृणु तत्स्तोत्रमष्टांगयोगसाधनम् ॥ ५ ॥

एतत्स्तवनपाठेन चाष्टांगकुलदेवताः।
वशीभूताः प्रभवन्ति[4] सप्तस्वर्गस्थदेवताः ॥ ६ ॥

अस्यमहारुद्रशक्तिस्तोत्रस्य महाकालभैरवऋषिरनुष्टुप्छन्दः श्रीमच्श्रोरूपिणी देवता[5] वां बीजं द्रांशक्तिः [6]समौं स्फें कीलकं महोग्रादि[7] देवता सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः ॥

---

१. श्रृणु वक्ष्यामि ते रुद्र क०।

२. कृतामिति ख०।

३. श्रुत्वा क०।

४. भवन्त्येव ख०।

५. रां क०।

६. क्षौं फे क०।

७. महोग्र, महोग्रायी क्रमेण ग०।

महारौद्री रुद्रारुणा खरवक्रोधनिकरा
विकारा धर्माणां हरतु विषयं देहि परमम् ।
विवेकं सत्पुत्रं त्वमपि जगतामादिपुरुषं
विभाकोटिग्रामस्खलननिचला लोचन[1]चला ॥ ७ ॥

त्वमेका त्रैलोक्यं व्यवसि[2] सततं मे शुभभवा
अनन्ता सा चातीन्द्रियगणकला नागवसना ।
श्रियं दातुं नित्यं समुदयति रश्मिस्तव शिवे
शिवाह्लादानन्दा जडितमनमन्दा[3] कुरु मुदा ॥ ८ ॥

महालोभं पापं हर हर हरे [4]हीरकनिभे
विषानन्दोद्घाता मम तनु[5]विषं वेशवशिनि ।
सुधानन्दं देहि क्षयमपि हरक्रोधमतुलम्
मदं[6] कामं मोहं कुलजननि दिव्यं वितर तत् ॥ ९ ॥

तपस्यासद्भावं त्वमपि च ददासीह यदि वा
प्रदीप्ता सद्व्याप्ता भवति तव दाने मम मनः ।
प्रफुल्लातिश्रीदे जय मम न भक्तिं निजशुभां
समीडे त्वामेकां भुवनजनरक्षां कुरु सदा ॥ १० ॥

विचार्य स्वे तन्त्रे रचयसि सुखं नित्यमिलितम्
महाखड्गप्रख्या त्रिभुवनकरा रुद्रदयिता ।
सुराणां संरक्षां यदि कुरु मुदा पीठनिकरे[7]
मणिद्वीपे तेजोमयि हि मणिपूरेऽमलपदम् ॥ ११ ॥

---

१. चालन ग० ।
२. चरसि ख० ।
३. मनमंगमिति ग० जडिततममगमिति ख० ।
४. हारकनिभ क० ।
५. तनुरियमिति ख० ।
६. यदा ग० ।
७. पीठनिकटे क० ।

महाक्षेत्रे युद्धोत्सवभयहरा त्वं कुलकला
किराती सर्वाणी मम कुलगतं पालय लये ।
लयज्ञानानन्दं रचय हृदये योगजननि
यतीनां रक्षायै कुलयुवति विद्ये[1] उदयति ॥ १२ ॥

प्रतिष्ठा कीर्तिस्ते त्वमव[2]तरसि त्रासि [3]तिमिरात्
न जाने त्वत् तत्त्वं तरुणि महिमानं [4]सुखमयम् ।
महापारावारां निधिभवजलेशं कुरु जयम्
हिरण्याह्लादस्था त्वमपि करुणासागरमयी[5] ॥ १३ ॥

विधातारं विष्णुं सुरवरणवन्दीन्[6] परजनान्
प्रपासि त्वं सिद्धा सुखभुवनभंगक्षयकरा ।
[7]किरन्ती सानन्दा किरणशतकोटिं त्रिभुवने[8]
त्वमेका कल्याणि गिरिशरमणिं पाहि सततम् ॥ १४ ॥

त्वदीयं सुखान्तं समीच्छामि सत्यं
विसर्गेन्दु वर्णात्मकं कामनाख्यम् ।
कृपादृष्टिपाता मनः पाहि[9] शुद्धा ,
त्वमेका परब्रह्मरूपेण सिद्धा ॥ १५ ॥

---

१. विधेन्द्रजयति क० त्वमपि हि ख० ।
२. तमसि ख० ।
३. तिमिराट् क० ।
४. सुरमयमिति पुरभयमिति वा क० ।
५. सागरमयि ग० ।
६. रादीनिति क० ।
७. किरातीति क० ।
८. च्छदविले क० ।
९. पातासनं पाहि ख० ।

जगत्तारिणी त्वं जगद्व्यापिनी त्वं
जगज्ज्वालरूपा[1] जगद्धर्मरूपा ।
अनैकान्तिकत्त्वात्त्वमानन्दरूपा
त्वमेका परब्रह्मरूपेण सिद्धा ॥ १६ ॥

विधानं जनानां कुरु त्वं त्वमीशा
क्षपाक्षा[2]मचित्ता प्रियानन्ददात्री ।
त्वमाज्ञाम्बुजस्था त्वमार्या[3]गुरूणां
त्वमेका परब्रह्मरूपेण सिद्धा ॥ १७ ॥

प्रभामण्डलस्था स्थितित्यागसंस्था
स्थलाम्भोजमाला[4]त्वमालग्नकण्ठा ।
शिवश्यामवर्णा महापिंगलार्णा[5]
त्वमेका परब्रह्मरूपेण सिद्धा ॥ १८ ॥

चतुर्थश्रुतिस्थाचलश्चन्द्रसंस्था
महावेदभाषा त्वमेका [6]जगत्याम् ।
महाभक्तिभावाश्रितं मां प्रसिद्धे
त्वमेका परब्रह्मरूपेण सिद्धा ॥
जगद्धामचेष्टे जगद्बुद्धिनिष्ठे
जगद्यौवनस्था जगद्भावसंस्था[7] ।

---

१. जगद्धर्मरूपा जगज्ज्ञानरूपेति क० ।
२. क्षुब्धदा क० ।
३. त्वमाज्ञागुरूपामिति क० ।
४. द्वया ग० ।
५. पिङ्गलाक्षीति क० ।
६. त्वमेकासि सारः क० ।
७. समावर्तनेया क० ।

समावर्त्तमध्ये[1] महाघूर्णितं मां
त्वमेका परब्रह्मरूपेण सिद्धा ॥ १९ ॥

महा[2]सृष्टिसंहारकालक्रमस्था
महामांसभक्षा सदानन्दरूपा[3] ।
[4]महाशाक्यमौनीन्द्रपूज्ये सुरेज्ये
त्वमेका परब्रह्मरूपेण सिद्धा ॥ २० ॥

चतुःषष्टितन्त्रार्णवाह्लादकत्वा-
न्महाभौतिकत्वान्महासिद्धिविद्या ।
छलच्छिन्नदेहा छलानन्नसंज्ञा
त्वमेका परब्रह्मरूपेण सिद्धा ॥ २१ ॥

शिवत्वं महत्त्वं [5]समत्वामलत्वा-
दनैकान्तिकत्त्वं ददासि त्वमाद्या ।
सुधासागरस्था महामोहनस्था
त्वमेका परब्रह्मरूपेण सिद्धा ॥ २२ ॥

महासिंहपृष्ठे पदाम्भोजलक्ष्मी-
र्मम श्रीशिरोमण्डलस्थं[6] प्रपातु ।
भवानन्दसन्तानकल्पेऽवदेहं
त्वमेका परब्रह्मरूपेण सिद्धा ॥ २३ ॥

---

१. जगद्भावनस्था क० ।
२. दृष्टि क० ।
३. सदानन्दसेव्या क० ।
४. महामोक्षमौलीन्द्र······वरात्वम् क० ।
५. मयत्वामयत्वादिति ग० ।
६. मण्डलस्था ख० ।

स्थिरा सा महाविद्युदाकारहारा
महाच्चञ्चला चाचला[1] ज्ञानजन्या ।
सदा भावनत्वा[2]त्सदा ज्ञापनस्था[3]
त्वमेका परब्रह्मरूपेण सिद्धा ॥ २४ ॥

कुलानन्दमोहा[4] महाकौलकन्या
कुलक्षेत्ररक्षा कुलच्छत्रकारा ।
महाचञ्चलत्वान्महावायुघूर्णा[5]
त्वमेका परब्रह्मरूपेण सिद्धा ॥ २५ ॥

चिरंजीविनी भामिनी[6] भूमिबीजा
भयाभावहन्त्री शरत्कोटिचन्द्रा ।
विभूतिर्भयाहार[7]कर्त्री प्रकृष्टा
त्वमेका परब्रह्मरूपेण सिद्धा ॥ २६ ॥

महावीरभावाश्रया[8] भावरूपा
विशेषाविशेषे[9] महाशैववीरा ।
विसर्गापवर्गा[10]श्रयाणोंज्ज्वलत्वात्
त्वमेका परब्रह्मरूपेण सिद्धा ॥ २७ ॥

---

१. वाननज्ञानजन्येति क० ।
२. सदाभावनत्वां सदाज्ञापनत्वामिति क० ।
३. सदाज्ञानसंस्था ख० ।
४. मोदा क० ।
५. पूर्णं ख० ।
६. भाविनीति क० ।
७. भवानन्द ख० ।
८. साशश्रयेति क० ।
९. विशेषाभिशोक महाशैववीरा क० ।
महाशेषवीरा ग० ।
१०. श्रयत्वोज्ज्वल क० ।

महापश्चमत्त्वान्महामोदकत्वान्महा-
कौलिकत्वादसञ्चारणत्वात् ।
कुलप्रेमभावक्रियानिश्चलत्वात्
त्वमेका परब्रह्मरूपेण सिद्धा ॥ २८ ॥

वसोःसिद्धिदात्री शिवानन्दकर्त्री[1]
महामैथुनानन्दसम्भेदनत्वात् ।
सुखाश्वासतत्त्वात्तपः प्राणरक्षा
त्वमेका परब्रह्मरूपेण सिद्धा ॥ २९ ॥

गलत्प्रेमभावा कुलज्ञानतत्वात्[2]
प्रिया श्रीकृपात्वं[3]भवाधारमूर्त्तिः ।
महैश्वर्यहेतोर्महाराजकन्या
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ३० ॥

महामोक्षविद्या महानिर्मलत्वात्
प्रभापश्चचूडस्य[4] सिद्धिप्रिया च ।
महानादबिन्दुप्रयासाभिरामा
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ३१ ॥

महाविद्रुमाकारवर्णाभिरामा
कुलाह्लादसूत्रादिसंसाधनत्वात् ।
महद्राज्यविद्याधना[5]संघटत्वात्
त्वमेका पर ब्रह्मरूपेण सिद्धा ॥ ३२ ॥

---

१. निरानन्द क० ।
२. कुलज्ञानतत्त्वमिति क० ।
३. भवाधारमुक्तिः ग० ।
४. महापञ्चभूतस्य ख०
चूत स्येति ग० ।
५. धनैः संचितत्वादिति ख० ।

तवाङ्घ्रिद्वयाम्भोज पूजासुखत्वा-
न्महाकालरूपा स्वयं सर्वविद्या ।
विकारादिसम्बन्धविशेषणत्वात्
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ३१ ॥
शिवत्वं शुभत्वं महाशैलकन्ये
प्रियत्वं परत्वं महापावनत्वम् ।
समाधे हि तत्त्वादनैकान्तिकत्वा-
त्त्वमेका परब्रह्मरूपेण सिद्धा ॥३२ ॥
महाचेतनादेवनादोन[1]नत्वाद-
संख्यामतीनां मनोयोगमुख्या ।
विरोधापहन्त्री रिपुप्राणहन्त्री[2]
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ३३ ॥
चतुर्विंशतिक्रोधतत्त्वानुकूले
वियत्खण्डचन्द्रोज्ज्वले कीलकस्थे[3] ।
सदा मां प्रपातु प्रचण्डार्कवर्णा[4]
त्वमेका पर ब्रह्मरूपेण सिद्धा ॥ ३४ ॥
शुभं कामधेनुस्वरूपं स्वदेहं
सदा दर्शने[5]श्रद्धया चारुवर्णा ।
हिमांशुप्रभाकोटिवर्णोऽ[6]त्वपूर्णे
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ३५ ॥

---

१. नादोलन त्वादिति क, संख्यासतीना मिति क० ।
महच्चेतनादानकात्वमेकाह्य संख्यामतीनां मनोयोग मुखेनति ख० ।
२. रिपुपापाहत्या(हन्या) क० ।
३. वियत्खण्डचण्डाकुले कीलसंस्थेति ग० ।
४. प्रधानार्कवर्णेति ग० ।
५. सदानन्ददा ग० ।
६. वर्णात्वपूर्णे क० वर्णाह्यपूर्णा ख० ।

महाकामबीजान्विता खण्डयन्ती
महादोषजालं शनैरावहन्ती ।
शिवाभद्रकाली स्थिरानन्दमाला
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ३६ ॥

महाकालकूटाशिनं तीक्ष्णनेत्रं
सदा पाहि शम्भुं भयाद्रीतिवेलम् ।
भवापालनत्वादसंख्यानिवासा
त्वमेका परब्रह्मरूपेण सिद्धा ।

हरन्ती विषाढ्यं[1] वहन्ती कलाद्यं
रटन्ती[2] नटन्ती विशाला भ्रमन्ती ।
श्रियः[3] पालनी पालिका बालिकात्वात्
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ३७ ॥

भवानन्दहेतोः[4] सदा श्रद्धया वा
पदाम्भोजमध्ये मनोयोगकाले ।
परासंख्यते कामसंक्षालनत्वा[5]
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ३८ ॥

क्षितिक्षोभ[6]नाशाय सिद्धादिविद्या
कुलाढ्याखिलाढ्याननासूक्ष्ममध्या[7] ।
प्रयत्नं करोषि क्षयानन्ददाना
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ३९ ॥

---

१. विषान्नमिति ख० विषाद्यमिति ग० ।
२. रटन्ती विलोला भ्रमन्ती जपन्ती ग० ।
३. श्रियः पालिनी पालिके कालिके वा क० ।
४. तवानन्द हेतोरिति ग० ।
५. कामसंख्याननत्वादिति क० ।
६. क्षितिक्षोभनायेति क० सिद्धयादि विद्येति च क० ।
७. शिलामध्यमध्येति क० ।

महाधैर्यमाहत्यजं जप्यते यैस्त-
वाद्याभिधानानि कालिप्रभाते ।
तदैवापि काले ददासीह सिद्धिं
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ४० ॥
चिरं स्थापयन्ती चिरंभासयन्ती[१]
त्वमाख्या गुरूणां [२]कुलानन्दविद्ये ।
[३]स्वधाकारतुष्टा कलावह्निजाया
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ४१ ॥
सुरानन्दकाले फलोद्भूतचिह्ना
चितामध्यदेशे महासिद्धिदात्रि ।
त्रिभि[४]र्नाविभिन्नामहारुद्रविद्ये
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ४२ ॥
[५]महापूर्वि कात्यायनि क्रोधमूले
विवेकादिकं धर्ममादौ ददासि ।
त्रयाणां सुराणां मुदारक्षणाय
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ४३ ॥
विशुद्धस्फुटत्वान्महाकौतुकत्वा-
त्तनुध्यान[६]मोहादनन्ते[७] कृतत्त्वात् ।
[८]कुलारक्षणात्मा महालक्षणात्मा
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ४४ ॥

---

१. भावयन्ती ग० ।
२. गुणानन्दविधे क० ।
३. सुधाकामतुष्टेति क० ।
४. त्रिभिन्नाधिभिन्ना ग० ।
५. महापुष्टि······क० ।
६. ध्यालसत्वात् क० ।
७. असन्तैकतत्त्वात् क० ।
८. कुलारक्षणत्वात्, महालक्षणत्वात् क० ।

दहन्ती रिपूणां [1]कुलश्चात्मदेशं
[2]क्षणादेव सूक्ष्मासुसूक्ष्मा सती सा ।
ममानन्ददेशं सदा पालय श्री[3]
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ४५ ॥
चतुर्थाश्रमस्थाश्रमं पाहि रुद्रे
महोग्रप्रतापे महारौद्रि भद्रे ।
महापातकादिक्षयत्त्वा[4]मृतत्त्वा-
त्त्वमेका परब्रह्मरूपेण सिद्धा ॥ ४६ ॥
[5]महावायुरम्ये महाज्ञानगम्ये
[6]महामन्त्रजाप्यादिसिद्धिप्रसिद्धे ।
[7]लयं देहि बाह्यानिलाघातनत्त्वा-
त्त्वमेका परब्रह्मरूपेण सिद्धा ॥ ४७ ॥
न जानामि किं वामरो वापि विष्णु-
र्महाकौलिको वा न जानाति पूजाम् ।
[8]कुलाद्यासनन्ते सुरेन्द्रादिपाठे
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ४८ ॥
[9]मदीयं प्रलोभ्यं महाभद्रकालि
प्रकाशेन कर्त्तुं समर्था भव त्वम् ।

---

१. कुलच्छन्नदेशं ग० ।
२. सदाज्ञानगभ्याखिलानां जनानां ख० कुलच्छन्नदेशं कुलं देवसूक्ष्मा मतीनां ग० ।
३. पालयश्रीस्त्वमेका ख० ।
४. क्षयत्वानृतत्त्वं क० ।
५. महावायुवश्ये महाज्ञानवश्ये ग० ।
६. तन्त्र ग० ।
७. नयं क० ।
८. कुल सेवनान्तस्तवेन्द्रादिपाठं ग० ।
९. यदीयं प्रलोभं······प्रकर्षेण कर्त्तुं क० ।

पदाब्जे च [1]हन्तुं महापापसर्गे
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ४९ ॥

वहन्ती कपालं स्खलन्तीमपार्थं
महाहेममाला [2]महाकाशयन्ती ।
[3]शिवो मङ्गलं मे तु वैश्वानरीशे
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ५० ॥

प्रचण्डा प्रसन्ना भवक्षोभहेतो-
र्विवादादिघाताय शान्तिः प्रतुष्टिः ।
कियत्कालसंस्था प्रसन्नान्तरात्मा
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ५१ ॥

[4]महावायुपाना क्रियामोक्षकाले
कुलज्ञान[5]दाना दिवा रूपिणी त्वम् ।
प्रभुत्वं विधेहि[6] त्वमे कामकर्त्री
त्वमेका परब्रह्मरूपेण सिद्धा ॥ ५२ ॥

यदि श्रीवराद्ये ममाख्या[7]ससिद्धिं
विदेही[8]ति चित्ते समाधाय भक्तः ।

---

१. हत्तुं इति क० ।

२. मनाकालयन्ती क० मलाकाशपात्री ख० ।

३. शिरोऽसत्त्व वैश्यानरीशे ग० शिवास्वरूपाच वैश्यानरीशे ।

४. दानक्रिया मोक्षकाले ।

५. कुलज्ञानदानार्थिनी त्वं ग० ।

६. विदेहि ।

७. अभ्याससिद्धिं क० ।

८. विदेहापि चित्ते क० ।

समाप्नोति शीघ्रं सदा प्रार्थ्यते
यैः[1]सदा पठ्यते[2]वा मुदा वारमेकम् ॥ ५३ ॥

महाकालशम्भो महाज्ञानसिद्धः
सदा[3] कालवश्ये[4] पठेदेकचित्तः ।
महाभक्तिभावं [5]लभेत् वेदमुक्तिं
महादेवभक्तिं त्रिकालेन योगम् ॥ ५४ ॥

मणेः पीठमध्ये महा[6]रुद्रकान्तां
महालाकिनीं कुण्डलीं[7] भावयन्ति ।
[8]महापुण्यलाभं[9] स्तवं ब्रह्मसारं
मनाकान्तलाभाय पुण्याय सिद्धयै ॥ ५५ ॥

महाकालि रुद्राणि भद्राणि कृष्णे[10]
भवानन्दमूर्त्तिप्रकाशाय कुर्यात् ।
किलानन्दमाकृत्य सम्पूज्यते-
यैर्महादेवि चण्डे तव ध्याननिष्ठा[11] ॥ ५६ ॥

---

१. वै क० ।
२. पाठ्यते
३. यदा क० ।
४. कालवश्यः ख० ।
५. लभस्वाढ्यभक्तिं ख० ।
लभस्वेदमुक्तिं ग० ।
६. महाब्रह्मकान्तां ग० ।
७. कुण्डलं ।
८. महापुण्यभावं क० ।
९. पूज्ये ख० अधिक पाठः ।
१०. निष्ठः ग० ।
११. स एको महाकालरूपी क्षितौ स्यात् ख० ।
स एको महाकालरूपी ग० ।

महामोक्षभावं समाप्नोति शीघ्रं
महाशुद्धता कामहा कालरूपी[1] ॥ ५७ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे षट्चक्र-
प्रकाशे मणिपूरभेदनक्रमे भैरवीभैरवसंवादे रुद्रशक्तिलाकिनी-
स्तोत्रं नाम [2]षट्चत्त्वारिंशः पटलः ॥



१. सप्तचत्वारिंशत्तमः पटलः ग० ।

२. प्रकाशाय पङ्केरूहातां जनास्ते महायोगिनो भूतनाथा भवन्ति क० अधिकः पाठः ।

# सप्तचत्त्वारिंशः पटलः

श्री आनन्दभैरवी-उवाच—

शृणु कैलासनाथाब्ज[1] चक्रमण्डलसंस्थितिम् ।
षट्चक्रभेदमाहात्म्यं सावधानावधारय ॥ १ ॥
अप्रकाश्यमिदं यन्त्रं[2] मणिपूरविभेदनम् ।
अष्टैश्वर्यसाधनाय जीवन्मुक्ति[3]प्रदाय च ॥ २ ॥
कथयामि महाकाल यज्ज्ञात्वा योगिनोऽमराः ।
क्रियासाधनमात्रेण केन योगिन एव हि ॥ ३ ॥
साधनादेव सर्वज्ञः सर्वार्थज्ञानवान् भवेत् ।
रुद्राणीसहितं रुद्रं ध्यात्वा सम्पूज्य सञ्जपेत् ॥ ४ ॥
अथ वक्ष्ये महामन्त्रं पूजाप्रकरणं तथा ।
मणिपूरे स्थितो मन्त्री रुद्राणी यजनं चरेत् ॥ ५ ॥
[4]सम्प्रतिमन्त्रस्योद्धारं करोमि कालकूटप ।
प्रणवं पूर्वमुच्चार्य नमः शब्दं ततो वदेत् ॥ ६ ॥
ते शब्दान्ते समुद्धृत्य रुद्रशब्दं ततः परम् ।
[5]रूपिण्यै पदमुच्चार्य रुद्राणीमन्त्रमीरितम् ॥ ७ ॥

---

१. नाथाद्य ख० ।
२. वक्तुं क० मन्त्रं ख० ।
३. प्रियाय क० ।
४. दम्पत्यो मन्त्रमुद्धारम् ख० ।
सम्पात्यामन्त्रमुद्धारम् ख० ।
५. रूपिणे ख० ।

ततो महारुद्रमन्त्रं वक्ष्यामि तत्त्वतः शृणु ।
प्रणवान्ते नमः [1]शब्दं तेमहाशब्दमुच्चरेत् ॥ ८ ॥
रुद्राय [2]पदमुद्धृत्य महारुद्रमनुःस्मृतः ।
[3]ततोऽन्यत्कालरूपेश रुद्राणी मन्त्रमाशृणु ॥ ९ ॥
डादिफान्तैः सर्ववर्णैराद्यन्ते पुटितं मनोः ।
सर्वशेषे वलिजाया महामन्त्रोत्तमोत्तमः ॥ १० ॥
अस्य जापनमात्रेण षट्पद्म[4]साधने जयी ।
एवं प्रकारं रुद्रस्य चाथवान्यप्रकारकम् ॥ ११ ॥
रुद्राणां विविधं मन्त्रं कोटितन्त्रे विनिर्णयम् ।
मणिपूरे सदा ध्यायेद् योगसाधनहेतुना ॥ १२ ॥
सर्वत्र मानसं कार्यं ध्यानपूजाविधानकम् ।
प्रमोदाख्यातिमनुभिर्मृत्युञ्जयादिभिस्तथा ॥ १३ ॥
चैतन्यं कारयेत् शीघ्रं मणिपूरस्थदेवयोः ।
[5]अथ वक्ष्ये महेशस्य [6]रुद्रस्य परमात्मनः ॥ १४ ॥
प्रासादाख्यं महामन्त्रं त्रैलोक्यफलसिद्धिदम् ।
सान्तमोङ्कार[7]संयुक्तं नादबिन्दुविभूषितम् ॥ १५ ॥
प्रासादाख्ये मनुः प्रोक्तो भजतां कामदो [8]मणिः ।
प्रणवं पूर्वमुच्चार्य स्वाहान्तं जपते यदि ॥ १६ ॥

---

१. शब्दः ग० ।
२. मुचार्य क० ।
३. अन्य ग० ।
४. जापने ग० ।
५. तत्त्वं ग० ।
६. परमात्मानमीश्वरम् ग० ।
७. हान्तमोकार क० ।
सान्तमोकार ग० ।
८. मनु क० ।

स्तम्भनादीनि कर्माणि स करोति न संशयः ।
अथवा मृत्युजेतारं महामन्त्रं [1]महामनुम् ॥ १७ ॥
जपेन्मानसजापेन[2] यत्नाप्यं प्राणरक्षकम् ।
तारं स्थिरा[3] सकर्णेन्दुर्भृगुः सर्गसमन्वितः ॥ १८ ॥
त्र्यक्षरात्मा निगदितो मन्त्रो मृत्युञ्जयात्मकः ।
अथवान्यप्रकारेण जपेन्मृत्युञ्जयात्मकम् ॥ १९ ॥
मृत्युञ्जयं समुद्धृत्य पालय द्वितयं ततः ।
मृत्युञ्जयं समुद्धृत्य पुनरेव[4] विलोमतः ॥ २० ॥
द्वादशाक्षरमन्त्रोऽयं मृत्युञ्जयाभिधोऽपरः ।
ध्यानं (पूजां) न्यासं तथा शृणु वक्ष्यामि शंकर ॥ २१ ॥
रुद्रमन्त्रेण पुटितं योजयेन्मृत्युहारणम् ।
तथा हि रुद्रकान्ताया मन्त्रेण पुटितं शिवम् ॥ २२ ॥
जपित्वा पूजयित्वा च नरो गोप्ता भवेद्वशी ।
प्रातः कृत्यादिकं कृत्वा हविष्याशी जितेन्द्रियः ॥ २३ ॥
अतिसावधानपरो[5] विधिसेवापरायणः ।
स्नानसन्ध्यादिकं कृत्वा आसनादिकमाश्रयेत् ॥ २४ ॥
समाप्य आसनं सर्वं पीतवस्त्रे पिधाय च ।
अथवा शुक्लवस्त्रे द्वे परिधाय मनोहरे ॥ २५ ॥
कोमलाद्यासने गत्वा प्रक्षाल्यपादयुग्मकम् ।
द्विराचम्य विधानेन पूजायां स्वस्तिकासने ॥ २६ ॥

---

१. मुनिः क० ।
मणिः ग० ।
२. जपन् क० ।
३. स्थिराम् क० ।
४. एवम् क० ।
५. सावधानपरो भूत्वा क. ।

वीरासने तथा पद्मासनयोन्यासने तथा ।
उपविश्य निर्मलात्मा पूजामार्गपरो भवेत् ॥ २७ ॥
सर्वाणि द्रव्यभोज्यानि मनसा कल्पितानि च ।
तदलाभे सलाभे वा मनःकल्पितशोधनम् ॥ २८ ॥
करणीयं सर्वदैव निजवाह्येऽपि[1] चालयेत् ।
यथा लभ्यानि द्रव्याणि संशोध्य[2] तत्र योजयेत् ॥ २९ ॥
ततः कुर्याद्विशेषेण प्राणायामं मनोरमम् ।
चतुःषष्टिमात्रया वा तथा षोडशमात्रया ॥ ३० ॥
तद्द्वादशमात्रया वा संख्यया[3] वायुमाश्रयेत् ।
प्राणायामं समाप्याथ रुद्रन्यासं समाचरेत् ॥ ३१ ॥
श्रीकण्ठादिमहावीरन्यासं कुर्यात् प्रयत्नतः ।
रुद्रन्यासं प्रवक्ष्यामि [4]मनुयोगादिसिद्धये ॥ ३२ ॥
एतन्न्यासाभिकरणे नरो रुद्रसमो भवेत् ।
सदा कुर्यान्महान्यासं सर्वसिद्धिप्रकाशनात् ॥ ३३ ॥
शक्तिहीनं शक्तियुक्तं महान्यासं प्रकीर्तितम् ।
शक्तियुक्तं समाकृत्य महाशक्तो भवेद्वली ॥ ३४ ॥
शक्तिहीनं तथा कार्यं सर्वविघ्नविनाशनात् ।
मातृकापद्मचक्रे तु मातृका[5]वर्गसंयुतम् ॥ ३५ ॥
मातृकापुटितं मन्त्रं किं वा मन्त्रेण संपुटम् ।
कृत्वा मन्त्री न्यासजालं सावधानेन कारयेत् ॥ ३६ ॥

---

१. स्वाजे राजे वा क० ।
२. सन्तोष्य ग० ।
३. संख्यया क० ।
४. महा क० ।
५. वर्ण चक्रे ग० ।

विक्रमी सिंहतुल्यः स्यात्तं दृष्ट्वा यान्ति शत्रवः ।
मौनी भूत्वा समाकृत्य कुलचक्रस्य भेदनम्[1] ॥ ३७ ॥
मणिपूरे स्थिरो[2] भूत्वा महातेजोमयो भवेत् ।
तेषां नाम प्रवक्ष्यामि पञ्चाशदेकसंख्यया ॥ ३८ ॥
पञ्चाशदेकशक्तीनां तथा नाम शृणु प्रभो ।
[3]सर्वेषामभिधानान्ते ईशाय नम उच्चरेत् ॥ ३९ ॥
एकैकं मातृकावर्णं नाम्न आद्ये नियोजयेत् ।
शक्तियुक्तं [4]सदा नाम ईशान्तं सन्त्यजे तथा ॥ ४० ॥
भेदने शक्तियुक्तस्तु न्यासं कुर्यान्महायतिः ।
कुशासने सिद्धिहेतोश्चैलाजिनकुशोत्तरम् ॥ ४१ ॥
बद्ध्वैकमासनं योगी न्यासजालं समाचरेत् ।
अथवा द्वीपिचर्मादि कोमलाद्यासनेऽपि वा ॥ ४२ ॥
योगाभ्यासी न्यासजालं कृत्वा [5]सावमयो भवेत् ।
भद्रकाली गृहे स्थित्वा ये कुर्वन्ति निरन्तरम् ॥ ४३ ॥
महान्यासं महादेव तत्क्षणादमरो भवेत् ।
आयुरारोग्यसम्पत्तिं [6]सम्प्राप्नोति महाश्रियम् ॥ ४४ ॥
समायाति मम स्थाने न्यासयोगप्रसादतः ।
न्यासधारणयोगेन मणिपूरे [7]हृदो भवेत् ॥ ४५ ॥

---

१. भेदनात् क० ।
२. स्थितो ग० ।
३. अभिधानार्यम् ख० ।
अभिधानन्तु ग० ।
४. यदा..........तदा ग० ।
५. सारमयो ग० ।
६. समाप्नोति क० ।
७. अपि भो ग० ।

आदौ [1]तन्नाम वक्तव्यं पश्चात् [2]शक्त्याभिधानकम् ।
श्रीकण्ठश्चाप्यनन्तश्च सूक्ष्मा त्रिमूर्तिरेव च ॥ ४६ ॥
अमरेश्वरश्चार्धीशो भावभूतिस्ततः [3]परम् ।
अतिथीशस्थानुकेशो हरो झिण्टीश[4] एव च ॥ ४७ ॥
भौतिकः सद्योजातश्चाप्यनुग्रहेश्वरस्तथा ।
अक्रूरोऽपि महासेनो [5]निर्जरादिश्चषोडश ॥ ४८ ॥
एते देवा महारुद्र षोडशस्वरविग्रहाः ।
क्रोधीशश्चापि चण्डेशः पश्चान्तकः शिवोत्तमः ॥ ४९ ॥
एकरुद्रस्तथा कूर्म [6]एकनेत्रेश्वरस्ततः ।
चतुराननोऽजेशश्च सर्वः सोमेश एव च ॥ ५० ॥
[7]लाङ्गलीशो दारुकेशोऽर्द्धनारीश्वर एव च ।
वाणीशश्च भुजङ्गेशः पिनाकीशस्ततः परम् ॥ ५१ ॥
खड्गीश[8]श्चरकेशश्च श्येनो भृग्वीश एव च ।
नकुलीशः शिवेशश्च संवर्त्तकेश एव च ॥ ५२ ॥
एते रुद्राः समाख्याताः सर्वकाले [9]कुलेश्वराः ।
यस्य नाम्नश्चान्तभाते ईशशब्दो न विद्यते ॥ ५३ ॥

---

१. तत्त्वान्तम् ग० ।

२. यथा ख० । अधि पाठः ।

३. तथा परः क० ।

४. कोटीश क० ।

५. निजस्वरादि षोडशः क० ।

६. तथा क० ।

७. उमाकान्तेश आषाढिः डिण्डीशोऽत्रीश एव च । मीनेशश्चापि मेषेशो लोहितेशः शिखीश्वरः छगलण्डे द्विरण्डेशो महाकालेश्वरस्ततः अधि पाठः क० ।

८. खड्गीशः सुरकेश ग० ।

९. कुलेश्वर ग० ।

केशान्तं नाम संस्कृत्य न्यासं मौलीशमाचरेत् ।
कामं मोहादिनाशार्थं यः करोति निरन्तरम् ॥
मातृकावर्णघटितं मातृकास्थलके न्यसेत् ।
[1]शक्तियुक्तं यदा न्यासं तत्कालेऽपीशयोजनम् ।
अथवा रुद्रशक्त्या[2] च तथा रुद्रेण सम्पुटम् ॥ ५४ ॥

निजमन्त्रेण वा नाथ पुटितं मातृकास्थले ।
शक्त्या च [3]ग्रथनं कृत्वा संसारं सन्तरेत् क्षणात् ॥ ५५ ॥

तत्प्रकारं शृणु प्राणनाथशङ्कर वल्लभ ।
पूर्णोदरी च गिरिजा शाल्मली तदनन्तरम् ॥ ५६ ॥

लोलाक्षी वर्त्तुलाक्षी च दीर्घघोणा ततः परम् ।
सुदीर्घमुखि[4]गोमुख्यौ दीर्घजिह्वा ततः परम् ॥ ५७ ॥

कुण्डोदरी चोर्द्ध्वमुखी तथा विकृतमुख्यपि ।
ज्वालामुखी वह्निमुखी[5] लोलजिह्वा ततः परम् ॥ ५८ ॥

विद्यामुखी तथा नाश एताश्च स्वरशक्तयः ।
काद्यार्णशक्तिविद्याश्च वक्ष्यामि पार्वतीश्वर ॥ ५९ ॥

महाकालीसरस्वत्योर्महालक्ष्म्यास्ततः परम् ।
द्राविणी नागरी भूयः खेचरी चापि मञ्जरी ॥ ६१ ॥

रूपिणी विम्बिनी[6] पश्चात् काकोदरी च पूतना ।
भद्रकाली योगिनी च शङ्खिनी गर्ज्जिनी तथा ॥ ६२ ॥

---

१. यदान्यासं प्रकुर्वीत ग० ।

२. रुद्रशक्त्या चेति ग० ।

३. प्रथममिति ग० ।

४. सुदीर्घमुखी गोमुख्या ग० ।

५ चोल्कामुखी सुश्रीमुखी ततः परम् क० ।

६. विरली ख० ।

कालरात्रिः कुब्जिका च कपर्दिनी ततः परम् ।
वज्रा जया [1]ततो नाथ सुमुखेश्वर्यपि प्रभो ॥ ६३ ॥
रेवती माधवी चैव वारुणी वायवी तथा ।
वक्षोविदारिणी चैव सुमहालक्ष्म्यथ प्रभो ॥ ६४ ॥
व्यापिनी चैव माया च रुद्राङ्कपीठदेवताः ।
सर्वाभरणसंयुक्ता सिन्दूरारुणविग्रहाः ॥ ६५ ॥
धृतशूलकपालादि[2] वाणशक्तिप्रखेटकाः ।
वराभयकरा नित्याः सर्ववाहनवाहनाः[3] ॥ ६६ ॥
श्रीकण्ठाद्या[4] महारुद्रा धृतशूलकपालकाः ।
खड्गखेटकशक्तीषुगदामूसलधारकाः ॥ ६७ ॥
नानास्त्रधारका नित्या बन्धूककोटिसुन्दराः ।
रक्तचन्दनदिग्धांगाः पञ्चचूडधराः पराः ॥ ६८ ॥
रक्तोत्पलमहामाला[5]लङ्कारकरपंकजाः ।
पीठन्यासं ततः कुर्यात् मम तन्त्रानुसारतः ॥ ६९ ॥
सर्वत्रमूलपुटितमथवा वर्णसम्पुटम् ।
कृत्वा पीठन्यासकार्यं विधानेन वदामि तत् ॥ ७० ॥
ॐ [6]अनन्ताय नमश्च नमो हृदि ततः परम् ।
ॐ पद्माय नमः शब्दं हृदये च ततः परम् ॥ ७१ ॥
ॐ सूर्यमण्डलाय [7]द्वादशान्ते कलात्मने...... ।
ॐ नमः पदं समुच्चार्य चान्ते च हृदये प्रभो ॥ ७२ ॥

---

१. तथा क० ।
२. कपालासि क० ।
३. सर्वस्ववाहनाः ग० ।
४. कण्ठास्या ग० ।
५. माला क. ।
६. अं श्रं न्यन्ताय ग० ।
७. द्वादशकलात्मने तत ग० ।

ॐ उं सोममण्डलाय षोडशकलात्मने नमः ।
सर्वत्र हृदये कार्यं पीठन्यासं मनोलयम् ॥ ७३ ॥
ॐ मं वह्निमण्डलाय दशकलात्मने नमः ।
ॐ सं सत्त्वाय नमश्च ॐ रं रजसे नमः ॥ ७४ ॥
ॐ तं तमसे नमश्च पूर्वादिकेशरेषु च ।
ॐ [1]तं आत्मने नमश्च ॐ सर्वव्यापिने नमः ॥ ७५ ॥
ॐ [2]अं अन्तरात्मने च ॐ मनोन्मन्यै नमश्च ।
तदुपरि ततो वदेत् नमोऽन्ते शून्यवासिने ॥ ७६ ॥
ॐ [3]पं परमात्मने च नमोऽन्ते कालरूपिणे ।
ॐ ह्रीं ज्ञानात्मने चान्ते नमोऽन्ते वर्णवासिने ॥ ७७ ॥
पीठशक्तेस्ततो न्यासं कुर्यात् साधकयोगिराट् ।
हृत्पद्मस्यापि पूर्वादि केशरेषु च संन्यसेत् ॥ ७८ ॥
ॐ वामायै नमश्चान्ते ॐ ज्येष्ठायै[4] नमो वदेत् ।
ॐ सर्वभूतदमन्यै[5] नमः शब्दं समुच्चरेत् ॥ ७९ ॥
एता विन्यस्य देवेश मध्ये विन्यासमाचरेत् ।
हृत्पद्मस्य कर्णिकायां कृत्वा भावनमाचरेत् ॥ ८० ॥
ॐ मनोन्मन्यै नमश्च तदुपरि ततो वदेत् ।
ॐ नमो भगवतेऽन्ते च सकलपदमुच्चरेत् ।
गुणाय[6] शक्तियुक्ताय अनन्ताय पदन्ततः ॥ ८१ ॥

---

१. आम् क० ।

२. आम् क० ।

३. पं० नास्ति ग० ।

४. नमः शब्दं पुनर्वदेदिति ग० ।

५. ॐ रौद्रायै नमश्चान्ते ॐ काल्यै च नमोवदेत् क० ।
ॐ कलविकरिण्यै नमः शब्दं ततो वदेत् ।
ॐ बलप्रमथन्यै नमो व भोऽन्ते च पुनर्वदेत् क० अघि० ।

६. गुणार्थं क० ।

[1]कहोडमुनिपुत्रश्च ऋषिरस्य प्रकीर्तितः ।
महेश्वरमुखाज्ज्ञात्वा यः साक्षात्तपसा मनुम् ॥ ८२ ॥
संसाधयति शुद्धात्मा स तस्य ऋषिरीरितः ।
गुरुत्त्वान्मस्तके चास्य न्यासस्तु[2] परिकीर्त्तितः ॥ ८३ ॥
सर्वेषां [3]मन्त्रतत्त्वानां छादनाद् छन्द उच्यते ।
अक्षरत्त्वात्पदत्त्वाच्च मुखेच्छन्दः समीरितम् ॥ ८४ ॥
सर्वेषामेव जन्तूनां प्रेषणात्प्रेरणात्तथा[4] ।
हृदयाम्भोजमध्यस्था देवता [5]तत्र तां न्यसेत् ॥ ८५ ॥
ऋषिच्छन्दोऽपरिज्ञानान्न मन्त्रः फलभाग्भवेत् ।
दौर्बल्यं याति मन्त्राणां विनियोगमजानताम् ॥ ८६ ॥
न्यसेन्मूर्ध्नि ऋषिन्यासं छन्दोन्यासं मुखाम्बुजे ।
देवतान्यासमाकुर्यात् हृदयाम्भोरुहे सुधीः ॥ ८७ ॥
मूके गुह्ये बीजन्यासं शक्तिन्यासन्तु पादयोः ।
सर्वाङ्गे कीलकन्यासमाचरेत्[6] यत्नतः सुधीः ॥ ८८ ॥
शिवशक्त्यात्मकन्यासं [7]शिरस्येव समाचरेत् ।
शिरसि प्राणरक्षायै महाविष्णुऋषये नमः ॥ ८९ ॥
मुखे पंक्तिच्छन्दसे वै नमः शब्दं समुच्चरेत् ।
हृदि महारुद्राय शक्तियुक्ताय सं वदेत् ॥ ९० ॥

---

१. योगपीठात्मने चान्ते नमः शब्दं समुच्चरेत् ।
ततः कुर्यान्महादेव ऋष्यादिन्याहामेन च ।
रुद्रशक्त्या ऋषेर्विष्णुस्तथामृत्युञ्जयस्य च ।
२. समस्तः परिकीर्तित ग० ।
३. सर्वेषां मन्त्रतत्त्वानां छादनाद् वृन्द दव्यते ग० ।
४. भाषणात्प्रबलात्तथा ग० ।
५. देवतातत्त्वतां न्यसेदिति ग० ।
६. कीलकन्यासं शिवन्यासं समाचरेत् क० ।
७. शिवषोढा समाचरेत् क० ।

देवतायै नमः शब्दं करन्यासं ततश्चरेत् ।
ततोऽङ्गन्यासमाकृत्य ध्यानं कुर्यात् प्रयत्नतः ॥ ९१ ॥

वह्निना दीर्घबीजेन यन्त्रस्याङ्गक्रियां चरेत् ।
रुद्रध्यानं प्रवक्ष्यामि ध्यानाद् भवति भूपतिः ।
रौद्रं रौद्रात्मकं तं प्रकृतिपुरुषं गंभीरगीताभिधानं ।
शूलं खड्गं दधानं वरमभयकरं पद्ममेकं प्रचण्डम् ।
सञ्चारं रश्मिजालं शशिशतकिरणं कामधेनुस्वरूपम् ।
ध्यायेद्रौद्रीं स्वशक्तिं [1]प्रलयभयतनुं सूर्यकोटिप्रकाशम् ॥ ९२ ॥

एवं ध्यात्वा [2]सुमनसैश्च सम्पूज्यार्घ्यविधिश्चरेत् ।
कृत्वार्घ्यं रुद्रमन्त्रेण पीठपूजां समाचरेत् ॥ ९३ ॥

वामा ज्येष्ठा तथा रौद्री काली[3]कालपदादिका ।
[4]विकरण्याक्षरा प्रोक्ता बलादिविकरण्यथ ॥ ९४ ॥

बलप्रमथनी पश्चात् सर्वभूतदमन्यथ ।
[5]मनोन्मनीति सम्प्रोक्ताः शिवस्य पीठशक्तयः ॥ ९५ ॥

[6]पूजयेद् गन्धपुष्पाद्यैः पीठशक्तीः क्रमेण तु ।
प्रणवादि नमोऽन्तेन पूजा कार्या विधानतः ॥ ९६ ॥

पुनर्ध्यात्वा च पाद्यार्घ्यैरावाह्य परिपूजयेत् ।
पाद्यमर्घ्यमाचमनीयं स्नानीयं पुनराचमनम् ॥ ९७ ॥

गन्धपुष्पबिल्वदलैः पूर्वावरणमर्चयेत् ।
[7]वं हृदयाय नम इत्यादिषडंगपूजनम्[8] ॥ ९८ ॥

---

१. प्रणय ग० ।  २. मानसैश्चेति ग० ।

३. कलपदादिका ग० ।

४. विकरण्यान्तया प्रोक्तावलादिविकरण्यथा क० ।

५. मन्मयीति स······क० ।

६. पूजयेन्नन्दपुष्टाद्यैरिति ख० । पूजयेन्नन्दपुष्पाद्यैरिति ग० ।

७. वां क० ।  ८. पूजम्बरेदिति क० ।

मध्ये चतुर्दिक्षु चैवं शेषे वारद्वयं [1]वदेत् ।
इन्द्रादीन् लोकपालांश्च पूजयित्वा ततोऽर्चयेत् ॥ ९९ ॥
वज्रादींश्च महाकालधूपदीपैर्निवेदयेत् ।
नैवेद्यं [2]बहु कृत्वा पानार्थं जलदानकम् ॥ १०० ॥
शरीरशोधनं कृत्वा प्राणायामं ततश्चरेत् ।
जपेत् शतत्रयं मन्त्री विशुद्धः शुद्धचेतसा ॥ १०१ ॥
अष्टोत्तरं योजयित्वा गजान्तकसहस्रकम् ।
अथवाष्टोत्तरशतं जप्त्वा समर्पणं चरेत् ॥ १०२ ॥
प्राणायामत्रयं कुर्यान्निजमन्त्र[3]प्रसिद्धये ।
ततः प्रणाममाकुर्यात् शक्तिचैतन्यहेतुना ॥ १०३ ॥
नमो रुद्राय देवाय कोटिसूर्येन्दुमूर्त्तये ।
सर्वाय ज्ञानदानाय नमस्ते शूलधारिणे ॥ १०४ ॥
नमस्ते कालरुद्राय कालाय वेदरूपिणे ।
[4]वेदमार्गप्रदर्शाय शत्रुसंक्षयकारिणे ॥ १०५ ॥
[5]रौद्राय शक्तियुक्ताय शंकराय नमो नमः ।
चतुर्भुजाय वेदाय महाकाशस्वरूपिणे ॥ १०६ ॥
वरपद्मशूलखड्गधारिणे [6]ब्रह्मणे नमः······ ।
रुद्रशक्त्यर्चनं कृत्वा महारुद्रेण संयुतम् ॥ १०७ ॥
मणिपूरे दृढो[7] याति सत्यं सत्यं कुलेश्वर ।
शक्त्यर्चनविधिं वक्ष्ये मूलमन्त्रेण पूजनम् ॥ १०८ ॥

---

१. भवेदिति क० ।
२, वन्दनमिति ग० ।
३. द्रवृद्धये क० ।
४. प्राज्ञनायेति क० ।
५. विद्रायेति ग० ।
६. धारिणेयनमोनमः ग० ।
७. दृढा क० ।

सर्वत्र कारयेन्मन्त्री अष्टैश्वर्यजयाय च ।
आदौ ऋषिन्यासकार्यं वक्ष्यामि शृणु तत्त्वतः ॥ १०९ ॥
शिरसीहरुद्रशक्तिर्महाविष्णुपदन्ततः ।
ऋषये नम उच्चार्य मुखे हस्तं नियोजयेत् ॥ ११० ॥
पंक्तिछन्दसे नमश्च हृदि हस्तं नियोजयेत् ।
महारुद्राणीति पदं लाकिनीपदमेव च ॥ १११ ॥
त्रिशक्त्यन्ते महाविद्या देवतायै नमस्ततः ।
गुह्ये ॐ पदमुच्चार्य निजबीजाय ते नमः ॥ ११२ ॥
सर्वाङ्गे सकलायैव वज्राय कीलकाय च ।
नमः पदं समुच्चार्य ऋष्यादिन्यासमेव च ॥ ११३ ॥
रुद्रवत्सकलं कार्यं कराङ्गन्यासकर्मणि ।
[1]आदावृष्यादिकन्यासः करशुद्धिस्ततः परम् ॥ ११४ ॥
अङ्गुलिव्यापकन्यासो हृदादिन्यास एव च ।
रुद्रशक्तिमहापोढान्यासश्च तदनन्तरम् ॥ ११५ ॥
मन्त्रन्यासं ततः कृत्वा व्यापकन्यासमाचरेत् ।
तालत्रयश्च दिग्बन्धः प्राणायामस्ततः परम् ॥ ११६ ॥
ध्यानं कुर्याद्विशेषेण रुद्रशक्त्या महाप्रभो ॥ ११७ ॥
रुद्राणीं रुद्रकान्तां नवरसजडितां कुंकुमाशक्तगात्रां
लोकेशीं षड्भुजान्तां [2]त्रिभुवनयजितां कोटिसौदामिनीभाम् ।
पद्मस्थां पद्महस्तां वरभयकरां खड्गशक्तिं दधानां
ध्यायेद् रौद्रीं [3]त्रिनेत्रां शवदमनशशिश्रेणिभूषामलाङ्गीम्[4] ॥११८॥

---

१. आदावङ्गादिन्यासः ग० ।

२. महितामिति ख० ।

३. शरदमल क० ।

४. अनङ्गामिति क० ।

रुद्रवत् पूजनं कार्यं रुद्रशक्त्याश्च[1] शंकर ।
दशोपचारैः पूजा वा तथा पञ्चोपचारकैः ॥ ११९ ॥
अष्टादशोपचारैर्वा षोडशाद्युपचारकैः ।
अलाभे तु प्रकर्त्तव्यं मानसेन निवेदयेत् ॥ १२० ॥
सर्वत्र मानसं कार्यं कोटि कोटिगुणं भवेत् ।
पूजां समाप्य विधिना जलं दत्त्वा जपादिके ॥ १२१ ॥
प्राणायामत्रयं कृत्वा जप्त्वाष्टोत्तरकं शतम् ।
सहस्रं वा मुहुर्जप्त्वा अष्टोत्तरसमन्वितम् ॥ १२२ ॥
जपं समर्पयेद्विद्वान् गुह्यातिगुह्यमन्त्रकैः ।
प्राणायामत्रयं पश्चात् कुर्यात् साधकसत्तमः ॥ १२३ ॥
वन्दनं भक्तियुक्तेन कुर्याद् योगादिसिद्धये ।
महारौद्र नमस्तेऽस्तु लाकिन्यै ते नमो नमः ॥ १२४ ॥
शान्त्यै तुष्टयै नमोनित्यं दुर्गायै[2] ते नमो नमः ।
रुद्रशक्त्यै नमोनित्यं मणिपूरनिवासिनी ॥ १२५ ॥
अष्टसिद्धिं योगसिद्धिं [3]देहि तुभ्यं नमो नमः ।
सर्वग्रन्थिछेदिकायै परब्रह्मस्वरूपिणी[4] ॥ १२६ ॥
मां रक्ष पालय त्वं हि मणिपूरे नमो नमः ।
प्रणम्य विधिनानेन पूजासमापनश्चरेत् ॥ १२७ ॥
पुनस्तत्र पूजयेद् वै प्रासादाख्यं महाप्रभुम् ।
तथा मृत्युञ्जयं देवं मणिपूरे प्रपूजयेत् ॥ १२८ ॥

---

१. रुद्रशक्त्या चेति ख० ।
२. श्रद्धायै इति ख० ।
३. तस्यै इति ख० ।
४. स्वरूपिणी ।

प्राणायामादिकं कृत्वा श्रीकण्ठन्यासमाचरेत् ।
[1]पूर्णोदर्योदिसहितं कृत्वा पीठं न्यसेत्सुधीः ॥ १२९ ॥

पीठमन्तुं प्रविन्यस्य ऋष्यादिन्यासमाचरेत् ।
ऋषिरस्य [2]वासुदेवः पङ्क्तिश्छन्द उदाहृतम् ॥ १३० ॥

सदाशिवो देवता च अङ्गुलिन्यासमाचरेत् ।
हामङ्गुष्ठाभ्यां नमः पश्चात् ह्रींतर्जनीभ्यां[3] ततः परम् ॥
खां नमः पदमन्ते च षड्दीर्घभाजयान्वितम् ॥
एवं करन्यासमाकार्यं विधानेन समाचरेत् ।
शूद्रस्तु एतत्पर्यन्तं कार्यं होमादिकं च यत् ॥ १३१ ॥

न कुर्यात् पार्वतीनाथ तथा [4]स्त्रीलोक इत्यपि ।
यदि ज्ञानी भवेद्देव स देवो न तु मानुषः ॥ १३२ ॥

चाण्डालादीनि वा जातौ [5]स्थितो ब्राह्मणोत्तमः ।
ज्ञानवान् [6]वादसंवादे वर्जितो न्यासमाचरेत् ॥ १३३ ॥

न्यासस्तन्मयता बुद्धिः सोऽहंभावेन पूजयेत् ।
स एव ज्ञानी परमो वेदशास्त्रविशारदः ॥ १३४ ॥
न्यासपूजादिकं तस्य सर्वदा नात्र संशयः ।
यावद्देहे ह्यहंबुद्धिस्तावन्मरणधारकः[7] ॥ १३५ ॥

---

१. पूर्णादिव्यादिसहित मिति ख० ।

२. वामदेव ख० ।

३. तर्जनीपदंततः ख० ।

४. तथास्त्रिलोक इत्यपि ख० ।

५. स्थिरोवेति ख० ।

६. रायसंवाद ग० ।

७. धारण ग० ।

तद्वर्जितो [1]मृत्युजेता न्यासपूजादिकं कृतः।
षड्दीर्घभाजा बीजेन [2]हकारेण सबिन्दुना ॥ १३६ ॥
[3]करयोरंगुलिद्वन्द्वं विन्यसेत् संक्रमेण तु।
ईशानाद्याः पञ्चमूर्त्तीर्विन्यसेत् साधकोत्तमः ॥ १३७ ॥
ततः कुर्यान्महादेव ऊर्द्ध्वः प्राग्दक्षिणोत्तरे।
मुखेषु विन्यसेन्मन्त्री चांगुलिभिः परस्परम् ॥ १३८ ॥
तत्तद्बीजैः प्रयत्नेन तत्तन्मूर्त्तीः प्रविन्यसेत्।
अंगुष्ठयोः शेषभागे हौँ ईशानाय ॐ नमः ॥ १३९ ॥
षड्दीर्घभाजाबीजेन हकारेण सबिन्दुना।
तत्पुरुषमघोरञ्च वामदेवं ततः परम् ॥ १४० ॥
सद्योजातं क्रमेणैव अंगुलो[4] द्वे ततः परम्।
विन्यसेत्साधकश्रेष्ठो नमोऽन्तं परमेश्वर ॥ १४१ ॥
शिरोवदनहृद्गुह्यपादेषु विन्यसेत्सुधीः।
[5]तत्तदंगुलिभिश्चैव तत्क्रमेण प्रविन्यसेत् ॥ १४२ ॥
पञ्चमूर्त्तीर्न्यसेन्नाथ तत्प्रकारं शृणुष्व तत्।
ईशानादिस्वबीजन्तु प्रकारेण प्रविन्यसेत् ॥ १४३ ॥
शूद्रः कुर्यान्न्यासजालमेतत्[6]पर्यन्तमेव हि।
तत ऊर्ध्वप्राग्दक्षिणपश्चिमोत्तरसंमुखे ॥ १४४ ॥
ईशानस्य पञ्चकला ब्रह्मऋग्[7]वेदसंयुता।
पञ्चपादादिका नाथ प्रणवादिनमोऽन्तिकाः ॥ १४५ ॥

---

१. चेता ग०।

२. हः कारेण ख०।

३. दग्ध ख०।

४. अङ्गुलिषु परस्परम्, ग०।

५. एतत्पद्यार्धं ख प्रस्तमे नास्ति।

६. एतत्पद्मान्तमेवहीति ख०।

७. नित्यमृग्वेद संयुताः ख०।

ईशानं सर्वविद्यानां उँ नलिन्यै[1] ततः परम् ।
कलायै नम एवापि सर्वत्रैवं क्रमेण तु ॥ १४६ ॥
ईश्वरः सर्वभूतानां [2]तदङ्गं पदकं ततः ।
दयायै कलायै नमश्चापि ब्रह्मादिपदन्ततः ॥ १४७ ॥
उँ ब्रह्मेष्टदायै चान्ते कलायै नम इत्यपि ।
ततः शिवोऽस्तु[3] मे पदं ॐ सावित्र्यै पदं वदेत् ॥ १४८ ॥
कलायै नम एवं हि सदाशिवो[4] पदन्ततः ।
ओमन्ते चांशु[5]मालिन्यै कलायै पद इत्यपि ॥ १४९ ॥
दिङ्मुखे स न्यसेन्मन्त्री पूर्वादिक्रमयोगतः ।
तत्पुरुषस्य चतस्रः कला न्यसेत् सदा वशी ॥ १५० ॥
ॐ तत्पुरुषायपदं विद्महे तदनन्तरम् ।
ॐ शान्त्यै पदस्यान्ते कलायै नम इत्यपि ॥ १५१ ॥
महादेवाय शब्दान्ते धीमहीति ततः पदम् ।
ॐ विद्यायै पदस्यान्ते कलायै नम इत्यपि ॥ १५२ ॥
तन्नो रुद्रः पदं पश्चात् ॐ प्रतिष्ठायै पदं लिखेत् ।
[6]श्री दुर्गायै कलायै नमश्चाथ प्रचोदयात् ॥ १५३ ॥
ॐ[7] निवृत्त्यै कलायै च नमः पदं समुच्चरेत् ।
ततोऽष्टस्थानमध्ये तु अघोराष्टकला न्यसेत् ॥ १५४ ॥

---

१. शशिन्यै ख० ।

२. ओमङ्गं पदकं ततः ख० ।

३. ततः शिरोमेऽस्तु पदं नमोवीर्ये पदं वदेत् ख० ।
सवित्रे पदं ततः क० ।

४. सदाशिव पदं ततः ख० ।

५. चान्तमालिन्यै ग० ।

६. ॐ कलायैनमः पश्चात् प्रचोदयात् पदंवदेन ख० ।

७. ॐ निवृत्यै ।

[1]हृद्ग्रीवां मध्यगतलं तथा नाभिषु पृष्ठके ।
तथा वक्षसि चाघोरा अष्टौ कलान्सेत् सुधीः ॥ १५५ ॥
[2]अघोरेभ्य उमान्ते वै उमायै पदमुच्चरेत् ।
कलायै नम एवाथ अघोरेभ्यः पदं वदेत् ॥ १५६ ॥
ॐ मोहायै पदस्यान्ते कलायै नम इत्यपि ।
अघोरपदमुच्चार्य क्षमायै शब्दमुच्चरेत् ॥ १५७ ॥
कलायै [3]नम एवाथ घोरतरेभ्य एव च ।
ॐ निद्रायै पदस्यान्ते कलायै नम इत्यपि ॥ १५८ ॥
सर्वतः सर्व ॐ अन्ते व्याधये शब्दमुच्चरेत् ।
कलायै नम एवाथ सर्वेभ्यः पदमुच्चरेत् ॥ १५९ ॥
ॐ मृत्यवे पदस्यान्ते कलायै नम इत्थपि ।
नमस्तेऽस्तु पदस्यान्ते ओम् क्षुधायै पदं वदेत् ॥ १६० ॥
कलायै [4]नम एवाथ रुद्ररूपेऽथ एव च ।
ओम् कृष्णायै पदस्यान्ते कलायै नम इत्मपि ॥ १६१ ॥
वामदेवस्य देवस्य[5] त्रयोदश कला न्यसेत् ।
एतेषु स्थानपद्मेषु तत्प्रकारं शृणु प्रभो ॥ १६२ ॥
गुह्येऽण्ड[6]शेषमध्ये तु उरुयुग्मे ततः पदम् ।
जानुद्वये तथा जंघायुगलेस्फिग्द्वये[7] तथा ॥ १६३ ॥

---

१. हृद्ग्रीवायामं संयुग्मे नाभिकुक्षौ च पृष्ठके ख० ।

२. चिह्नितं श्लोकयुग्मं ख० ।

३. मनसन्एवाघोरतरेभ्य एव चेति ख० ।

४. मनसा एव रुद्र रूपेभ्य एव चेति ख० ।

५. देवेश क० ।

६. गुह्येऽण्डकोशमध्येतु ख० ।

७. स्फीग्द्वय ख० ।

[1]कट्यां पार्श्वयुगे चैव क्रमेण भावको न्यसेत् ।
आदौ प्रणवमुच्चार्य ततो मन्त्रं स्मरेत्सुधीः ॥ १६४ ॥
[2]सद्योजातं प्रपद्यामि ओम् वृद्ध्यै पदमुच्चरेत् ।
कलायै नम एवाथ सद्योजाताय वै नमः ॥ १६५ ॥
[3]ओम् वृद्ध्यै पदकस्यान्ते कलायै नम इत्यपि ।
भवे पदे ततः पश्चाद् ओम् सद्यः पदमुच्चरेत् ॥ १६६ ॥
कलायै नम एवाथ अभवे ओम् ततः परम् ।
ओम् मेधायै पदस्यान्ते कलायै नम उच्यते ॥ १६७ ॥
ततो भजस्व मां शब्दं ओम् प्रज्ञायै पदं वदेत् ।
कलायै नम एवाथ भव ओम् शब्दमुच्चरेत् ॥ १६८ ॥
प्रभायै पदमुच्चार्य कलायै नम इत्यपि ।
तद्भवाय नमः पश्चात् ओम् सुधायै नमस्ततः ॥ १६९ ॥
कलायै नम उच्चार्य न्यसेदष्टौ कलाः प्रभोः[4] ।
[5]ईशानाख्यास्ततो नाथ भक्तः पञ्च ऋचो न्यसेत्॥ १७० ॥
पञ्चांगुलिषु योगेश[6] क्रमशः कामनाशनात् ।
प्रणवं पूर्वमुच्चार्य ततो मन्त्रं स्मरेत्सुधीः ॥ १७१ ॥
ईशानःसर्वाविद्यानां ईश्वरस्तदनन्तरम् ।
उच्चरेत्सर्वभूतानां ब्रह्माधिपतिरित्यपि ॥ १७२ ॥

---

१. कोट्याः ग० ।

२. चिह्नितंपदत्रायं ख पुस्तके नास्ति, किन्तु ॐ वामदेवाय नमः, ॐ वज्रायै ततः परम् । कलायै नम एवाथ अष्टाटा नम इत्यपि, इति पाठभेदेन सह अधिकः पाठः ।

३. ॐ रक्षायै पदस्यान्ते ख० ।

४. प्रभा ग० ।

५. ईशानाद्यास्ततो नाथ क० ।

६. योगेन ख० ।

ब्रह्मणोधिपतिः पश्चात् शिवो मेऽस्तु सदाशिवों ।
प्रणवं पूर्वमुच्चार्य ततस्तत्पुरुषाय च ॥ १७३ ॥
विद्महे पदतः पश्चात् महादेवाय धीमहि ।
ततोरुद्रः पदस्यान्ते प्रचोदयात्पुनर्वदेत् ॥ १७४ ॥
प्रणवं पूर्वमुद्धृत्य ततो मन्त्रं स्मरेत् सुधीः ।
अघोरेभ्योऽथघोरेभ्यो घोरशब्दं समुच्चरेत् ॥ १७५ ॥
घोरतरेभ्य एवान्ते सर्वतः सर्वशब्दकम् ।
सर्वेभ्योऽन्ते नमस्तेस्तु रुद्ररूपेभ्य एव च ॥ १७६ ॥
ततः प्रणवमुच्चार्य मन्त्रं पश्चात् स्मरेद्बुधः ।
वामदोय शब्दान्ते नमो ज्येष्ठायशब्दतः ॥ १७७ ॥
नमोरुद्रायशब्दान्ते नमः शब्दं समुच्चरेत् ।
कालाय नम एवान्ते कलविकरणाय च ॥ १७८ ॥
नमो बलविकरणाय बलप्रमथनाय च ।
ओम् वामदेवाय नमः ओम् वज्राय ततः परम् ॥ १७९ ॥
कलायै नम एवाथ ज्येष्ठाय नम इत्यपि ।
ओम् रक्षायै पदस्यान्ते कलायै नम इत्यपि ॥ १८० ॥
रुद्राय नम ओम् रत्यै कलायै नम इत्यपि ।
कालाय नम इत्यन्ते पालिन्यै शब्दमुच्चरेत् ॥ १८१ ॥
कलायै नम एवाथ कल ओम् शब्दमुच्चरेत् ।
[1]कामायै शब्दमुच्चार्य कलायै नम एव हि ॥ १८२ ॥
विकरणाय नमोन्ते प्रणवञ्चोच्चरेद्बुधः ।
संयमिन्यै पदान्ते च कलायै नम इत्यपि ॥ १८३ ॥
बल ओम् शब्दमुचार्यं क्रोधायैपदमुच्चरेत् ।
कलायै नम एवाथ [2]विकलायै नमस्ततः ॥ १८४ ॥

---

१. मायायै ख० ।

२. विकरणाय ख० ।

ॐ वृद्धयैपदकस्यान्ते कलायै नम इत्यपि ।
बल ॐ शब्दमुच्चार्य स्थिरायै शब्दमुच्चरेत् ॥ १८५ ॥
कलायै नम एवाथ प्रमथनाय नमस्ततः ।
ॐ रौद्रपदस्यान्ते कलायै नम इत्यथ ॥ १८६ ॥
सर्वभूतदमनाय नम ॐ पदमुच्चरेत् ।
भ्रामिन्यै पदकस्यान्ते कलायै नम इत्यपि ॥ १८७ ॥
नम ॐ शब्दमुच्चार्य मोहिन्यै पदकं स्मरेत् ।
कलायै नम एवाथ उन्मनाय नमस्ततः ॥ १८८ ॥
ॐ जयायै पदस्यान्ते कलायै नम उच्चरेत् ।
ततो न्यासं महाकाल सद्यो जातस्य ताः कलाः ॥ १८६ ॥
अष्टौ स्थानेषु चैतेषु सर्वपाप निवृत्तये ।
[1]पार्श्वयोर्हस्तयोश्चैव नासिकायाश्च मस्तके ॥ १६० ॥
बाहुयुग्मे महावीर मणिपूरविभेदकः ।
तत्प्रकारं प्रवक्ष्येऽहं सावधानोऽवधारय ॥ १६१ ॥
बलप्रमथनाय नमोन्ते च सर्वभूतपदं वदेत् ।
दमनाय नमोऽन्ते तु नमः शब्दं समुच्चरेत् ॥ १६२ ॥
उन्मनाय नमः पश्चात् पुनः प्रणवमुद्धरेत् ।
सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ॥ १९३ ॥
भवेभवेनादिभवे भजस्व मां ततः परम् ।
भवोद्भवाय शब्दान्ते नमो मन्त्रं मुदान्यसेत् ॥ १९४ ॥
अङ्गुलीभ्यां समाहृत्य पञ्च ऋचानया प्रभो ।
एवं क्रमेण सन्न्यासं कुर्यादेषु स्थलेषु च ॥ १६५ ॥
मूर्ध्निहृद्गुह्यपादेषु न्यसेदेता ऋचो मुदा ।
ततः कुर्यान्महाकाल चाङ्गन्यासान्तरं शुभम् ॥ १६६ ॥

---

१. स्तनयोश्चैवेति ख० ।

तत्प्रकारं प्रवक्ष्यामि सावधानोऽवधारय ।
वाग्भवं पूर्वमुच्चार्य कामबीजं ततः परम् ॥ १९७ ॥
वकारं शत्रुसंयुक्तं दक्षकार्णेन्दुसंयुतम् ।
चन्द्रबीजं [1]वामनेत्रथान्तवह्निविधून्नतम् ॥ १९८ ॥
केवलं चन्द्रबीजन्तु सविसर्गमनुं ततः ।
सर्वज्ञायपदस्यान्ते हृदयाय नमः पदम् ॥ १९९ ॥
[2]अमृतेपदमुच्चार्य कामबीजं ततः पदम् ।
तेजोज्वालापदं मालिनेन्ते च [3]क्लृप्ताय ब्रह्मणेपि वसेत्ततः ॥२००॥
स्वाहान्तं तत एवाथ [4]ज्वलितशिखिशब्दकम् ।
शिखायानादिबोधाय शिखायै[5] वषडित्यथ ॥ २०१ ॥
वज्रिणे वज्रहस्ताय स्वतन्त्राय पदं वदेत् ।
कवचाय तारशब्दं ततोऽन्यद्बीजमुच्चरेत् ॥ २०२ ॥
नाकारं विन्दुसंयुक्तं वामनेत्रं सविन्दुकम् ।
[6]पशुशब्दं तारमन्त्रं अनन्तशक्तये पदम् ॥ २०३ ॥

---

१. खान्त ख० ।

२. अमृतं पदमुच्चार्य तेजोज्वाला पदं ततः ।
मानिनेऽन्ते च तृप्ताय ब्रह्मणः शिवमेततः ख० ।

३. तृप्ताय ब्रह्मणो शिरसे ततः क० ।

४. जनित शिखि ख० ।

५. शिखायै षट् इत्यपि ख० ।

६. शकारं विन्दुसंयुक्तमधरेददलसमन्वितम् ।
चकारञ्च हकारञ्च दीर्घप्रणवसंयुतम् ।
परतोलुप्रशब्दान्ते शक्तये पदमुच्चरेत् ।
नेत्रत्रयाद्य शब्दान्ते वौषट् पदमुदीरयेत् ।
शकारं शत्रुसंयुक्तं वामनेत्रं सविन्दुकम् ।
पशुशब्दं तारशब्दं अनन्त शत्रुमेपदम् ख० अधि० ।

अस्त्राय फडिति प्रोच्य एवं विन्यस्य योगिराट् ।
मणिपूरे मनो योज्य [1]ध्यायेच्चैतन्यमुत्तमम् ॥ २०४ ॥

ओम् मुक्तापीतपयोदमौक्तिकजवावर्णैर्मुखैः पञ्चभिः
[3]त्र्यक्षैरञ्चितमीशमिन्दुमुकुटं पूर्णेन्दुकोटिप्रभम् ।
शूलं टंककृपाणवज्रदहनान्नागेन्द्रघण्टाङ्कुशान्
पाशं भीतिहरं दधान[2]ममिताकल्पोज्ज्वलाङ्गं भजे ॥ २०५ ॥

एवं ध्यात्वा मानसोपचारैः सम्पूज्य पूजकः ।
अर्घ्यस्थापनमाकुर्यान्निज[4]मन्त्राभिशोधनम् ॥ २०६ ॥

शैवोक्तपीठमन्त्रान्तां पीठपूजां ततश्चरेत् ।
पुनर्ध्यात्वा समावाह्य चावाहनादिमुद्रया ॥ २०७ ॥

पञ्चपुष्पाञ्जलिदानपर्यन्तं परिपूजयेत् ।
पञ्चपुष्पाञ्जलिंदत्त्वा [5]वदनार्चनमाचरेत् ॥ २०८ ॥

[6]शिवावरुणदेवांश्च पूजयेत्तत् क्रमं शृणु ।
ऐशान्यां पूजयेद्विद्वान् ईशानाय नमस्ततः ॥ २०९ ॥

पूर्वे ॐ तत्पुरुषाय नमः शब्दं समुच्चरेत् ।
दक्षिणे ॐ अघोराय नमः शब्दं समुच्चरेत् ॥ २१० ॥

उत्तरे ॐ वामशब्दं देवाय नम उच्चरेत् ।
पश्चिमे प्रणवं पश्चात् सद्योजाताय एव हि ॥ २११ ॥

---

१. ध्यायेच्चैतन्यरूपकमिति ख० ।

२. दधानमसिता ख० ।

३. त्र्यक्षैरिति ग० ।

४. बीजमन्त्राभिशोधकमिति ख० ।

५. आवरणार्चनमाचरेदिति ख० ।
वरुणार्चनमाचरेदिति ग० ।

६. शिवावरुणदेवाश्चेति ग० ।

नमोऽन्तं पूजनं कृत्वा सर्वसिद्धीश्वरो भवेत् ।
ईशानादिचतुष्केषु [1]निवृत्तीत्यादीन् प्रपूजयेत् ॥ २१२ ॥

प्रणवान्ते [2]निवृत्त्यै च नमश्चान्ते ततोऽर्चयेत् ।
एवं [3]प्रतिष्ठां विद्यां च शान्तिं सम्पूज्य यत्नतः ॥ २१३ ॥

प्रणवादिनमोऽन्तेन चतुर्थ्यन्तपदेन च ।
योजयित्वा महापूजाविधौ कुर्यात् [4]समर्पणम् ॥ २१४ ॥

दशदलस्य मध्ये तु विभाव्याष्ट[5]दलं सुधीः ।
तत्रैव पूजनं कुर्यात् अष्टाङ्गयोगसिद्धये ॥ २१५ ॥

प्रणवादिनमोन्तेन चतुर्थ्यन्तपदेन च ।
पूजयेद्देवदेवेशं गन्धपुष्पाक्षतादिभिः ॥ २१६ ॥

अनन्तेशं पूजयेद्वै तथा [6]सूक्ष्मेशमेव च ।
शिवोत्तमेशं सम्पूज्य एकनेत्रेशमेव च ॥ २१७ ॥

एकरुद्रेशमेवं हि त्रिमूर्त्तीशं ततोऽर्चयेत् ।
भक्त्या समर्चयेत्तत्र श्रीकण्ठेशं शिखण्डिनम् ॥ २१८ ॥

तद्बाह्यपत्रिकाग्रेषु उत्तरादिक्रमेण तु ।
उमाद्यादेवताः पूज्याः प्रणवादिनमोऽन्तिकाः ॥ २१९ ॥

उमादेवीं समभ्यर्च्य तथा चण्डेश्वरं ततः ।
नन्दिनश्च महाकालं गणेशं वृषभं तथा ॥ २२० ॥

---

१. निवृत्त्यादीनिति ख० ।

२. निवृत्तौ चेति ख० ।

३. प्रतिष्ठा विद्याचेति ख० ।

४. समर्चनमिति ख० ।

५. द्विदलमिति ख० ।

६. शम्भुं त्रिलिङ्गकमिति ख० ।

[1]भृङ्गरीटः स्कन्दपुत्रौ तद्बाह्ये क्रमतोऽर्चयेत् ।
इन्द्रादीन् लोकपालाँश्च गन्धदीपैः समर्चयेत् ॥ २२१ ॥
वज्रादींश्चक्रमेणैव पूजयेत्साधकोत्तमः ।
धूपदीपादिनैवेद्यपानार्थं पुनराच[2]मनम् ॥ २२२ ॥
संहारमुद्रया चोर्ध्वे स्थापयेद्रुद्ररूपिणम् ।
विसर्जनान्तं तत्कर्म [3]उत्सृष्टपूजनादिकम् ॥ २२३ ॥
समाप्यविधिनानेन पूजाकर्म समापयेत् ।
प्रत्यहं मानसं जापं होममर्चनतर्पणे ॥ २२४ ॥
वर्धयेत् साधकश्रेष्ठो भक्तिभावपरायणः ।
पञ्चलक्षजपेनास्य पुरश्चरणमिष्यते ॥ २२५ ॥
एवं ध्यात्वा जपेन्मन्त्रं पञ्चलक्षं मधुप्लुतैः ।
प्रसूनैः करवीरोत्थैरथवा जुहुयात् सुधीः ॥ २२६ ॥
सर्वदा मानसं कार्यं [4]द्रव्यालाभेऽनिशं चरेत् ।
तद्दशांशं [5]प्रजुहुयात्तद्दशांशश्च तर्पणम् ॥ २२७ ॥
*तद्दशांशं चाभिषेकं दशांशं विप्रभोजनम् ।
एवं जपं साधनञ्च पुरा [6]नारायणो मुनिः ॥ २२८ ॥
कृत्वा [7]सर्वसत्वमयः शीतलोयोगिराड् [8]भवेत् ।
यः करोति साधनानि सोऽचिरादमरो भवेत् ॥ २२९ ॥

---

१. भृङ्गरीटिस्कपुत्रौ ग० ।
२. पुनराचममिति ख० ।
३. तच्छिष्टपूजनादिकमिति ख० ।
४. द्रव्यालाभेऽपिसंचरे दिति ख० ।
५. चाभिषेकं दशांशं विप्रभोजनमिति ख० ।
* एषश्लोको ख पु० नास्ति ।
६. नारायणेन च ग० ।
७. सर्वमन्त्रमय ख० ।
८. भवेदिति ग० ।

[1]पूजान्ते पूजाशेषे च पूजामध्यक्रमेण च।
प्रणमेत् साधकश्रेष्ठो [2]वरुणात् पापभूपतेः॥ २३०॥
[3]ॐ नमः परमकल्याण नमस्ते विश्वभावन।
नमस्ते पार्वतीनाथ [4]उमाकान्त नमोऽस्तुते॥ २३१॥
विश्वात्मनेऽविचिन्त्याय गुणाय निर्गुणाय च॥
धर्माय ज्ञानमोक्षाय नमस्ते सर्वयोगिने॥ २३२॥
नमस्ते कालरूपाय त्रैलोक्यरक्षणाय च।
[5]गोलोकघातकायैव चण्डेशाय नमोऽस्तु ते॥ २३३॥
सद्योजाताय देवाय नमस्ते शूलधारिणे।
कालान्ताय च कान्ताय चैतन्याय नमो नमः॥ २३४॥
कुलात्मकाय कौलाय चन्द्रशेखर ते नमः।
[6]उमानाथ नमस्तुभ्यं योगीन्द्राय नमो नमः॥ २३५॥
सर्वाय सर्वपूज्याय ध्यानस्थाय गुणात्मने।
पार्वती प्राणनाथाय नमस्ते परमात्मने॥ २३६॥
एतत्स्तोत्रं पठित्वा च स्तौति यः परमेश्वरम्।
याति [7]रुद्रकुलस्थानं मणिपूरं विभिद्यते॥ २३७॥
एतत्स्तोत्रप्रपाठेन तुष्टो भवति शंकरः।
[8]खेचरत्वं पदं नित्यं ददाति परमेश्वरः॥ २३८॥

---

१. पूजाद्यैश्चैव शेषे च पूजामध्ये क्रमेणातु ख०।
२. वारणादिति ख०।
३. ओमिति ख पु० नास्ति।
४. उमानाथेति ख०।
५. त्रैलोक्यघातकायैवेति ख०।
६. उमाकान्तेति ख०।
७. रुद्रकुलस्थाने ग०।
८. खेचरत्वपदमिति ख०।

ततो वक्ष्ये महादेव मृत्युञ्जयविधानकम् ।
यत् कृत्वा परमब्रह्ममयो भवति साधकः ॥ २३६ ॥
मृत्युञ्जयस्य मन्त्रं वै जपते यदि मानुषः ।
कोटिवर्षशतं स्थित्त्वा लीनो भवति ब्रह्मणि ॥ २४० ॥
सर्वव्यापकरूपेण स तिष्ठति सदाशिव ।
तत्प्रकारं प्रवक्ष्यामि [1]सावधानोऽवधारय ॥ २४१ ॥
[2]आदौ पूजां विधानेन वक्ष्यामि सारनिर्मिताम् ।
[3]श्रीकण्ठपूर्णोदर्याश्च न्यासं चास्ये समाचरेत् ॥ २४२ ॥
ततो हृदयमध्ये तु स्वहस्ताङ्गुलिमुद्रया[4] ।
[5]तद्वयान्यस्य देवेश तत्प्रकाशं [6]प्रचक्ष्यते ॥ २४३ ॥
प्रणवादि नमोऽन्तेन चतुर्थ्यन्तपदेन च ।
योजयित्वा न्यसेन्मन्त्री मन्त्रभावपरायणः ॥ २४४ ॥
आधारशक्तिमेवं हि प्रकृतितदनन्तरम् ।
कूर्ममनन्तं तत्पश्चात् पृथिवीं क्षीरसागरम् ॥ २४५ ॥
श्वेतद्वीपं ततः पश्चान्मणिमण्डपमेव च ।
[7]कल्पवृक्षे ततो नाथ विन्यसेन्मणिवेदिकाम् ॥ २४६ ॥
रत्नसिंहासनं तत्र हृदयाम्भोजमण्डले ।
दक्षवामस्कन्धभागे वामोरौ दक्षिणे तथा ॥ २४७ ॥

---

१. सावधानावधारयेति क० ।
२. आदौपूजा विधानं च वक्ष्यामि सारनिर्णीतं ख० ।
३. पुर्तोदर्याश्चेति ख० ।
४. हस्ताङ्गुलीसमुद्रया ख० ।
५. त स्वयाख्यस्येति ख तत्त्वयान्यस्येति ग० ।
६. प्रचक्षते ख० ।
७, कल्पवृक्षमिति ग० ।

मुखे वामपार्श्वभागे नाभौ दक्षपार्श्वके ।
प्रणवादिनमोऽन्तेन चतुर्थ्यन्तपदेन च ॥ २४८ ॥

सर्वत्र न्यासमाकुर्यात्तेषां नाम शृणु प्रभो ।
क्रमेण सर्वं कर्त्तव्यं [1]क्रमभङ्गो न चाचरेत् ॥ २४९ ॥

धर्मं ज्ञानञ्च वैराग्यमैश्वर्यं तदनन्तरम् ।
अधर्ममपि चाज्ञानमवैराग्यं ततः परम् ॥ २५० ॥

अनैश्वर्यं क्रमेणापि विन्यसेत् साधकोत्तमः ।
पुनर्वारं हृदम्भोजे न्यसेदेकमनाः सुधीः ॥ २५१ ॥

अनन्तपद्ममेवन्तु [2]अं सूर्यमण्डलं तथा ।
[3]द्विषट्कलात्मना सार्धं सं सोममण्डलं तथा ॥ २५२ ॥

षोडशकलात्मानञ्च मं वह्निमण्डलं तथा ।
दशकलात्मना सार्धं सं [4]सत्वं तदनन्तरम् ॥ २५३ ॥

रं [5]बीजंरजसं तत्र तं तमसमेव च ।
आं [6]आत्मने न्यसेन्मन्त्री अं अन्तरात्मने नमः ॥ २५४ ॥

पं बीजं परमात्मानं मायाज्ञानात्मने नमः ।
इत्यन्तं न्यस्य देवेश मन्त्रसिद्धिमवाप्स्यसि ॥ २५५ ॥

मणिपूरे मन्त्रसिद्धिं सर्वसिद्धिमवाप्नुयात् ।
यः करोति सदान्यासं ध्यानपूजापरायणः ॥ २५६ ॥

---

१. क्रमभङ्गेन चाचरेदिति ख० ।

२. तं-ख० ।

३. द्वादशकात्मना सार्धं सुं सोममण्डल तथेति ख० ।

४. सत्त्व ग० ।

५. राजसमिति ख० ।

६. आत्मानमिति ख० ।

[1]वामां ज्येष्ठां तथा रौद्रीं कालीं कलपदादिकाम् ।
विकरण्याह्वया युक्ता बलविकरणीं तथा ॥ २५७ ॥

बलप्रमथिनीं चैव न्यसेत् साधकसत्तमः ।
ततः सर्वभूतदमनीं मनोन्मनीं ततो न्यसेत् ॥ २५८ ॥

तदुपरि न्यसेन्नाथ ॐ नमो भगवते पदम् ।
[2]सकलगुणात्म न शक्ति चान्ते युक्ताय पदमावदेत् ॥ २५९ ॥

अनन्ताय पदस्यान्ते योगपीठात्मने पदम् ।
नमोऽन्तोऽयं महामन्त्रः सर्वोपरि न्यसेत्सुधीः ॥ २६० ॥

ततो नाथ समाकुर्यात् साधको गतभीः स्वयम् ।
ऋष्यादिन्यासमाकुर्यात् तत्प्रकारं शृणु प्रभो ॥ २६१ ॥

शिरसि पदमुच्चार्य कहोडऋषये नमः ।
तदुपरि ततो नाथ महाविष्णुपदं वदेत् ॥ २६२ ॥

ऋषये नम इत्युक्त्वा मुखे देवीपदं वदेत् ।
गायत्रीच्छन्दसे पश्चान्नमः शब्दं समुच्चरेत् ॥ २६३ ॥

हृदि मृत्युञ्जयायैवं दैवतायै नमः पदम् ।
ऋषिः कहोडो देव्याश्च गायत्रीच्छन्द ईरितम् ॥ २६४ ॥

मृत्युञ्जयो महादेवो देवतास्य [3]प्रकीर्तिता ।
कराङ्गन्यासकौ कुर्यात् षड्दीर्घभाजया सह ॥ २६५ ॥

सकारेण महाकाल तत्प्रकारं शृणु प्रभो ।
सामङ्गुष्ठाभ्यां चान्ते च नमः शब्दं क्रमेण तु ॥ २६६ ॥

---

१. वामा ज्येष्ठा तथा रौद्री काली कलपदादिकमिति ग० ।
२. सकलगुणात्मशक्तिचान्ते युक्ताय पदमावदेत् ख० ।
३. प्रकीर्तितः क० ।

एवं कराङ्गुलीन्यासं कुर्यादेव महाप्रभो ।
[1]षड्दीर्घभाजा मन्त्रेण सकारेण सबिन्दुना ॥ २६७ ॥
कराङ्गन्यासमाकुर्यात् कुलतन्त्रक्रमेण तु ।
ततो ध्यानं समाकुर्यात् शुभभावपरायणः ॥ २६८ ॥
इन्द्वर्कानललोचनंस्मितमुखं [2]पद्मद्वयान्तास्पदं
मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुच्छविम् ।
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलम्[3]
कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावये ॥ २६९ ॥
एवं ध्यात्वा मानसोपचारद्रव्यैः प्रपूजयेत् ।
अर्घ्यस्थापनमाकृत्यतत्तन्मन्त्रेण साधकः ॥ २७० ॥
[4]पूजयेत्पीठमन्वन्ता तत्तन्मन्त्रेण साधकः ।
पुनर्ध्यात्वा समावाह्य मूलमन्त्रेण मन्त्रवित् ॥ २७१ ॥
पाद्यादिभिः पूजयेद्वै गन्धपुष्पादिशोभितैः ।
पञ्चपुष्पाञ्जलिं दत्वा परिवारान् प्रपूजयेत् ॥ २७२ ॥
केशरेष्वग्निनिर्ऋतिवाय्वीशानेषु पूजयेत् ।
मध्ये दिक्षु च तन्मध्ये सा बीजं तत्र चोच्चरेत् ॥ २७३ ॥
हृदयाय नमश्चान्ते सीं बीजं तदनन्तरम् ।
शिरसे स्वाहया सार्धं सु बीजं तदनन्तरम् ॥ २७४ ॥
शिखायै वषडित्यादि सैं बीजं तदनन्तरम् ।
कवचाय पदस्यान्ते तारबीजं समुच्चरेत् ॥ २७५ ॥

---

१. बीजेनेति ख० ।
२. पद्मन्वयान्तास्पदं ग० ।
३. भूषाकुलमिति ख० ।
४. एतत्पद्यत्रयं ख पुस्तके नास्ति ।

सों बीजं पूर्वमुच्चार्य नेत्रत्रयाय इत्यपि ।
वौषडादिमध्यपदं चतुर्दिक्षु ततः परम् ॥ २७६ ॥ २७६ ॥

सश्चान्तेऽस्त्रायशब्दान्ते फडित्येव समर्चयेत्[1] ।
षडङ्गानि पूजयित्वा तद्बहिः प्रतिपूजयेत् ॥ २७७ ॥

इन्द्रादींल्लोकपालांश्च [2]वज्रादींश्च तथा प्रभो ।
धूपदीपादिनैवेद्यपानादीनि प्रदापयेत् ॥ २७८ ॥

विधिना वादनं कुर्यान्मृत्युञ्जयसुतोषणात्[3] ।
विसर्जनान्तं यत्कर्म समाप्य विधिनामुना ॥ २७९ ॥

संहारमुद्रया [4]चैवं हृदये [5]चानयेद्बुधः ।
प्रसन्नहृदयो भूत्वा चरणोदकमापिबेत् ॥ २८० ॥

एतन्मात्रेण देवेश सर्वसिद्धिं समाप्नुयात् ।
पिबामि चरणद्वन्द्वाम्भोजनिःसृतकं भजे ॥ २८१ ॥
अमरत्वं सदा देहि मृत्युञ्जय नमोऽस्तुते ॥२८२॥

इति श्रीरुद्रयामले उत्तरतन्त्रे [6]मन्त्रप्रकाशोनाम
सप्तचत्वारिंशः पटलः ॥



---

मश्चान्ते क० ।

२. पूजयेत्तु तथा ख० ।

३. सुभूषणात् ख० ।

४. देवमिति ख० ।

५. चालयेदिति ख० ।

६. अष्टचत्वारिंशदिति ख० ।

# अष्टचत्वारिंशः पटलः

आनन्दभैरव उवाच—

श्रुतं च साधनं पुण्यं महारुद्रस्य सुन्दरि ।
मणिपूरे प्रकाशश्च कथितं ज्ञाननिर्णयात् ॥ १ ॥
अकस्मात् सिद्धिसम्पत्ति[1] स्तुतिं वद महाप्रियात् ।
यस्या श्रवणमात्रेण पाठेन योगिनीवशम् ॥ २ ॥

श्रीआनन्दभैरवी उवाच—

परमानन्ददेवेश योगानामधिप प्रभो ।
स्तोत्रं रुद्रस्य वक्ष्यामि सारात्सारं परात्परम् ॥ ३ ॥
यज्ज्ञात्वा योगिनः सर्वे षट्चक्रपरिभेदकाः ।
आकाशगामिनः सर्वे स्वर्गमोक्षाभिलाषुकाः[2] ॥ ४ ॥
महादेवसमाः सर्वे देवाश्च स्वर्गभोगिनः[3] ।
सर्वरक्षाकरं स्तोत्रं ये पठन्ति निरन्तरम् ॥ ५ ॥
ते यान्ति ब्रह्मसदनं सिद्धमुख्या महीतले ॥ ६ ॥
[4]ॐ भजामि शम्भुं सुखमोक्षहेतुं
रुद्रं महाशक्तिसमाकुलाङ्गम् ।
[5]रौद्रात्मकं चारुहिमांशुशेखरं
कालं गणेशं सुमुखाय शङ्करम् ॥ ७ ॥

---

१. सम्पत्तिः स्यात्त्वं वदमहाप्रिये ख० ।

२. अभिनासकाः ग० ।

३. सर्गभोगिनः ख० ।

४. ओमिति ख पु० नास्ति ।

५. रौद्रार्थकं रुद्रहिमांशुशेखरं कालं कुलेशं शिवशङ्करञ्चेति ख० ।

मृत्युञ्जयं जीवनरक्षकं परं
शिवं परब्रह्मशरीरमङ्गलम् ।
हिमांशुकोटिच्छविमादधानं
भजामि पद्मद्वयमध्यसंस्थितम् ॥ ८ ॥
[1]सर्वात्मकं कामविनाशमूलं
तं चन्द्रचूडं मणिपूरवासिनम् ।
चतुर्भुजं ज्ञानसमुद्रयाढ्यं
पाशं मृगाक्षं गुणसूत्रव्याप्तम् ॥ ९ ॥
धरामयं तेजसमिन्दुकोटिं
वायुं जलेशं [2]गगनात्मकं परम् ।
भजामि रुद्रं कुललाकिनीगतं
सर्वाङ्गयोगं जयदं सुरेश्वरम् ॥ १० ॥
शुक्रं [3]महाभीमनयं पुराणं
प्राणात्मकं व्याधिविनाशमूलम् ।
[4]यज्ञात्मकं कामनिवारणं गुरुं
भजामि विश्वेश्वरशङ्करं शिवम् ॥ ११ ॥
वेदागमानामतिमूलदेशं
तदुद्भवं [5]भद्रहितं [6]परापरम् ।
कालान्तकं [7]ब्रह्मसनातनप्रियं
भजामि शम्भुं [8]गगनादिरूढम् ॥ १२ ॥

---

१. सर्वार्थकमिति ख० ।
२. गगणात्मकमिति ख० ।
३. लयमिति ख० ।
४. यज्ञार्थकमिति ख० ।
५. तद्रहितमिति ख० ।
६. परात्मरमिति ख० ।
७. निरूपणमिति ख० ।
८. गगणादिकरूढमिति ख० ।

शिवागमं शब्दमयं विभाकरम्
    [1]भास्वत्प्रचण्डानलविग्रहं ग्रहम् ।
ग्रहस्थितं ज्ञानकरं करालम्
    भजामि शम्भुं प्रकृतीश्वरं हरम् ॥ १३ ॥

छायाकरं योगकरं सुखेन्द्रं
    मत्तं महामत्तकुलोत्सवाढ्यम् ।
योगेश्वरं योगकलानिधिं विधिं
    विधानवक्तारमहं भजामि ॥ १४ ॥

हेमाचलालङ्कृतशुद्धवेशं
    वराभयादाननिदानमूलम् ।
भजामि कान्तं वनमालशोभितं
    [2]चामूलपद्मामलमालिनं कुलम् ॥ १५ ॥

स्वयं [3]पुराणं पुरुषेश्वरं गुरुं
    [4]मिथ्याभयाह्लादविभाविनं भजे ।
भावप्रियं प्रेमकलाधरं शिवं
    गिरीश्वरं चारुपदारविन्दम् ॥ १६ ॥

ध्यानप्रियं ज्ञानगभीरयोगं
    भाग्यास्पदं [6]भाग्यसमं सुलक्षणम् ।
शूलायुधं शूलविभूषिताङ्गं
    श्रीशङ्करं मोक्षफलक्रियं भजे ॥ १७ ॥

---

१. प्रचण्डामन्तविग्रहं विमुमिति ख० ।
२. चाम्लानपद्मासनमानिनं कुलमिति ख० ।
३. प्रधानमिति ख० ।
४. सुरमिति ख० गुरुम् ?
५. सिद्धाभवाह्लादिविभाविनमिति ख० ।
६. भाग्यमयमिति ख० ।

नमो नमो रुद्रगणेभ्य एवं
मृत्युञ्जयेभ्यः कुलचञ्चलेभ्यः ।
शक्तिप्रियेभ्यो विजयादिभूतये
शिवाय धन्याय नमो नमस्ते ॥ १८ ॥

[1]बाह्यन्त्रिशूलं वरसूक्ष्मभावं
विशालनेत्रं तनुमध्यगामिनम् ।
[2]महाविपद्दुःखविनाशबीजं
[3]प्रज्ञादयाकान्तिकरं भजामि ॥ १९ ॥

पुरान्तकं पूर्णशरीरिणं गुरुं
स्मरारिमाद्यं निजतर्कमार्गम् ।
अनादिदेवं दिवि दोषघातिनम्
भजामि पञ्चाक्षरपुण्यसाधनम् ॥ २० ॥

दिगम्बरं [4]पद्ममुखं [5]करस्थं
स्थितिक्रियायोगनियोजनं भवम् ।
भावात्मकं भद्रशरीरिणं शिवं
भजामि पञ्चाननमर्कवर्णम् ॥ २१ ॥

मायामयं पङ्कजदामकोमलं
दिग्व्यापिनं दण्डधरं [6]हरेश्वरम् ।
त्रिपक्षकं [7]त्र्यक्षरबीजभावं
त्रिपद्ममूलं त्रिगुणं भजामि ॥ २२ ॥

---

१. भाव्यमिति ख० ।
२. महाविपद्भस्मविलासबीजमिति ख० ।
३. शुद्धोदयं शान्तिकरमिति ख० ।
४. सुखमिति ख० ।
५. करस्थितमिति ख० ।
६. सुरेश्वरमिति ग० ।
७. अक्षरबीजभावमिति ख० ।

विद्याधरं [1]वेदविधानकार्यं
कायागतं नीतनिनादतोषम् ।
नित्यं चतुर्वर्गफलादिमूलं
वेदादिसूत्रं प्रणमामि योगम् ॥ २३ ॥

वेदान्तवेद्यं कुलशास्त्रविज्ञं
क्रियामयं [2]योगस्वधर्मदानम् ।
भक्तेश्वरं भक्तिपरायणं वरं
[3]भक्तं महाबुद्धिकरं भजाम्यहम् ॥ २४ ॥

गतागतं गम्यमगम्यमात्रं
[4]समुल्लसत्कोटिकलावतंसम् ।
[5]भावात्मकं भावमयं सुखासुखं
भजामि भर्गं प्रथमारुणप्रभम् ॥ २५ ॥

बिन्दुस्वरूपं परिवादवादिनं
मध्याह्नसूर्यायुतसन्निभं नवम् ।
विभूतिदानं [6]निजदानदानं
दानात्मकं तं प्रणमामि देवम् ॥ २६ ॥

कुम्भापहं शत्रुनिकुम्भघातिनं
दैत्यारिमीशं कुलकामिनीशम् ।
प्रीत्यान्वितं चिन्त्यमचिन्त्यभावं
प्रभाकराह्लादमहं भजामि ॥ २७ ॥

---

१. देव······ख० ।
२. सुधर्म·······ख० ।
३. शक्तिकरमिति ग० ।
४. शरद्विधोः कोटिकलावतं समिति ख० ।
५. भावार्थकमिति ख० ।
६. योग ख० ।

त्रिमूर्त्तिमूलाय जयाय शम्भवे हिताय लोकस्य [1]वपुर्धराय ।
नमो [2]भयाच्छिन्नविघातिने पते नमो नमो विश्वशरीरधारिणे ॥२८॥
तपःफलाय प्रकृतिग्रहाय [3]गुणात्मने सिद्धिकराय योगिने ।
नमः प्रसिद्धाय [4]दयातुराय वाञ्छाफलोत्साहविवर्धनाय ते[5] ॥२९॥
[6]शिवममरमहान्तं पूर्णयोगाश्रयन्तं
धरणिधरकराब्जैर्वर्धमानं[7] त्रिसर्गम् ।
[8]विसममरणघातं [9]मृत्युपूज्यं जनेशं
विधिगणपतिसेव्यं पूजये भावयामि ॥ ३० ॥
एतत्स्तोत्रं [10]पठेद्विद्वान् मुनिर्योगपरायणः ।
नित्यं जगन्नाथगुरुं भावयित्वा पुनः पुनः ॥ ३१ ॥
मणिपूरे [11]वायुनिष्ठो नित्यं स्तोत्रं पठेद् यदि ।
जीवन्मुक्तश्च देहान्ते परं निर्वाणमाप्नुयात् ॥ ३२ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने रुद्रमृत्युञ्जय-
स्तवनं नाम [12]अष्टचत्वारिंशत्तमः पटलः ॥



---

१. सुधायुधे सुदा ख० ।
२. भवाच्छन्ननिघातिने ते ख० ।
३. गुणार्थिने ख० ।
४. दयार्घवाय ख० ।
५. ते ख० पु० नास्ति ।
६. शिववरहस्तं पुण्ययोगाश्रयन्तमिति ख० ।
७. रम्यमायामिति ।
८. चरण ख० ।
९. मृत्युघातं नरेशमिति ख० ।
१०. मणियोगपरायणः ख० ।
११. पयोनिष्ठो ख० ।
१२. एकोनपञ्चाशदिति ख० ।

# एकोनपञ्चाशत्तमः पटलः

आनन्दभैरवी उवाच--

षट्चक्रभेदनार्थाय सर्वसिद्धसुसिद्धये ।
वक्ष्यामि लाकिनीदेवीस्तोत्रं परमदुर्लभम् ॥ १ ॥
यत्पाठादतिसन्तोषं प्राप्नोति यतिरीश्वर ।
तत्क्रियासारसम्पन्नं स्तवनं लाकिनीप्रियम् ॥ २ ॥

अस्य श्रीलाकिनीस्तोत्रस्य महाविष्णुकहोड-ऋषि-र्गायत्रीच्छन्दो महासिद्धिदमृत्युञ्जयमहारुद्र[1]लाकिनी सरस्वतीदेवता मणिपुरभेदने[2] जपे विनियोगः ।

ओम् [3]बीजाक्षरमूर्तिमार्तिहरिणीमार्यां जयां[4]बुद्धिदां
दीनानामपराधकोटिहननीं संज्ञामणिं योगिनाम्[5] ।
त्वामाद्यामनुरागिणीं गुणगणामोदैकहेतुस्थलां
स्थित्यन्तःकृतकौतुकीम्[6]वरदे वन्दे मुदा लाकिनीम् ॥ ३ ॥
हेरम्बार्चनसिद्धिदा द्रयगता कोटिप्रभा भास्करा
साकारा किरणोज्वला सुखमयी वेदध्वनिप्राणिनी ।
कोपाको[7]पितलक्षणा तरुतराकल्पाशया संशया
[8]कृत्वैवं वरवर्णिनी समवतु श्रीलाकिनी कङ्किनी ॥ ४ ॥

---

१. डाकिनी ख०

२. मणिपूरभेदग्रन्थिभेदन ख०

३. मुक्ति ख० ।

४. हरिणीमार्यां जयां वृद्धिदाम् ॥ ख० ।

५. योगिनीम् ख० ।

६. शुभकरीम् ख० ।

७. कोपाकायिका ख० ।

८. त्वञ्चैकावर्वर्णिनी समवतु किङ्किणी श्रीलाकिनी ख० ।

केयूरामलहारमालशुभगा वीरासना[1] स्थायिनी
भार्या रुद्रपतेः प्रवालविमला वक्त्रोत्पल[2]स्रग्धरा ।
माता योगवतां सती परा [3]परपदा माध्वीरसाच्छादिता
त्वं मां पाहि कृपामयी यमगतं मृत्युञ्जये श्रीधरे ॥ ५ ॥

आकाङ्क्षीकुलसङ्ख्यका क्षयकारी [4]शत्रुप्रभादेर्दया
भक्तानामतिदुःखहा शशिमुखी योन्यानना कामुकी ।
कामस्थानम[5]कामदोपशतकं शीघ्रं त्वलक्षेमदा[6]
जीवन्मुक्तिपदं विधेहि समरे सर्गद्रुहस्य प्रियम् ॥ ६ ॥

त्वं पञ्चाननपूजिता त्वमशिता त्वं बालविद्यागति-
स्त्वं सत्यं[7] कवितासु वाक्यकविता त्वं केवलानन्ददा ।
त्वं लाक्षारुणरू[8]पिणी त्वमवरा त्वं लिङ्गसंहारिणी
त्वं साक्षादमृतप्रदा त्वमजरा त्वं लाकिनी पातु[9] माम् ॥ ७ ॥

नानामङ्गलधर्मराज्यजडिता संस्कारबोधाश्रया
लिङ्गस्थाचलपुत्रिका नवगृहे [10]संकासयन्ती शिवा ।
मे लिङ्गोपरि रुद्रनाथ विपथव्याभेदनं सङ्गमं
शीघ्रं कारय देवि [11]मोक्षतुरिकं कोटीवचन्द्रोज्वला ॥ ८ ॥

---

१. वीरासनस्थायिनी ख० ।
२ रक्तोपलासुन्दरी ख० ।
३. परपदाम् ख० ।
४. शत्रुप्रभानाशिनी ख० ।
५. मम ख० ।
६. हन ख० ।
७. सत्या मुखसत्यवाग्य कलिता ख० ।
८. कायिका विष धरा ख० ।
९. पाहि ख० ।
१०. संकाशयन्ती ख० ।
११. मोदभविकम ख० ।

चन्द्राभास[1]कलाश्रया श्रयति या शब्दच्छटा या समा[2]
माया मोहभिदा[3] दया दयति या कृष्णक्रियामोहिनी ।
लक्ष्मीर्नीलकलेवरामलमणेः पूर्वं[4] सदा रक्षतु
श्रीविद्या भयदायिनी त्वमपि सा मे नाभिमूलोदया ॥ ९ ॥

मात्रा मुद्रामन[5]ननिलया मालिनी मन्त्रविद्या
विश्वेशानी शयनरहिता शीतवातातपस्था ।
सत्यासत्या वचनभवगा[6] गौरि माता त्वमेव
प्राणान् रक्ष प्रथमकिरणामाश्रये त्वामनन्ताम् ॥ १० ॥

सिद्धासिद्धा शशिरविकला केवलाम्भोजसंस्था
स्थित्यानन्दा नयनस्वचलाम्भोजमध्यप्रकाशा ।
नित्यं श्रद्धागतिपथकरा[7] कर्त्री कामानहर्त्री
[8]नाद्यस्तोत्रं भज भज भजे त्वामनन्तां स्वरूपे ॥ ११ ॥

पीतापीता पवनगमना धारणध्यानयोगा ।
कालाकाला कलिकुलकला निष्कला ज्ञानरूपा[9] ।
कृष्णानन्दा मदनकुहरा केङ्करा शङ्करी वा[10] ।
त्वं श्रीधात्री धवलकमलं नाभिमूले प्रवक्ष्ये[11] ॥ १२ ॥

---

१. चन्द्राभाकरणाश्रयो ख० ।
२. उमा ख० ।
३. महोदयो दयति या ख० ।
४. पूरम् ख० ।
५. मथन ख० ।
६. सुभगा ख० ।
७. दत्तकामानवद्या ख० ।
८. नाभ्यम्भोजम् ख० ।
९. निष्कलाज्ञाकपाला ख० ।
१०. या ख० ।
११. प्ररक्ष ख० ।

श्वेता श्वेतारुणशतकरा भावनाज्ञानसिद्धिः
प्रीताप्रीता परमगहना[1] चारुणाभाननाथाः ।
[2]त्वं सा विद्या त्रिधि बुधवरा धारणाज्ञानगम्या
रम्यारम्या [3]श्मणानिरता नीरदा पातु नाभिम् ॥ १३ ॥

[4]मन्दोद्वन्धप्रियवधुलता नीरवानावहन्त्री
क्षेत्राक्षेत्रा परचरगता भक्तिमुक्तिप्रकाशा ।
कौलाकौलाज्ञापितनयना[5] गञ्जना वातमुग्धा
[6]मुग्धामुग्धामतिधनपतेर्नाभिसंस्थेऽवनाभिम् ॥ १४ ॥

हंसी सिंहासनगतपदा चक्रविद्या सुसूक्ष्मा
श्रीविद्या त्वं नवविलचरा सुन्दरी रक्तवर्णा ।
स्वर्णाम्भोजोपरि शुभमना चक्रमध्ये प्रतिष्ठा
[7]सर्वा वर्णा परिजनदयानाभिपद्मं च रक्षा ॥ १५ ॥

ब्रह्मानन्दा नृपगणमहापूजया शोभिताङ्गी
श्रीश्रीविद्यासकलविभवा भावनीया महेन्द्रैः ।
सिद्धस्थाने मणिमयगृहे मूलसिंहासनस्था[8]
पद्मे चाष्टान्वितयुगदले नाभिमूले[9] ममाव ॥ १६ ॥

---

१. पवनगठना तारणा मारणा या ख० ।

२. हंसा ख० ।

३. वसन ख० ।

४. सेन्दोर्गन्धप्रियविधुनितानीखा वा वाहन्ती ख० ।

५. क्षपितकलुषाज्ञानगम्या चिराय ख० ।

६. शुद्धाशुद्धा……… नाभिसंस्था व नाभिम् ख० ।

७. सर्वंच्छन्ना………ज्ञानपदं प्ररक्ष ख० ।

८. आसनस्थे ख० ।

९. रुद्ररूपात्वमेव ख० ।

योगज्ञानं [1]द्विविधविभवं वेदविद्याप्रकाशं
मे चाष्टाङ्गं[2] समवतु मुदा षोडशी भैरवस्था ।
चन्द्रोल्का त्वं[3] भवभयहरा शोकतापापहन्त्री
नाभावब्जे[4] उदयति सुरो यस्तमीशे प्ररक्ष ॥ १७ ॥
संशिष्टा[5] त्वं विरत करुणे शीतले शीतशैले
साक्षादन्य[6]प्रचयवचना पार्वणा पर्वपूरा ।
विद्युत्पूरं [7]समसुखमयं पाहि पञ्चानना या
त्वं सा देवी शुभमणिगृहे शीतलत्वं[8] विधेहि ॥ १८ ॥
छन्दोगानां सकलविषयच्छेदिनी चार्णमाता
माला लाक्षारुणकिरणगा गोपपूज्या गिरीज्या[9] ।
मातस्त्वं मे स्वमणिभवनं पाहि सूक्ष्मा भवानी
[10]वानस्थानाश्रय जय कराचाङ्गिरा चान्नपूर्णा ॥ १९ ॥
चन्द्रोल्लासाऽवयवसुखदा दीर्घकेशी विशाला
त्वं मातङ्गी जननि[11] जगतां बालिका विप्रचण्डा ।
ज्योत्स्नाजाले उदयति सदा रक्तभाषप्रभासा[12]
त्वं मे रुद्र हरिहरतनुं नाभिमूले प्ररक्ष ॥ २० ॥

---

१. विविध ख० ।
२. चाष्टाङ्गैर्मां प्रणतशिरसं ख० ।
३. चन्द्राङ्गा ख० ।
४. नाभेरब्जे ख० ।
५. सुश्लिष्टा त्वं विभव ख० ।
६. अर्थप्रचय ख० ।
७. मम ख० ।
८. शीतला ख० ।
९. पूज्यादिविद्या ख० ।
१०. वालस्थानाप्रचुरप्रखरा ख० ।
११. गजमुनिमता मालिका ख० ।
१२. भाषाप्रकाशा ख० ।

वाणीनाम्ना रचयति वचः सुन्दरी वर्णनस्था
स्थित्यन्तस्था चलतनुधरा [1]धामसन्धामरा सा ।
बोधानन्दप्रकृतितनुभिर्व्यापिनी ज्ञानमुग्धा
मातस्त्वं मे [2]मणिदलगृहं पाहि सर्वाङ्गविद्ये ॥ २१ ॥

विद्या [3]चण्डामलसितसृजा चन्दनालिप्तदेहा
विश्वेशानि भगवति शिवे त्वं [4]क्षयामोघरूपा ।
[5]जाया शम्भोर्जटिलशिवगता मोक्षदा मानसंस्था
चित्तं शुभ्रं कुरु विषयछेदनं [6]छेदिनि त्वम् ॥ २२ ॥

मणिमयकुलगेहे कोटिविद्युत्प्रकाशे[7]-
भयवरमपि देहि क्रोधविद्ये मयि त्वम् ।
सकलसुखविभोगं पालय प्राणरूपं
चरणतलविलग्नं मामनाथं परेशि ॥ २३ ॥

भुवनगहनहेतोः[8] कायसर्गा विनास्ते
विधिमखसुरनाथं मानुषादि त्रिसर्गम्[9] ।
मम मणिकुलपद्मे नित्यरूपाभिधानं
जयति खलु [10]तदानीं स्तोत्रसारप्रकारम् ॥ २४ ॥

---

१. फुल्लमन्दारवासा ख० ।
२. मणिकुलगृहं ख० ।
३. वेद्यावर्णामनसिजरुजा ख० ।
४. क्षपाघोररूपा ख० ।
५. जये ख० ८ क—प्रकुरु ख० ।
६. छेदनाच्छेदिनी त्वम् ख० ।
७. प्रकाशा ख० ।
८. गठनहेतो कायशङ्का विनाशात् ख० ।
९. मानुषादित्यसर्गम् ख० ।
१०. तदा मे ख० ।

भवतु[1] चरणपद्मे लाकिनी देवकन्ये
[2]विरचय मनुशास्त्रं सिद्धमन्त्रप्रकारम् ।
[3]वह वह भवभावं त्राहि मां चन्द्रगेहे
कठिनहृदयनाशं शाङ्करि त्वं[4] कुरुष्व ॥ २५ ॥

कमलवनसमीपे [5]वन्यमध्येऽतिगुह्ये
विषयविषविनाशं कौलिके त्वं निकृत्य ।
[6]भवनिजमणिपीठे स्थापयित्वा निदानं
हर हृदयिते त्वं दोषपट्कं विवादम् ॥ २७ ॥

घोरे सान्द्रान्धकारे [7]मम निजकुलदृग्दानकर्त्रि प्रसन्ने
वाञ्छाकल्पद्रुमस्था त्वमिह कुशलदा [8]दायभागाविभागा ।
त्वं काली[9] नन्दिनीस्था नयकरुणघटा मध्यगा माधका त्वं
भीमा भीत्यापहन्त्री हरपदनयनो[10] लाकिनी नाभिभाव ॥ २८ ॥

एतत्स्तोत्रं पठेद् विद्वान् योगज्ञानी निराश्रयः ।
महासुखगतो[11] वीरो विभवायामृताय च ॥ २९ ॥
भोगमोक्षौ करे तस्य चैहिके योगिराड् भवेत् ।
परे याति महादेवी पादपद्मे न संशयः ॥ ३० ॥

---

१. तव तु ख० ।
२. विरचय ख० ।
३. भुवननिखिलतापात् ख० ।
४. शङ्करि ख० ।
५. अरण्य ख० ।
६. हर ख० ।
७. अखिल निजकुलमुद्धारकर्त्रीप्रसन्ने ख० ।
८. भागातिभागा ख० ।
९. लाङ्गलीस्था लय कर्णघटामध्यगामातृका त्वम् ख० ।
१०. विलयालाकिनी नाभिसार ख० ।
११. पुण्यगतो धीरो विभवेनामृतेन च ख० ।

ऐहिके चिरजीवित्वं ददाति कामदायिनो ।
मणिपुरे स्थितो याति[1] कुलमार्गप्रसादतः ।। ३१ ।।

कुलमार्गेण यत्स्थानं लयं विश्वेश्वरीपदम् ।
[2]तल्लया मणिपूरस्था देवता पश्यति ध्रुवम् ।। ३२ ।।

पूजान्ते प्रपठेत् स्तोत्रं भक्तिभावपरायणः ।
शीघ्रमेव हि योगी स्यात् कुलमार्गप्रसादतः ।। ३३ ।।

[3]इति श्रीरुद्रयामले उत्तरतन्त्रे लाकिनीशस्तवनं
नाम एकोनपञ्चाशत्तमः पटलः ।।



१. स्थिरो ख० ।
२. उल्लयान्मणिपूरस्था ख० ।
३. इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे लाकिनीशस्तवनं नाम पञ्चाशत्तमः पटलः ।।

## पञ्चाशत्तमः पटलः

आनन्दभैरवी उवाच—

नाथ कान्त प्रवक्ष्यामि सिद्धसाधनमुत्तमम् ।
येन साधनमात्रेण नरो योगी भवेद् ध्रुवम् ॥ १ ॥
त्रिवीरं[1] त्रिविधं प्रोक्तमुत्तमाधममध्यमम् ।
तत्रैव त्रिविधं [2]सङ्गमूर्ध्वपातालभूतलम् ॥ २ ॥
[3]सप्त ऊर्ध्वं तथा नाथ सप्त भूतलमेव च ।
सप्त पातालमेवं हि सप्तत्रिसप्तसंख्यकम् ॥ ३ ॥
तन्मध्ये त्रिविधं भावं दिव्यवीरपशुक्रमम् ।
दिवि तिष्ठन्ति देवाश्च वीरास्तिष्ठन्ति भूतले ॥ ४ ॥
पशवः सन्ति पाताले क्रमशः क्रमशः प्रभो ।
सर्वत्र त्रिगुणच्छन्नं[4] सत्त्वरजस्तमादिकम् ॥ ५ ॥
सत्त्वगुणं स्वर्गमध्ये सर्वे [5]विष्णुपरायणाः ।
[6]तदा सर्वे दृढाः स्वर्गे भूतले च रजोगुणम् ॥ ६ ॥
ब्रह्मसेवापराः सर्वे ब्रह्मज्ञानिन एव च ।
पाताले शिवसेवाश्च[7] शिवरूपिण एव च ॥ ७ ॥

---

१. शरीरम् ख० ।
२. प्रोक्तमुत्तमाधममध्यमम् ख० ।
३. सप्त ऊर्ध्वमित्यतः पशुक्रममिति यावत् 'ख' पुस्तके नास्ति ।
४. द्विगुणाच्छन्नं ख० ।
५. विष्णुसेवापरायणे ख० ।
६. सदा ख० ।
७. शिवसेवी च शिवरूपी स एव च ख० ।

तमोगुणात् पशोर्भावं तमोदृष्टिं समाप्य च।
ततो विहाय तज्ज्ञानं वीरो भवति साधकः ॥ ८ ॥
वीरभावे ज्ञानदृष्टिं ब्रह्मसिद्धिं समाप्य च।
देवता भवति क्षिप्रं सत्त्वे निर्मलभावके ॥ ९ ॥
स्थिरो भूत्वा महादेवो भवत्येव क्रमेण तु।
आकाशगमिनी सिद्धिः क्रमशो भवति ध्रुवम् ॥ १० ॥
मूलाधारस्य चाधो वै पातालतलवासिनः।
तदूर्ध्वे ब्रह्मलोके तु भूतलादिनिवासिनः ॥ ११ ॥
तदूर्ध्वे सत्त्वनिलयं स्वाधिष्ठानं हि दैवतम्।
विधिविद्याप्रकाशश्च वरदेवस्य सम्पदम् ॥ १२ ॥
तदूर्ध्वे सर्वरूपञ्च सर्वज्ञानाश्रयं परम्।
परस्थानं महादेव मणिपुरं मनोहरम् ॥ १३ ॥
रुद्रशक्त्यात्मकं चक्रं श्रीविद्याचक्रमण्डलम्।
लाकिनी परमा माया महारुद्रेण सेविता ॥ १४ ॥
मणिपुरप्रकाशाय रुद्रशक्तिर्विभाति च।
सर्वज्ञानानन्दमयं सर्वसिद्धिप्रकारकम्[२] ॥ १५ ॥
महासूक्ष्मशब्दमयं[३] कुण्डलं[४] ज्ञानसाधनम्।
यस्याः साधनमात्रेण योगी भवति भैरव ॥ १६ ॥
प्रकार[५] एव सेवायां महासिद्धीश्वरो भवेत्।
सर्वे च पशवः सन्ति तलवत्[१] भूतले नराः ॥ १७ ॥

१. तु ख०।
२. प्रकाशकम् ख०।
३. शब्दलयम् ख०।
४. कुण्डली ख०।
५. प्रकारत्रय ख०।

तेषां ज्ञानप्रकाशाय वीरभावः प्रकाशितः ।
वीरभावं मुदा[1] प्राप्य क्रमेण देवता भवेत् ॥ १८ ॥

यत्काले वीरभावादिसिद्धिं प्राप्नोति मानवः ।
तत्कालनिर्णयं वक्ष्ये वीराद्देवत्वमाप्नुयात् ॥ १९ ॥

मासेनाकर्षिणी सिद्धिर्मासेन[2] वाक्पतिर्भवेत् ।
मासत्रयेण संयोगाज्जायते सुरवल्लभः ॥ २० ॥

एवं चतुष्टये मासि भवेद् दिक्पालगोचरः ।
पञ्चमे पञ्चबाणः स्यात् षष्ठे रुद्रो न संशयः ॥ २१ ॥

वीरभावं समाश्रित्य सर्वदा योगमाश्रयेत् ।
पशोरधीनं देवेश वीरभावं मनोहरम् ॥ २२ ॥

[3]वीराधीनं- दिव्यभावं दिव्येन रुद्रतर्पणम् ।
[4]रुद्रदर्शनमात्रेण जीवन्मुक्तो भवेद् ध्रुवम् ॥ २३ ॥

जीवन्मुक्तिपदं प्राप्य किन्न सिध्यति भूतले ।
मनोनिवेशमाकृत्य पशुभावाश्रितो नरः ॥ २४ ॥

वीरभावं समाश्रित्य चादौ योगं समाश्रयेत् ।
सर्वदा चाभ्यसेद् योगं मन्त्रन्यासपरायणः ॥ २५ ॥

[5]योगसिद्धिं ज्ञानसिद्धिं मोक्षसिद्धिं ततः परम् ।
यदि मोक्षमिहेच्छन्ति पशवः शास्त्रमोहिताः ॥ २६ ॥

---

१. सदा ख० ।

२. च ख० ।

३. वीरो योगी भवेद्ध्रुवम् ख० ।

४. योगाधीनं दिव्यभावं दिव्येन रुद्रदर्शनम् ख० पुस्तके अधिकः पाठः ।

५. मन्त्रसिद्धि योगसिद्धि ख० ।

[1]समज्ञानं वीरभावमाश्रित्य योगमाप्नुयात् ।
योगाभ्यासस्य चाद्ये च[2] शरीरं परिशोधयेत् ॥ २७ ॥
आदौ पञ्चामराः[3] कार्याः सर्वकार्यनिराश्रयाः ।
केवलं योगमाश्रित्य सदा पञ्चामरा[4] भवेत् ॥ २८ ॥
द्विप्रकारं [5]महाकालपञ्चामराभिधानकम् ।
नेती दन्ती तथा धौती [6]नेउली क्षालनं तथा ॥ २९ ॥
एकप्रकारमेवं हि कथितं परमेश्वर ।
दन्ती नेती तथा धौति नेउली क्षालनक्रमात् ॥ ३० ॥
एवं वा नित्यमाकुर्याद् योगसिद्धिसमृद्धये ।
[7]पञ्चामरासाधनादिकाले कुर्यान्निजक्रियाम् ॥ ३१ ॥
ओषधी [8]पञ्चमं ग्राह्यं पञ्चयोगसुसिद्धये ।
विल्वपत्रं जयापत्रं तुलसीश्यामपत्रकम् ॥ ३२ ॥
निर्गुण्डीपत्रमेवं तु [9]दूर्वाग्रन्थिरसेन च ।
एषां प्रकृतिनामानि वक्ष्यामि शृणु शङ्कर ॥ ३३ ॥
[10]अमरा विल्वपत्रं तु चामरा विजयादलम् ।
[11]अमरलता ग्रन्थिदूर्वा निर्गुण्डी चामरेश्वरी ॥ ३४ ॥

---

१. समज्ञानं वीरभावञ्चाश्रित्य ख० ।
२. वै ख० ।
३. पञ्चासवाः ख० ।
४. पञ्चासवो ख० ।
५. पञ्चासवा ख० ।
६. कुलनं तथा ख० ।
७. पञ्चासवा ख० ।
८. पञ्चकम् ख० ।
९. द्रव्यग्रन्थि ख० ।
१०. अमरी ख० ।
११. वासवेश्वरी ख० ।

अमरा श्यामतुलसी पञ्चामरास्तरूद्भवाः ।
कथिता योगसिद्ध्यर्थे तत्प्रमाणं क्रमात् शृणु ॥ ३५ ॥
पञ्चतोलकमानं तु विजयापत्रमेव च ।
अन्येषां तोलकं चैकं संशोध्य भक्षणं चरेत् ॥ ३६ ॥
एतद्भक्षणमात्रेण पञ्चयोगे जयी भवेत् ।
पुनस्तेषां महाकाल मनुं वक्ष्यामि तत्त्वतः ॥ ३७ ॥
सकलं चामरायोगं मन्त्रेणानेन भक्षयेत् ।
तातद्वयं समुद्धृत्य ऋयुगं तदनन्तरम् ॥ ३८ ॥
विसर्गबिन्दुसंयुक्तं तत्पश्चादमृतामुखि ।
मरणं [1]मारयद्वन्द्वं योगसिद्धिं ततः परम् ॥ ३९ ॥
देहि देहि पदस्यान्ते स्वाहान्तं मन्त्रमुत्तमम् ।
एतन्मन्त्रेण चोत्पाट्य मन्त्रयित्वा [2]प्रभक्षयेत् ॥ ४० ॥
एतत्काण्डस्य [3]मन्त्रं तु तत्रैव परियोजयेत् ।
निर्गुण्डीमन्त्रराजं तु शृणु वक्ष्यामि भैरव ॥ ४१ ॥
कामबीजत्रयं पश्चात् कालीबीजत्रयं तथा ।
सर्वयोगं ततः पश्चाद् साधय-द्वयमेव च ॥ ४२ ॥
[4]अमृत त्वं मयि शक्तं समर्पयद्वयं ततः ।
स्वाहान्तमनुना चाथ[5] चोत्पाट्य भक्षणं चरेत् ॥ ४३ ॥
विल्वपत्रं प्रगृह्णीयात्तन्मन्त्रं शृणु [6]भैरव ।
लज्जाबीजं कामबीजं शक्तिबीजं ततः परम् ॥ ४४ ॥

---

१. हावयद्वन्द्वं ख० ।
२. प्रवन्दयेत् ख० ।
३. मन्त्राणं ख० ।
४. अमृतत्वे मयिशब्दं ख० ।
५. नाथ ! ख० ।
६. कौलिक ख० ।

ब्रह्मबीजं ततः पश्चाद् गौरसुन्दरि चावदेत् ।
मां स्थापय महायोगे पालयद्वयमेव च ॥ ४५ ॥
शङ्करप्रेमगलिते[1] स्वाहान्तं मन्त्रमुच्चरेत् ।
तुलसीपत्रं संशोध्य चोत्पाद्य मनुनाऽमुना ॥ ४६ ॥
विष्णुप्रिये महामाये[2] शिवयोगप्रसाधिनि ।
मायाच्छेदं ततः पश्चात् संसारं [3]हारयद्वयम् ॥ ४७ ॥
अमरत्वं देहि देहि स्वाहान्तं प्रणवादिकम् ।
शृणु श्रीविजयापत्रशोधनं हि चतुर्विधम् ॥ ४८ ॥
[4]चतुर्वर्णं स्वमन्त्रेण परिशोध्य कुलाकुलम् ।
तत्क्रमं परिवक्ष्यामि सावधानाऽधारय ॥ ४९ ॥
[5]प्रणवं पूर्वमुच्चार्य देवीबीजं ततः परम् ।
स्वाहान्तं मन्त्रमुद्धृत्य संशोध्य भक्षयेत् सुधीः ॥ ५० ॥
एकीकृत्य महादेव चैतन्मन्त्रेण मन्त्रयेत् ।
अमृतेऽमृतशब्दान्ते तद्भवे पदं ततः ॥ ५१ ॥
श्रीबीजं मन्मथं बीजं लज्जाबीजद्वयं क्रमात् ।
क्रमेण च समुद्धृत्य विजये ज्ञानसुन्दरि ॥ ५२ ॥
योगमोक्षप्रदे पश्चात् कायशोधिनि पावनि ।
मम पश्चात् कायसिद्धिं देहि देहि ततः परम् ॥ ५३ ॥
अमृतवर्षिणि शब्दान्ते अमृतं तदनन्तरम् ।
आकर्षयद्वयं पश्चात् सिद्धिं देह्यनलप्रिये[6] ॥ ५४ ॥

---

१. गलितः ख० ।
२. महाप्रिये ख० ।
३. हावय ख०
४. चतुर्वर्णषु मन्त्रेण ख० ।
५. एतत्श्लोकद्वयं अमृतवर्षिणिशब्दान्ते इत्यतः प्राक् 'ख' पुस्तके पठ्यते ।
६. देह्यनलप्रिया ख० ।

एतन्मन्त्रेण संशोध्य सावधानेन भक्षयेत् ।
न्यूनाधिकं न कर्तव्यं शनैरभ्यासमाचरेत् ॥ ५५ ॥

यावत् प्रमाणभक्षः स्यात् प्रमाणे चाधिकं न च ।
एतद्भोजनमाकृत्य पयःपानं [1]समाचरेत् ॥ ५६ ॥

तत्प्रकारं शृणु प्राणनाथ ईश्वर शङ्कर ।
मरीचबीजं संशोध्य दुग्धशोधनमाचरेत् ॥ ५७ ॥

[2]एतत्प्रकारं द्विविधं तत्प्रकारं वदाम्यहम् ।
वाञ्छाकल्पतरोर्मूले गुरुं ध्यात्वा पुनः पुनः ॥ ५८ ॥

मानसोपचारद्रव्यैः पूजयित्वा विधानतः ।
मरीचं तोलकार्धं तु शोधयेन्मनुनामुना ॥ ५९ ॥

श्रीकृष्णबीजमुद्धृत्य पृथ्वीबीजत्रयं तथा ।
घोरघोरतरे पश्चान्मरीचकुलसुन्दरि ॥ ६० ॥

नीला त्वं भवदेहे मे शरीरं शोधयद्वयम् ।
द्विठान्तोऽयं मनुः प्रोक्तस्तत्पश्चाद् दुग्धशोधनम् ॥ ६१ ॥

आदौ मरीचं भुक्त्वा तु दुग्धपानं [3]महाबलम् ।
चर्वयित्वा मरीचं तु दुग्धपानं महाबलम् ॥ ६२ ॥

कृष्णबीजं समुद्धृत्य कामेश्वरीमनुं ततः ।
[4]शिवबीजद्वयं पश्चात् [5]कृष्णगोवसवासिनी ॥ ६३ ॥

---

१. समारभेत् ख० ।
२. प्रमाणमिति ख० ।
३. महाफलम् ख० ।
४. त्रयम् ख० ।
५. गोरस ख० ।

योगविग्रहमुद्धृत्य मम कामप्रसाधिनि ।
तत्पश्चाद् [1]योगसिद्धीनामीश्वरि क्षेत्रवासिनि[2] ॥ ६४ ॥
शरीरं वसमन्ते च चालयद्वयमेव च ।
विघ्नान् वारययुग्मं तु स्वाहान्तोऽयं महामनुः ॥ ६५ ॥
द्वादशवारमुच्चार्य चाथवा पञ्चवारकम् ।
वारत्रयं [3]मुदा शोध्य सर्वत्रायं विधिः स्मृतः ॥ ६६ ॥
यदि पिबेत् खेचरत्वं तथा दुग्धं द्विपादकम् ।
यदि चेत् केवलं दुग्धं तदा प्रस्थं चतुर्दश ॥ ६७ ॥
लघ्वाहारी महाज्ञानी पञ्चमादिविरागवित् ।
मणिपुरे मनोयोगं समाकृत्यामरो भवेत् ॥ ६८ ॥
चतुर्वर्गः करे तस्य यो मणेः पीठमाश्रयेत् ।

श्रीआनन्दभैरव[4] उवाच—

मणिपुरभेदनार्थं मनोयोगसुसिद्धये ॥ ६९ ॥
खेचरादिमहायोगसिद्धये सर्वसिद्धये ।
मृत्युञ्जयस्य देवस्य रुद्रशक्त्याश्च दर्शनात् ॥ ७० ॥
तथा पीठस्थिरार्थाय कालजालवसाय च ।
सहस्रनामबीजानि चाष्टोत्तरशतानि च ॥ ७१ ॥
मृत्युञ्जयस्य लाकिन्याः स्तोत्रं [5]मकारकूटकम् ।
कथयस्व [6]वरारोहे यदि स्नेहोऽस्ति मां प्रति ॥ ७२ ॥

---

१. ईश्वरी ख० ।
२. वासिनी ख० ।
३. मृदा ख० ।
४. आनन्दभैरवी उवाच ख० ।
५. परमदुर्लभम् ख० ।
६. वरावोहे ख० ।

ज्ञानदे परमेशानि शरीरं मम रक्षतु ॥ ७३ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने [1]सिद्धमन्त्रप्रकरणे भैरवभैरवीसंवादे मणिभेदप्रकाशो नाम पञ्चाशत्तमः पटलः ॥



१. सिद्धिमन्त्र..............षट्चक्रप्रकाशे..........मणिपूरभेदप्रकाशे एकपञ्चाशत्तमः पटलः । ख० ।

# एकपञ्चाशत्तमः पटलः

आनन्दभैरवी उवाच—

अथ सम्भेदनार्थाय वक्ष्ये षट्पङ्कजस्य च ।
महारुद्रस्य देवस्य[1] श्रीश्रीमृत्युञ्जयस्य च ॥ १ ॥
लाकिनीशक्तिसहितं सहस्रनाममङ्गलम् ।
अष्टोत्तरशतव्याप्तं निगूढं भव[2] सिद्धये ॥ २ ॥
धारयित्वा पठित्वा च श्रुत्वा वा नाममङ्गलम् ।
शृणुष्व परमानन्द योगेन्द्र चन्द्रशेखर ॥ ३ ॥
तवाह्लादप्रणयनात् सर्वसम्पत्तिप्राप्तये[3] ।
मणियोगसुसिद्ध्यर्थं सावधानाऽवधारय ॥ ४ ॥

[4]अष्टोत्तरसहस्रनाममङ्गलस्य कहोडऋषि-र्गायत्रीच्छन्दो महारुद्रमृत्युञ्जयलाकिनीसरस्वतीदेवता सर्वाभीष्टशचीपीठयोगसिद्ध्यर्थे विनियोगः ॥

ॐ मृत्युञ्जय रुद्राहि लाकिन्यादि सरस्वती ।
मृत्यु[5]जेता महारौद्री महारुद्रसरस्वती ॥ ५ ॥
महारौद्रो मृत्युहरो महामणिविभूषिता ।
महादेवो महावक्त्रो महामाया महेश्वरी ॥ ६ ॥

---

१. च ख०
२. तव ख०
३. प्रियाप्तये ख०
४. अस्य अष्टोत्तरशतसहस्रनाममङ्गलस्य महाविष्णुः ········मणिपीठयोनिसिद्ध्यर्थे विनियोगः । 'ख'
५. मृत्युतेजो ख० ।

महावीरो महाकालो महाचण्डेश्वरी[1] स्नुषा ।
[2]महावातो महाभेदो वीरभद्रा महातुरा ॥ ७ ॥
महाचण्डेश्वरो मीनो मणिपूरप्रकाशिका ।
महामत्तो [3]महारात्रो महावीरासनस्थिता ॥ ८ ॥
मायावी मारहन्ता च मातङ्गी मङ्गलेश्वरी ।
मृत्युहारी मुनिश्रेष्ठा मनोहारी मनोयवा ॥ ९ ॥
[4]मण्डलस्थो मनीलाङ्गो मान्या मोहनमौलिनी ।
मत्तवेशो महामाणो [5]महाबला महालया ॥ १० ॥
मारी हारी महामारी मदिरामत्तगामिनी ।
महामायाश्रयो मौनी [6]महामाया मरुत्प्रिया ॥ ११ ॥
[7]मुद्राशी मदिरापी च मनोयोगा महोदया ।
मांसाशी मीनभक्षश्च मोहिनी मेघवाहना ॥ १२ ॥
मानभङ्गप्रियो मान्या[8] महामान्यो महाबला ।
महाबाणधरो[9] मुख्यो महाविद्या महीयसी ॥ १३ ॥
महाशूलधरोऽनन्तो[10] महाबली महाकुला ।
मलयाद्रिनिवासी च [11]मतिर्मलासनप्रिया ॥ १४ ॥

१. चण्डेश्वरीश्वराः ख० ।
२. महारात्रो महाभद्रो वीरभद्रा महान्तरा ख० ।
३. महामत्ता ख ।
४. मण्डलस्थो मलानन्दो ख० ।
५. महावालो महावाला ख० ।
६. महानन्दा ख० ।
७. मुद्रापी ख० ।
८. मान्यो ख० ।
९. धरामुख्या ख० ।
१०. मत्ता महावाणी ख० ।
११. महिमा चानलप्रिया ख० ।

मयापतिर्महारुद्रो मरणाहतकारिणी[1] ।
मालाधारी [2]शङ्खमाली मञ्जरी मांसभक्षिणी ॥ १५ ॥
महालक्षणसम्पन्नो महालक्षणलक्षणा ।
महाज्ञानी महावेगी मौषली मुषलप्रिया ॥ १६ ॥
[3]महोरुयो मालिनीनाथो मन्दराद्रिनिवासिनी ।
[4]मौनीनामन्तरस्थश्च मानभङ्गा [5]मनःस्विनी ॥ १७ ॥
महाविद्यापतिर्मध्यो [6]मध्ये पर्वतवासिनी ।
मदिरापो मन्दहरो मदनामदनासना ॥ १८ ॥
मदनस्थो मदक्षेत्रो महाहिमनिवासिनी ।
महान् महात्मा माङ्गल्यो महामङ्गलधारिणी ॥ १९ ॥
[7]महाहीनशरीरश्च [8]मनोहरतदुद्भवा ।
मायाशक्तिपतिर्मोहा[9] महामोहनिवासिनी ॥ २० ॥
महाविद्यो निर्मलात्मा [10]महतामशुचिस्थिता ।
मत्तकुञ्जरपृष्ठस्थो मत्तकुञ्जरगामिनी ॥ २१ ॥
मकरो मरुतानन्दो [11]माकरी मृगपूजिता ।
[12]मणीपूज्या मनोरूपी मेदमांसविभोजिनी ॥ २२ ॥

---

१. कामिनी ख० ।
२. शङ्खमालो ख० ।
३. महाक्षो ख० ।
४. मुनीनाश्च ख० ।
५. मलम्बिनी ख० ।
६. मध्य ख ।
७. मायाहीन शरीरश्च ख० ।
८. मनोहर तनूद्भवा ख० ।
९. मोहो ख० ।
१०. महतामायुषि स्थितिः ख० ।
११. मृकु ख० ।
१२. मुनिपुज्यो ख० ।

[1]महाकामी महाधीरो महामहिषमर्दिनी ।
महिषासुरबुद्धिस्थो महिषासुरनाशिनी ॥ २३ ॥
महिषस्थो [2]महेशस्थो मधुकैटभनाशिनी ।
मधुनाथश्च मधुपो मधुमांसादिसिद्धिदा ॥ २४ ॥
महाभैरवपूज्यश्च महाभैरवपूजिता ।
महाकान्तिप्रियानन्दो महाकान्तिस्थितामरा ॥ २५ ॥
मालाकोटिधरो [3]मालो मुण्डमालाविभूषिता ।
मण्डलज्ञाननिरतो मणिमण्डलवासिनी ॥ २६ ॥
[4]महाविभूतिक्रोधस्थो मिथ्यादोषसरस्वती ।
मेरुस्थो मेरुनिलयो [5]मैनाकानुजरूपिणि ॥ २७ ॥
महाशैलासनो [6]मेरुमोहिनी मेघवाहिनी ।
मञ्जुघोषो मञ्जुनाथो [7]मोहमुद्गरधारिणी ॥ २८ ॥
[8]मेढ्रस्थो मणिपीठस्थो मूलरूपा मनोहरा ।
मङ्गलार्थो महायोगी [9]मत्तमेहसमुद्भवा ॥ २९ ॥
[10]मतिस्थितो मनोमानो मनोमाता महोन्मनी ।
मन्दबुद्धिहरो मृत्युर्मृत्युहन्त्री मनःप्रिया ॥ ३० ॥

---

१. महाकामो ख० ।
२. महिषारिः ख० ।
३. मायी मृत्युमाला ख० ।
४. कोधस्थामिथ्यादोष ख० ।
५. मैनाकालय ख० ।
६. मेदिनीमेघवाहना ख० ।
७. मोहमुग्धधरासिनी ख० ।
८. मेदस्थो ख०
९. मत्तदेह ख० ।
१०. मतिस्थाता मनोमादी ख० ।

महाभक्तो महाशक्तो [1]महाशक्तिर्मदातुरा ।
मणिपुरप्रकाशश्च मणिपुरविभेदिनी ॥ ३१ ॥
[2]मकारकूटनिलयो माना मानमनोहरी ।
माक्षरो मातृकावर्णो मातृकाबीजमालिनी ॥ ३२ ॥
महातेजा महारश्मिर्मन्युगः[3] स्यान्मधुप्रिया ।
मधुमांससमुत्पन्नो मधुमांसविहारिणी ॥ ३३ ॥
मैथुनानन्दनिरतो [4]मैथुनालापमोहिनी ।
मुरारिप्रेमसन्तुष्टो [5]मुरारिकरसेविता ॥ ३४ ॥
माल्यचन्दनदिग्धाङ्गो मालिनीमन्त्रजीविका ।
मन्त्रजालस्थितो मन्त्री मन्त्रिणां मन्त्रसिद्धिदा ॥ ३५ ॥
मन्त्रचैतन्यकारी च मन्त्रसिद्धिप्रिया सती ।
महातीर्थप्रियो मेषो[6] महासिंहासनस्थिता ॥ ३६ ॥
[7]महाक्रोधसुसम्पन्नो महती बुद्धिदायिनी ।
मरणज्ञानरहितो महामरणनाशिनी ॥ ३७ ॥
मरणोद्भूतहन्ता च महामुद्रान्विता मुदा ।
महामोदकरो मारो मारस्था मारनाशिनी ॥ ३८ ॥
[8]महाहेतुहरो हर्ता महापुरनिवासिनी ।
महाकौलिकपालश्च [9]महादैत्यनिवारिणी ॥ ३९ ॥

---

१. मदान्तरा ख० ।
२. मंकार······मणिमाला ख० ।
३. महातेजो······मन्दहास्या ख० ।
४. मैथुनाह्लादहारिणी ख० ।
५. स्मरारि ख० ।
६. मेचो ख० ।
७. समुत्पन्नो ख० ।
८. मार्गो ख० ।
९. निवासिनी ख० ।

मार्तण्डकोटिकिरणो मृतिहन्त्री मृतिस्थिता ।
[1]महाशैलोमलो मायी महाकालगुणोदया ॥ ४० ॥
महाजयो महारुद्रो महारुद्रारुणाकरा ।
[2]मनोवर्णमृजोमाख्यो मुद्रा तरुणरूपिणी ॥ ४१ ॥
मुण्डमालाधरो [3]मार्यो मार्यपुष्पमृजामनी ।
मङ्गलप्रेमभावस्था[4] महाविद्युत्प्रभाचला ॥ ४२ ॥
[5]मुद्राधारी मतस्थैर्यो मतभेदप्रकाशिणी ।
महापुराणवेत्ता च महापौराणिकामृता ॥ ४३ ॥
मौनविद्यो [6]महाविद्या महाघननिवासिनी ।
मघवा माघमध्यस्था[7] महासैन्या महोरगा ॥ ४४ ॥
महाफणिधरो मात्रा[8] मातृका मन्त्रवासिनी ।
महाविभूतिदानाढ्यो मेरुवाहनवाहना ॥ ४५ ॥
महाह्लादो महामित्रो महामैत्रेयपूजिता ।
मार्कण्डेयसिद्धिदाता मार्कण्डेयायुषिस्थिता ॥ ४६ ॥
मार्कण्डेयो मुहुः[9] प्रीतो मातृका मण्डलेश्वरी ।
[10]मानसंस्थो मानदाता मनोधारणतत्परा ॥ ४७ ॥

---

१. शैलासनो मायी ख० ।
२. मनोवर्त्मभृजोमाख्यो ख० ।
३. माद्या मा च पुष्पमृजामला ख० ।
४. भावस्थो ख० ।
५. मात्राधारी मतेस्थैर्यो ख० ।
६. महामन्त्री ख० ।
७. मासस्थो महानैत्या ख० ।
८. मायी……यन्त्रवासिनी ख० ।
९. मृकुप्रीतो ख० ।
१०. मानसस्थो ख० ।

मयदानवचित्तस्थो मयदानवचित्रिणी ।
महागुणधरानन्दो [1]महालिङ्गविहारिणी ॥ ४८ ॥
महेश्वरस्थितो मूलो मूलविद्याकुलोदया ।
मायापो मोहनोन्मादी[2] महागुरुनिवासिनी ॥ ४९ ॥
महाशुक्लाम्बरधरो मलयागुरुधूपिता ।
[3]मधूपिनीमधूल्लासो माध्वीरससमाश्रया ॥ ५० ॥
महागुरुर्महादेहो महोत्साहा [4]महोत्पला ।
मध्यपङ्कजसंस्थाता मध्याम्बुजनिवासिनी[5] ॥ ५१ ॥
मारीभयहरो मल्लो मल्लग्रहविरोधिनी ।
[6]महाकुण्डलयोन्मादी मदघूर्णितलोचना ॥ ५२ ॥
[7]महासद्योजातकालो महाकपिलवर्तिनी ।
[8]मेघवाहो महावक्त्रो मनसामणिधारिणी ॥ ५३ ॥
मरणाश्रयहन्ता च [9]महागुर्वीगणस्थिता ।
महापद्मस्थितो मन्त्रो[10] मन्त्रविद्यानिधीश्वरी ॥ ५४ ॥
मकरासनसंस्थाता[11] महामृत्युविनाशिनी ।
मोहनो मोहिनीनाथो मत्तन[12]र्तनवासिनी ॥ ५५ ॥

---

१. महानिन्दा ख० ।
२. मोहनन्यासी ख० ।
३. मधुपेशो ख० ।
४. महोल्वणा ख० ।
५. विनोदिनी ख० ।
६. मण्डलयोन्यादिः ख० ।
७. महासह्यो मत्तकालो ख० ।
८. मेषावहो ख० ।
९. महागुरू ख० ।
१०. मन्त्री मन्त्रविद्याविधीश्वरी ख० ।
११. संस्थश्च ख० ।
१२. मण्डल ख० ।

महाकाल[1]कुलोल्लासी महाकामादिनाशिनी ।
मूलपद्मनिवासी च महामूलकुलो[2]दया ॥ ५६ ॥

मासाख्यो[3] मासनिलया मङ्गलस्था महागुणा ।
मायाच्छन्नतरो[4] मीनो मीमांसागुणवादिनी ॥ ५७ ॥

मीमांसाकारको मायी मार्जारसिद्धिदायिनी ।
मेदिनीवल्लभक्षेमो मेदिनीज्ञानमोदिनी[5] ॥ ५८ ॥

मौषलीशो [6]मृषार्थस्थो मनःकल्पितकेशरी ।
मनसः श्रीधरो जापो [7]मन्दहाससुशोभिता ॥ ५९ ॥

मैनाको मेनकापुत्रो मायाच्छन्ना [8]महाक्रिया ।
महाक्रिया[9] च लोमाण्डो मण्डलासनशोभिता ॥ ६० ॥

मायाधारणकर्ता च महाद्वेषविनाशिनी ।
[10]मुक्तकेशी मुक्तदेहो मुक्तिदा मुक्तिमानिनी ॥ ६१ ॥

मुक्ताहारधरो मुक्तो मुक्तिमार्गप्रकाशिनी ।
महामुक्ति क्रियाच्छन्नो[11] महोच्चगिरिनन्दिनी ॥ ६२ ॥

---

१. कुलश्रीशो ख ।
२. फलोदया ख० ।
३. माननिलयो । ख०
४. हरो······वासिनी ख० ।
५. भेदिनी ख० ।
६. मुषार्थस्थो ख० ।
७. मन्दाहहासशोभिता ख० ।
८. महत्क्रिया ख० ।
९. महाक्रियश्च लोमार्णो ख० ।
१०. मुक्ताकाशी मुक्तदेहो ख० ।
११. क्रमाच्छन्नो महागिरिनिवासिनी ख० ।

मूषलाद्यस्त्रहन्ता[1] च महागौरीमनःक्रिया ।
महाधनी महामानी मनोमत्ता[2] मनोलया ॥ ६३ ॥
महारणगतः [3]सान्तो महावीणाविनोदिनी ।
महाशत्रुनिहन्ता च महास्त्रजालमालिनी ॥ ६४ ॥
[4]शिवो रुद्रो बलीशानी कितवामोदवर्द्धिनी ।
[5]चन्द्रचूडाधरो वेदो मदोन्मत्ता महोज्ज्वला ॥ ६५ ॥
विगलत्कोटिचन्द्राभो विधुकोटिसमोदया ।
अग्निज्वालाधरो वीरो ज्वालामालासहस्रधा ॥ ६६ ॥
भर्गप्रियकरो धर्मो महाधार्मिकतत्परा ।
धर्मध्वजो धर्मकर्ता धर्मगुप्तिप्रसूत्त्वरी ॥ ६७ ॥
महाविद्रुमपूरस्थो विद्रुमाभायुतप्रभा ।
पुष्पमालाधरो मान्यः शत्रूणां कुलनाशिनी ॥ ६८ ॥
[6]कोजागरो विसर्गस्थो बीजमालाविभूषिता ।
[7]बीजचन्द्रो बीजपुरो बीजाभा विघ्ननाशिनी ॥ ६९ ॥
[8]विशिष्टो विधिमोक्षस्थो वेदाङ्गपरिपूरिणी ।
किरातिनीपतिः श्रीमान् विज्ञाविज्ञजनप्रिया ॥ ७० ॥
[9]वर्धस्थो वर्धसम्पन्नो वर्णमालाविभूषिता ।
महाद्रुमगतः शूरो विलसत्कोटिचन्द्रभा ॥ ७१ ॥

---

१. हस्तश्च······प्रिया ख० ।
२. मनोन्मत्ता ख० ।
३. मान्तो ख० ।
४. महारुद्रो महाशाल ख० ।
५. चन्द्रचूणाधरो इत्ययः विद्रुमाभायुतप्रभा पर्यन्तः पाठः ख पुस्तके नास्ति ।
६. कोजागरा विसर्गस्था इति ख० ।
७. बीजचन्द्रा ख० ।
८. विशिष्टा विधिमोक्षस्था ख० ।
९. वर्गस्थो वर्गसम्पर्को वर्गमालाविभूषिता ख ।

महाकुमारनिलयो महाकामकुमारिका ।
कामजालक्रियानाथो [1]विकला कमलासना ॥ ७२ ॥

खण्डबुद्धिहरो भावो भवतीति [2]दुरासना ।
असंख्यको रूपसंख्यो नामसंख्यादिपूरणी ॥ ७३ ॥

[3]सद्मनाद्यमनाः कोषकिङ्किणीजालमालिनी ।
[4]चन्द्रायुतमुखाम्भोजो विभायुतसमानना ॥ ७४ ॥

कालबुद्धिहरो [5]बालो भगवत्यम्बिकाण्डजा ।
[6]मुण्डहस्तश्चातुराद्यः विवादरहिताद्वृता ॥ ७५ ॥

पञ्चमाचारकुशलो महापञ्चमलालसा ।
[7]विकारशून्यो दुर्धर्षो द्विपदा मानुपक्रिया ॥ ७६ ॥

मयदानवकर्मस्थो विधातृकर्मबोधिनी ।
कलिकालक्रियारूढो वायवीघर्घरध्वनिः ॥ ७७ ॥

सर्वसञ्चारकर्ता च सर्वसञ्चारकर्त्रिका ।
मन्दमन्दगतिप्रेमा मन्दमन्दगतिस्थिता ॥ ७८ ॥

[8]साट्टहासो विधुकला चाघोराघोरयातना ।
महानरकहर्ता च [9]नरकादिविपाकहा ॥ ७९ ॥

---

१. विफला ख० ।
२. भवभीति दुरापहा ख० ।
३. कम्बलाद्यासनः ख ।
४. चन्द्रयुक्तमुखाम्भोजो ख० ।
५. कालो ख० ।
६. अण्डस्थको अण्डवाह्यस्थो ख० ।
७. वूरन्ये ख० । ?
८. सादृहासो विधुकलशः ख० ।
९. विनाशिनी ख० ।

पञ्चरश्मिसमुद्भूतो [1]नगादिबलघातिनी ।
[2]गरुडासनसंपूज्यो गरुडप्रेमवर्धिनी ॥ ८० ॥

अश्वत्थवृक्षनिलयो वटवृक्षतलस्थिता ।
[3]चिराङ्गो प्रथमाबुद्धिः प्रपञ्चसारसङ्गतिः ॥ ८१ ॥

स्थितिकर्ता स्थितिच्छाया विमदा च्छत्रधारिणी ।
दाडिमाभासकुसुमो दाडिमोद्भवपुष्पिका ॥ ८२ ॥

[4]द्राढ्यो द्रवीभरतिका रतिकालापवर्धिनी ।
रत्नगर्भो रत्नमाला रत्नेश्वर इवागतिः ॥ ८३ ॥

[5]प्रसिद्धः पावनी पुच्छा पुच्छसुस्थः परापरा ।
खेचरी खेचरः [6]स्वस्थो महाखड्गधरा जया ॥ ८४ ॥

किशोरभावखेलस्थो [7]विखनादिप्रकारिका ।
महाशब्दप्रकाशश्च महाशब्दप्रकाशिका ॥ ८५ ॥

चारुहासो विपद्हन्ता शत्रुमित्रगणस्थिता ।
वज्रदण्डधरो व्याघ्रो वियत्खेलनखञ्जना ॥ ८६ ॥

गदाधरः [8]शीलधारी शशिकूर्परगावला ।
वसनासनकारी च वसनावसनप्रिया ॥ ८७ ॥

महाविद्याधरो गुप्तो विशिष्टगोपनक्रिया ।
[9]गुप्तगीतागायनस्थो गुप्तशास्त्रगलप्रदा ॥ ८८ ॥

---

१. रणघातिनी ख० ।
२. संयुक्ता ख० ।
३. चित्राङ्ग ख ।
४. द्राढचा द्रविणदेशस्था ख० ।
५. प्रसिद्धा पावनी···सुस्थ सर्गपराचरा ख० ।
६. सुस्थो···धराध्यया ख० ।
७. विखलादि ख० ।
८. शूलधारी ख० ।
९. गुप्तगीतो ख० ।

योगविद्यापुराणश्च यागविद्या विभाकला ।
एककालो द्विकालश्चात्र[1] कालफलाम्बुजा ॥ ८९ ॥
अष्टादशभुजो रौद्रो भुजगा विघ्ननाशिनी ।
विद्यागोपनकारी च विद्यासिद्धिप्रदायिनी ॥ ९० ॥
विजयानन्दगो मन्दो महाकालमहेश्वरी ।
[2]भूतिदानरतो मार्गो महद्गीताप्रकाशिनी ॥ ९१ ॥
[3]केशाद्यावेशसन्तानो मङ्गलाभा कुलान्तरा ।
द्विभुजो वेदबाहुश्च षड्भुजा कामचारिणी ॥ ९२ ॥
चन्द्रकान्त[4]माल्यधरो लोकातिलोकरागिणी ।
त्रिभङ्गदेहनिकरो विभाङ्ग[5]स्था विनोदिनी ॥ ९३ ॥
त्रिकूटस्थस्त्रि[6]भावस्थस्त्रिशरीरा त्रिकालजा ।
एकवक्त्रो द्विवक्त्रश्च वक्त्रशून्या शिशुप्रिया ॥ ९४ ॥
श्रीविद्यामन्त्रजालस्थो विज्ञानी कुशलेश्वरी ।
घटा[7]सरगतो गौरा गौरवी गौरिकाचला ॥ ९५ ॥
गुरुज्ञानगतो गन्धो गन्धभोग्या गिरिध्वजा ।
[8]छायामण्डलमध्यस्थो विकटा पुष्करानना ॥ ९६ ॥
कामाख्यो निरहङ्कारः [9]कामरूपनृपाङ्गजा ।
सुलभो दुर्लभो [10]दुःखी सूक्ष्मातिसूक्ष्मरूपिणी ॥ ९७ ॥

---

१. त्रिकालफलाम्बुदा ख० ।
२. भूरि । ...... महागीताप्रकाशिनी ख० ।
३. वेशाद्यावेश ख० ।
४. अलकातिलकरागिणी ख० ।
५. विभङ्गस्था ख० ।
६. त्रितारस्थस्त्र्यग्ररेणुस्त्रिकालजा ख० ।
७. घटासवगतो गौरो गौरवी गौरिकाचला ख० ।
८. हारमण्डल ख० ।
९. कामाकाम विकाशजा ख० ।
१०. दुर्लभाक्षीण ख० ।

[1]बीजजापपशोः क्रूरो विमोहगुणनाशिनी ।
[2]अर्धरो निपुणोल्लाशो विश्वरूपा सरस्वती ॥ ९८ ॥
[3]अनन्तघोषनिलयो विहङ्गगणगामिनी ।
अच्युतेशः प्रकाण्डस्थः प्रचण्डफालवाहिनी[4] ॥ ९९ ॥
अभ्रान्तो भ्रान्तिरहिता[5] भ्रान्तो यान्ति प्रतिष्ठिता ।
अव्यर्थो व्यर्थवाक्यस्थो[6] विशङ्काशङ्कयान्विता ॥ १०० ॥
यमुनापतिपः पीनो महाकालवसावहा ।
जम्बुद्वीपेश्वरः पारः पारावार[7]कृतासनी ॥ १०१ ॥
वज्रदण्डधरः शान्तो मिथ्यागतिरतीन्द्रिया ।
अनन्तशयनो [8]न्यूनः परमाह्लादवर्धिनी ॥ १०२ ॥
[9]शिष्टाभ्रणिलयो व्याख्यो वसन्तकालसुप्रिया ।
विरजान्दोलितो भिन्नो विशुद्धगुणमण्डिता ॥ १०३ ॥
[10]अञ्जनेशः खञ्जनेशः पललासवभक्षिणी ।
अङ्गभापाकृतिस्नाता[11] सुधारसफलातुरा ॥ १०४ ॥
फलबीजधरो दौर्गो द्वारपालनपल्लवा ।
पिप्पलादः[12] कारणश्च विख्यातिरतिवल्लभा ॥ १०५ ॥

---

१. श्री बीजजापको क्रूरो ख० ।
२. अकुलोऽतिकुलोल्लासो ख० ।
३. अनन्ताधारनिलयो ख० ।
४. फलवासिनी ख० ।
५. भ्रान्तिरहितो भ्रान्तो भ्रान्ति ख० ।
६. बाह्यस्थो ख० ।
७. पारापारहुतासनी ख० ।
८. शयनोन्मूलः
९. सिताभ्रनिलयोध्येयो ।
१०. आञ्जनेशः खाण्डनेशः ख० ।
११. कृतस्नानः सुधारस कलान्तरा ख० ।
१२. पिप्पलादो वारुणश्च विख्याता ख० ।

संहारविग्रहो विप्रो [1]विषण्णा कामरूपिणी ।
अवलापो नापनापो[2] विक्लृप्ता कंसनाशिनी ॥ १०६ ॥

हठात्कारेण[3] तो चामो नाचामो विनयक्रिया ।
सर्वः सर्वसुखाच्छन्नो[4] जिताजितगुणोदया ॥ १०७ ॥

भास्वत्किरीटो [5]राङ्कारी वरुणेशीतलान्तरा ।
अमूल्यरत्नदानाढ्यो दिवारात्रिस्त्रिखण्डजा ॥ १०८ ॥

मारबीजमहा[6]मानो हरबीजादिसंस्थिता ।
अनन्तवासुकीशानो लाकिनी काकिनी द्विधा ॥ १०९ ॥

कोटिध्वजो बृहद्दुर्गश्चामुण्डा रणचण्डिका ।
उमेशो रत्नमालेशो विकुम्भगणपूजितः ॥ ११० ॥

निकुम्भपूजितः कृष्णो विष्णुपत्नी सुधात्मिका ।
[7]अल्पकालहरः कुन्तो महाकुन्तास्त्रधारिणी ॥ १११ ॥

ब्रह्मास्त्रधारकः क्षिप्तो[8] वनमालाविभूषिता ।
एकाक्षरो द्व्यक्षरश्च षोडशाक्षरसम्भवा ॥ ११२ ॥

अतिगम्भीरवातस्थो महागम्भीरवाद्यगा ।
त्रिविधात्मा[9] त्रिदेशात्मा तृतीया त्राणकारिणी ॥ ११३ ॥

---

१. विषणा ख० ।
२. लापलापो ख० ।
३. हठात्कार गतो चाभो वाचामो विनयप्रिया ख० ।
४. सर्वकालसुखाच्छन्नो ख० ।
५. झङ्कारी करणेशी ख० ।
६. महामानी ख० ।
७. कल्पकालहरो कुम्भो महाकुम्भास्त्र ख० ।
८. क्षिप्रो ख० ।
९. त्रिदिवेशस्त्रिदशात्मा ख० ।

कियत्कालचलानन्दो[1] विहङ्गगमनासना ।
गीर्वाणो बाणहन्ता[2] च बाणहस्ता विधूच्छला ॥ ११४ ॥
बिन्दुधर्मोज्ज्वलोदारो वियज्ज्वलनकारिणी ।
विरामा[3] व्यासपूज्यश्च नवदेशीप्रधानिका ॥ ११५ ॥
विलोलवदनो वामो[4] विरोमा मोदकारिणी ।
हिरण्यहारभूषाङ्गः [5]कलिङ्गनन्दिनीशगा ॥ ११६ ॥
अनन्यक्षीणवक्षश्च क्षितिक्षोभविनाशिका ।
क्षणक्षेत्रप्रसादाज्ञो [6]वशिष्ठादिऋषीश्वरी ॥ ११७ ॥
रेवातीरनिवासी च गङ्गातीरनिवासिनी ।
[7]वाङ्गेशः पुष्करेशश्च व्यासभाषाविशेषिका ॥ ११८ ॥
[8]अमलानाथसंज्ञश्च रामेश्वरसुपूजिता ।
रमानाथः प्रभुः प्राप्तिः कीर्तिदुर्गाभिधानिका[9] ॥ ११९ ॥
लम्बोदरः प्रेमकालो लम्बोदरकुलप्रिया ।
[10]स्वर्गदेहो ध्यानमानो लोचनायतधारिणी ॥ १२० ॥
अव्यर्थवचनप्रख्यो[11] विद्यावागीश्वरप्रिया ।
[12]अब्दमानस्मृतिप्राणः कलिङ्गनगरेश्वरी ॥ १२१ ॥

---

१. बलानन्दो ......मार्गनासना ख० ।
२. बाणहस्तश्च ख० ।
३. विरामव्यासपूज्यश्च ख० ।
४. व्यासो विरामो ख० ।
५. कलिन्दनन्दिनीनगा ख० ।
६. विशिष्टानामधीश्वरी ख० ।
७. गङ्गेशः ख० ।
८. आतुरानाथसंज्ञश्च ख० ।
९. कीर्तिश्रद्धाभिधारिणी ख० ।
१०. अर्धदेहो ख० ।
११. प्राज्ञो तथा ख० ।
१२. ॐ ॐ अब्दमणेस्मृतिप्राणकलिङ्ग ख० ।

[1]अतिगुह्यतरज्ञानी गुप्तचन्द्रात्मिकान्यथो ।
मणिनागगतो गन्ता वागीशानी बलप्रदा ॥ १२२ ॥
कुलासनगतो नाशो [2]विनाशा नाशसुप्रिया ।
विनाशमूलः कूलस्थः संहारकुलकेश्वरी ॥ १२३ ॥
त्रिवाक्यगुणविप्रेन्द्रो महदाश्चर्यचित्रिणी ।
आशुतोषगुणाच्छन्नो मदविह्वलमण्डला[3] ॥ १२४ ॥
विरूपाक्षी लेलिहश्च महामुद्राप्रकाशिनी ।
अष्टादशाक्षरो रुद्रो मकरन्दसुबिन्दुगा ॥ १२५ ॥
छत्रचामरधारी च छत्रदात्री त्रिपौण्ड्रजा[4] ।
इन्द्रात्मको विधाता च धनदा नादकारिणी[5] ॥ १२६ ॥
कुण्डलीपरमानन्दो मधुपुष्पसमुद्भवा ।
विल्ववृक्षस्थितो रुद्रो नयनाम्बुजवासिनी[6] ॥ १२७ ॥
हिरण्यगर्भः कौमारो विरूपाक्षा [7]ऋतुप्रिया ।
श्रीवृक्षनिलयश्यामो महाकुलतरूद्भवा ॥ १२८ ॥
कुलवृक्षस्थितो विद्वान् हिरण्यरजतप्रिया ।
कुलपः[8] प्राणपः प्राणा पञ्चचूडधराधरा ॥ १२९ ॥
उषती वेदिकानाथो [9]नर्मधर्मविवेचिका ।
शीतलाक्षः शीतहीनो मनःस्थैर्यकरी क्षया ॥ १३० ॥

---

१. ॐ ॐ अतिभोजतरङ्गिणी गुप्तचक्रात्मिकात्मदा ख० ।
२. त्रिनाशनाथ ख० ।
३. सुन्दरी ख० ।
४. त्रिपुण्ड्रजा ख० ।
५. धनदानादि ख० ।
६. रागिणी ख० ।
७. क्रतुप्रिया ख० ।
८. कुलेशः धरोधरा ख० ।
९. धर्माधर्मविवेचका ख० ।

कुक्षिस्थः क्षणभङ्गस्थो गिरिपीठनिवासिनी ।
[1]अर्धकायः प्रसन्नात्मा प्रसन्नवनवासिनी ॥ १३१ ॥
[2]प्रतिष्ठेशः प्राणधर्मा ज्योतीरूपा ऋतुप्रिया ।
धर्मध्वजपताकेशो बलाका [3]रसवर्धिनी ॥ १३२ ॥
मेरुशृङ्गगतो धूर्तो धूर्तसत्ता खलस्पृहा ।
सेवासिद्धिप्रदोऽनन्तोऽनन्त[4]कार्यविभेदिका ॥ १३३ ॥
*
[5]भाविनामत्वजानज्ञो विराटपीठवासिनी ।
विच्छेदच्छेदभेदश्च [6]छलनूशास्त्रप्रकाशिका ॥ १३४ ॥

---

१. स्वर्गकायः ख० ।
२. प्रतिष्ठेशः प्राणधर्मो ज्योतिरूपा भृगुप्रिया ख० ।
३. शत ख० ।
४. कार्या विभेदिका ख ।

* अन्येषां तोलकं चैकं संशोध्य भक्षणं चरेत् ।
पुनस्तेषां महाकालमनुं वक्ष्यामि तत्त्वतः ॥ १३२ ॥
सकलं चामरायोगं मन्त्रेणानेन भक्षयेत् ।
तारद्वयं समुद्धृत्य श्रीयुग्मं तदनन्तरम् ॥ १३३ ॥
विसर्गबिन्दुसंयुक्तं तत्पश्चादमृतामुखि ।
मारय हारय हुन्हं योगसिद्धि ततः परम् ॥ १३४ ॥
देहि देहि पदस्यान्ते स्वाहान्तं मन्त्रमुत्तमम् ।
एतन्मन्त्रेण चोद्धृत्य मन्त्रयित्वा प्रभक्षयेत् ॥ १३५ ॥
एतत्काण्डस्य मन्त्रं तु तत्रैव परियोजयेत् ।
निर्गुण्डी मन्त्रबीजेन्द्रं शृणु वक्ष्यामि भैरव ॥ १३६ ॥
कामबीजत्रयं पश्चात् कालीबीजत्रयं तथा ।
सर्वयोगं ततः पश्चात् साधय द्वयमेव च ॥ १३७ ॥
अमृतत्वं मयि शब्दं समर्पयद्वयं तथा इति ख पुस्तके अधिकः पाठः ।

५. ब्रह्मबीजं ततः पश्चात् ख० ।
६. छलशास्त्रप्रकाशिका ख० ।

[1]चारुकर्म्या संस्कृतश्च तप्तहाटकरूपिणी ।
परानन्दरसज्ञानी रससन्तानमन्त्रिणी ॥ १३५ ॥
प्रतीक्षः सूक्ष्मशब्दश्च प्रसङ्गसङ्गतिप्रिया ।
अमायी सागरोद्भूतो वन्ध्यादोषविवर्जिता ॥ १३६ ॥
जितधर्मो [2]ज्वलच्छत्री व्यापिका फलवाहना ।
व्याघ्रचर्माम्बरो योगी महापीना[3] वरप्रदा ॥ १३७ ॥
वरदाता सारदाता ज्ञानदा [4]वरवाहिनी ।
चारुकेशधरो [5]मा पो विशाला गुणदाम्बरा ॥ १३८ ॥
ताडङ्कमालानिर्माल[6]धरस्ताडङ्कमोहिनी ।
पञ्चालदेशसम्भूतो [7]विशुद्धस्वरवल्लभा ॥ १३९ ॥
किरातपूजितो व्याधो मनुचिन्तापरायणा ।
शिववाक्यरतो [8]वामो भृगुरामकुलेश्वरी ॥ १४० ॥
स्वयम्भुकुसुमाच्छन्नो विधिविद्याप्रकाशिनी ।
प्रभाकरतनूद्भूतो विशल्यकरणीश्वरी ॥ १४१ ॥
उषतीश्वरसम्पर्की योगविज्ञानवासिनी ।
उत्तमो मध्यमो [9]व्याख्यो वाच्यावाच्यवराङ्गना॥ १४२ ॥
आंबीजवादरोपाढ्या[10] मन्दरोदरकारिणी ।
कृष्णसिद्धान्तसंस्थानो युद्धसाधनचर्चिका ॥ १४३ ॥

---

१. चारुकान्तालङ्कृतश्च सप्त ख० ।
२. कुलवृतो ·····भटवाहना ख० ।
३. महापीठा बलप्रदा ख० ।
४. ज्ञानदानन्दवाहिनी ख० ।
५. मान्यो······विशालगुण ख० ।
६. निर्माल्य ख० ।
७. विशुद्धेश्वरवल्लभा ख० ।
८. रामो ख० ।
९. वाच्यो······वराङ्गना ख० ।
१०. बोटाढ्यो ख० ।

[1]मथुरासुन्दरीनाथो मथुरापीठवासिनी ।
पलायनविशून्यश्च प्रकृतिप्रत्ययस्थिता ॥ १४४ ॥
प्रकृतिप्राणनिलयो विकृतिज्ञाननाशिनी ।
सर्वशास्त्रविभेदश्च मत्तसिंहासनासना ॥ १४५ ॥
इतिहासप्रियो धीरो विमलामलरूपिणी ।
मणिसिंहासनस्थश्च मणिपूरजयोदया ॥ १४६ ॥
भद्रकालीजपानन्दो भद्राभद्रप्रकाशिनी ।
श्रीभद्रो भद्रनाथश्च भयभङ्गविहिंसिनी ॥ १४७ ॥
आत्मारामो विधेयात्मा शूलपाणिप्रियान्तरा ।
[2]अतिविद्याद्दढाभ्यासो विशेषवित्त[3]दायिनी ॥ १४८ ॥
[4]अजरामरकान्तिश्च कान्तिकोटिधरा शुभा ।
पशुपालः पद्मसंस्थः श्रीशपाशुपतास्त्रदा ॥ १४९ ॥
सर्वशास्त्रधरो हंसो ज्ञानिनी ज्ञानवर्धिनी ।
द्वितीयानाथ ईशार्द्धो बादरायणमोहिनी ॥ १५० ॥
[5]शवमांसाशनो भीमो भीमनेत्रा भयानका ।
शिवज्ञानक्रमो दक्षः क्रियायोगपरायणा[6] ॥ १५१ ॥
दानस्थो[7] दानसम्पन्नो दन्तुरा पार्वतीपरा ।
प्रियानन्दो दिवाकर्ता निशानिषादघातिनी ॥ १५२ ॥

---

१. मथुरेत्यतः मणिसिंहासनात्प्राक् श्लोक द्वयं 'ख' पुस्तके नास्ति ।
२. अभिविद्या ख० ।
३. विधि ख० ।
४. अजरेत्यारभ्य ज्ञानवर्धिनी पर्यन्तं 'ख' पुस्तके नास्ति ।
५. मृगमांसाशनो ख० ।
६. परायणाः ख० ।
७. कुलस्थो दानसम्मानो ख० ।

अष्टहस्तो विलोलाक्षो मनःस्थापनकारिणी ।
मृदुपुत्रो मृदुच्छत्रो विभाङ्गपुण्य[1]नन्दिनी ॥ १५३ ॥
अन्तरिक्षगतो मूलो [2]मूलपुत्रप्रकाशिनी ।
अभीतिदाननिरतो विधुमालामनोहरी ॥ १५४ ॥
चतुरास्रजा[3]हृषीशो गिरिकन्या कुतूहली ।
शिशुपालरिपुप्राणो विदेश[4]पदरक्षिणी ॥ १५५ ॥
[5]विलक्षणो विधिज्ञाता मानहन्त्री त्रिविक्रमा ।
त्रिकोणाननयोगीशो निम्ननाभिर्नगेश्वरी ॥ १५६ ॥
नवीनगुणसम्पन्नो नवकन्याकुलाचला ।
त्रिविधेशो विशङ्केतो विज्वरा ज्वरदायिनी ॥ १५७ ॥
अतिधार्मिकपुत्रश्च चारुसिंहासनस्थिता ।
[6]स्थापकोत्तमवर्गाणां सतां सिद्धिप्रकाशिनी ॥ १५८ ॥
सिद्धप्रियो[7] विशालाक्षो ध्वंसकर्त्री निरञ्जना ।
शक्तीशो विकलेशश्च क्रतुकर्मफलोदया ॥ १५९ ॥
विफलेशो वियद्गामी ललिता बुद्धिवाहना ।
मलयाद्रितपःक्षेमः क्षयकर्त्री रजोगुणा ॥ १६० ॥
द्विरण्डको द्वारपालो [9]बलेर्विघ्नविनाशिनी ।
मायापक्षगतो मानो[10] मारीविद्याविनाशिनी ॥ १६१ ॥

---

१. कुलनन्दिनी ख० ।
२. मनः सूत्रप्रकाशिनी ख० ।
३. चतुरस्रो हृषीकेशो धनि ख० ।
४. विद्वेषिज्वरदायिनी ख० ।
५. विलक्षणो विध्येतरारभ्य ज्वरदायिनी पर्यन्तं 'ख' पुस्तके नास्ति ।
६. स्थापको गुणवर्गाणां ख० ।
७. सिद्धिप्रियो ख० ।
८. क्षयकर्त्ता ख० ।
९. नानाविघ्न ख० ।
१०. मायी ख० ।

हिङ्गुलाजस्थितः सिद्धो विदुषां वादसारिणी[1] ।
श्रीपतीशः श्रीकरेशः श्रीविद्या भुवनेश्वरी ॥ १६२ ॥
मतिप्रथम[2]जो धन्यो मिथिलानाथपुत्रिका ।
रामचन्द्रप्रियः प्राप्तो रघुनाथकुलेश्वरी ॥ १६३ ॥
[3]कूर्मः कूर्मगतो वीरो वसावर्गा गिरीश्वरी ।
[4]राजराजेश्वरीबालो रतिपीठगुणान्तरा ॥ १६४ ॥
कामरूपधरोल्लासो विदग्धा कामरूपिणी ।
अतिथीशः [5]सर्वभर्ता नानालङ्कारशोभिता ॥ १६५ ॥
नानालङ्कारभूषाङ्गो [6]नरमालाविभूषिता ।
जगन्नाथो जगद्व्यापी जगतामिष्टसिद्धिदा ॥ १६६ ॥
जगत्कामो [7]जगद्व्यापो जयन्ती जयदायिनी ।
जयकारी जीवकारी [8]जयदा जीवनी जया ॥ १६७ ॥
जयो गणेशः श्रीदाता [9]महापीठनिवासिनी ।
त्रिषमः सामवेदस्थो [10]यजुर्वेदांशयोगया ॥ १६८ ॥
त्रिकालगुणगम्भीरो द्वात्रिंशतिकराम्बुजा ।
सहस्रबाहुः [11]सारस्थो भागगा भवभाविनी ॥ १६९ ॥

---

१. साधिनी ख० ।
२. प्रथमतो ख० ।
३. कर्मकुलगतो धीरो वनदुर्गा गिरीश्वरी ख० ।
४. राजेश्वरो ख० ।
५. सुन्धभर्ता ख० ।
६. वनमालाविभूषणा ख० ।
७. जगज्जायो जयन्ती ख० ।
८. जीवनी जयी ख० ।
९. मञ्चपीठ ख० ।
१०. वेदाशमयाख्या ख० ।
११. भावस्थो भावना ख० ।

[1]भवनादिकरो मार्गो विनीता नयनाम्बुजा ।
सर्वत्राकर्षकोऽखण्डः सर्वज्ञानाभिकर्षिणी ॥ १७० ॥
जिताशयो [2]जितविप्रः कलङ्कगुणवर्जिता ।
निराधारो निरालम्बोविषया ज्ञानवर्जिता ॥ १७१ ॥
अतिविस्तारवदनो विवादखलनाशिनी ।
[3]भार्यानाथः क्षोभनाशो रिपूणां कुलपूजिता ॥ १७२ ॥
[4]आशवो भूरिवर्गाणां चारुकुन्तलमण्डिता ।
अतिबुद्धिधरो सूक्ष्मो रजनीध्वान्तनाशिनी ॥ १७३ ॥
ज्योत्स्नाजालकरो योगी [5]वियोगशायिनी युगा ।
युगगामो योगगामी [6]जयदा लाकिनी शिवा ॥ १७४ ॥
संज्ञाबुद्धिकरो भावो भवभीतिविमोहिनी ।
सुन्दरः सुन्दरानन्दो रति[7]का रतिसुन्दरी ॥ १७५ ॥
रतिज्ञानी रतिसुखो रतिनाथ[8]प्रकाशिनी ।
[9]बुद्धरूपी बोधमात्रो वैरोधो द्वैतवर्जिता ॥ १७६ ॥
भूरिभावहरानन्दो भूरिसन्तानदायिनी ।
यज्ञसाधनकर्ता च सुयज्ञः पद्मलोचना[10] ॥ १७७ ॥

---

१. भवनादकरो मार्गो ख० ।
२. जितरिपुः कलङ्कदोषवर्जिता ख० ।
३. आर्यनाथः......कुलनाशिनी ख० ।
४. आश्रयो ख० ।
५. वियोगगामिनीयुता ख० ।
६. जयदानकरी ख० ।
७. रतिकामातिसुन्दरी ख० ।
८. रतिसुख ख० ।
९. बुद्धिरूपी बोधमात्रा द्विबोधा द्वैतवर्जिता ख० ।
१०. परमासना ख० ।

कोटिकोटिचन्द्रतेजः[5] कोटिकोटिरुचिच्छटा ।
कोटिकोटिचञ्चलाभो[6] द्विकोट्ययुतचञ्चला ॥ १७८ ॥

कोटिसूर्यच्छिन्नदेहः कोटिकोटिरविप्रभा ।
कोटिचन्द्रकान्तमणिः कोटीन्दुकान्तनिर्मला ॥ १७९ ॥

शतकोटिविधुमणिः शतकोटीन्दुकान्तगा ।
विलसत्कोटिकालाग्निः कोटिकालानलोपमा ॥ १८० ॥

कोटि[7]वह्निगतो वह्निवह्निजाया द्विगोद्भवा ।
महातेजोवह्निवारिः[8] कालाग्निहारधारिणी ॥ १८१ ॥

कालाग्निरुद्रो भगवान्[9] कालाग्निरुद्ररूपिणी ।
कालात्मा कलिकालात्मा कलिकाकुललाकिनी[10] ॥ १८२ ॥

मृत्युजितो[11] मृत्युतेजा मृत्युञ्जयमनुप्रिया ।
महामृत्युहरो मृत्युरपमृत्युविनाशिनी ॥ १८३ ॥

जयो जयेशो जयदो जयदा जयवर्धिनी ।
जयकरो जगद्धर्मो जगज्जीवनरक्षिणी ॥ १८४ ॥

सर्वजित्सर्वरूपी च सर्वदा सर्वभाविनी ।
[12]इत्येतत् कथितं नाथ महाविद्याभिधानकम् ॥ १८५ ॥

---

५. तेजाः ···रविच्छटा ख० ।
६. चन्द्रनाभो द्विकोटियुत ख० ।
७. कोटि कोटि वह्निनिभो ख० ।
८. राशिः ख० ।
९. कालाग्निरुद्रो ख० ।
१०. कुलनाशिनी ख० ।
११. मृत्युजिन मृत्युजेता ख० ।
१२. ॐ ॐ ॐ ख पु० अधिकः पाठः ।

शब्दब्रह्ममयं साक्षात् कल्पवृक्षस्वरूपकम्[1] ।
अष्टोत्तरसहस्राख्यं शतसंख्यासमाकुलम् ॥ १८६ ॥

त्रैलोक्यमङ्गलक्षेत्रं सिद्धविद्याफलप्रदम् ।
सकलं निष्कलं साक्षात् कल्पद्रुमकलान्वितम्[2] ॥ १८७ ॥

योगिनामात्मविज्ञानमात्मज्ञानकरं[3] परम् ।
यः पठेद् भावसम्पूर्णो मिथ्याधर्मविवर्जितः ॥ १८८ ॥

रुद्रपीठे स्वयं[4] भूत्वा महायोगी भवेद्ध्रुवम् ।
अकस्मात्सिद्धिमाप्नोति चाधर्मां[5] माल्यदायिनीम् ॥ १८९ ॥

[6]राजलक्ष्मीधनैश्वर्यमतिधैर्यं हयादिकम् ।
कुञ्जरं सुन्दरं [7]वीरं पुत्रं राज्यं सुखं जयम् ॥ १९० ॥

राजराजेश्वरत्वं च दिव्यवाहनमेव च ।
अक्लेशपञ्चमासिद्धिं[8] ततः प्राप्नोति मध्यमाम् ॥ १९१ ॥

अत्यन्तदुःखहननं गुरुत्वं लोकमण्डले ।
देवानां भक्तिसंख्याश्च[9] दिव्यभावं सदासुखम् ॥ १९२ ॥

आयुर्वृद्धिं लोकवश्यं पूर्णकोशं हि गोधनम् ।
देवानां [10]राज्यभवनं प्रत्यक्षे स्वप्नकालकं ॥ १९३ ॥

---

१. कल्पवृक्षफलान्वितम् ख० ।
२. फलान्वितम् ख० ।
३. मोक्षज्ञानकरं परम् ख० ।
४. रुद्रपीठे स्वयंभूयो ख० ।
५. चाधिकं ख० ।
६. राजलक्ष्मीं ख० ।
७. धीरम् ख० ।
८. पञ्चमाम् ख० ।
९. भावञ्च ख० ।
१०. वाक्यश्रवणम् ख० ।

दीर्घदृष्टिभयत्यागं चाल्पकार्यविवर्जितम् ।
सदा धर्मप्रियत्वं च धर्मज्ञानं महागुणम् ॥ १९४ ॥
विवेकाङ्कुरमानन्दं [1]श्रीवाणीसुकृपान्वितम् ।
तत उत्तमयोगस्थां सिद्धिं[2] प्राप्नोति साधकः ॥ १९५ ॥
[3]अनन्तगुणसंस्थानं मायार्थभूतिवर्जनम् ।
एकान्तस्थानवसतिं योगशास्त्रनियोजनम् ॥ १९६ ॥
सर्वाकाङ्क्षाविशून्यत्वं दैवतैकान्तसेवनम् ।
खेचरत्वं सर्वगतिं भावसिद्धिं सुरप्रियम्[4] ॥ १९७ ॥
सदा [5]शौद्रक्रियायोगं विभूत्यष्टाङ्गसिद्धिदम् ।
दृढज्ञानं [6]सर्वशास्त्रकारित्वं रससागरम् ॥ १९८ ॥
एकभावं द्वैतशून्यं महापदनियोजनम् ।
महागुणवतीविद्यापतित्वं शान्तिमेव च ॥ १९९ ॥
प्राप्नोति साधकश्रेष्ठो यः पठेद् भावनिश्चलः ।
त्रिकालमेककालं वा द्विकालं वा पठेत् सुधीः ॥ २०० ॥
शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः ।
पुरश्चरणमाकृत्य पठित्वा च पुनः पुनः ॥ २०१ ॥
अष्टैश्वर्ययुतो भूत्वा [7]मनोगतिमवाप्नुयात् ।
[8]सर्वत्र कुशलं व्याप्तं यः पठेन्नियतः शुचिः ॥ २०२ ॥

---

१. श्रावणीमुक्तपान्वितम् ख० ।
२. प्राप्नोति साधकोत्तमः ख० ।
३. अत्यन्तगुणसंस्थानम् ख० ।
४. सुरप्रियम् ख० ।
५. सदायोग ख० ।
६. धर्मशास्त्रे कवित्वम् ख० ।
७. विशुद्धसङ्गमो भवेत् ख० ।
८. सर्वत्रेत्यारभ्य भवेदितिपर्यन्तं ख पुस्तके नास्ति ।

षट्चक्रमणिपीठञ्च भित्त्वाऽनाहतगो भवेत् ।
अनाहतं ततो भित्त्वा विशुद्धसङ्गमो भवेत् ॥ २०३ ॥

विशुद्धपद्मं भित्त्वा च शीर्षे[1] द्विदलगो भवेत् ।
द्विदलादिमहापद्मं भित्त्वैतत् स्तोत्रपाठतः ॥ २०४ ॥

चतुर्वर्गां[2] क्रियां कृत्वा चान्ते निर्वाणमोक्षभाक् ।
योगिनां योगसिद्ध्यर्थं सर्वभूतदयोदयम्[3] ॥ २०५ ॥

निर्वाणमोक्षसिद्ध्यर्थं कथितं परमेश्वर ।
एतत्स्तवनपाठेन किन्न सिद्ध्यति भूतले ॥ २०६ ॥

कुलं [4]कुलक्रमेणैव साधयेद् योगसाधनम् ।
योगान्ते योगमध्ये च योगाद्ये प्रपठेत् स्तवम् ॥ २०७ ॥

कृत्तिकारोहिणीयोगयात्रायां[5] मिथुने तथा ।
श्रवणायां मेषगणे[6] कुजे चेन्दुसमाकुले ॥ २०८ ॥

शनिवारे च सङ्क्रान्त्यां कुजवारे पुनः[7]पुनः ।
सन्ध्याकाले लिखेत् स्तोत्रं ध्यानधारणयोगिराट्[8] ॥ २०९ ॥

भूर्जपत्रे लिखित्वा च कण्ठे शीर्षे [9]प्रधारयेत् ।
अथवा रात्रियोगे च कुलचक्रे लिखेत् सुधीः ॥ २१० ॥

---

१. शीघ्रम् ख० ।
२. चतुर्वर्गक्रियाम् ख० ।
३. शुभोदयात् ख० ।
४. कुलाकुलक्रमेणैव ख० ।
५. योगे आर्द्रायां ख० ।
६. लग्ने कुब्जे कुहु ख० ।
७. पुनर्वसौ ख० ।
८. वित् ख० ।
९. प्रदापयेत् ख० ।

सर्वत्र कुलयोगेन पठन्[1] सिद्धिमवाप्नुयात् ।
एतन्नाम्ना प्रजुहुयात् कालिकाकृति[2]मान् भवेत् ॥ २११ ॥
तद्दशांशक्रमेणैव हुत्वा योगीह सर्वदा ।
मणिपूरे दृढो भूत्वा रुद्रशक्तिकृपां लभेत् ॥ २१२ ॥

[3]इति श्रीरुद्रयामले लाकिनीसाष्टोत्तरसहस्रनाम-
विन्यासे एकपञ्चाशत्तमः पटलः ॥



१. पठित्वा ख० ।
२. कालिकाहुतिदानवत् ख० ।
३. इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे षड्चक्रप्रकाशे भैरवीभैरवसंवादे महारुद्रमृत्युञ्जयलाकिनीसाष्टोत्तरशतसहस्रविन्यासो नाम द्विपञ्चाशत्तमः पटलः ।

# द्विपञ्चाशत्तमः पटलः

आनन्दभैरव उवाच—

कथयस्व वरारोहे मणिपूरमनुक्रमम् ।
यज्ज्ञात्वा मुनयः सर्वे चाष्टसिद्धिमवाप्नुयात् ॥ १ ॥

प्रजपन् गच्छति क्षिप्रं अनायास[1]मनाहते ।
मन्त्रार्थं [2]मन्त्रचैतन्यं निजविग्रहरक्षणम् ॥ २ ॥

तत्परापरग्रन्थिस्थं विचार्य वक्तुमर्हसि ।

श्रीआनन्दभैरवी उवाच—

महाभैरवकालाग्ने मनुज्ञानं [3]निशामय ॥ ३ ॥
कथयामि तव स्नेहादतिकोमलसाधनम् ।
मन्त्राणां [4]मन्त्रचैतन्यं विषयानि शृणु प्रभो ॥ ४ ॥

मणिपूरे त्वनायासे[5] यत्प्रसादात् [6]स्थिरो भवेत् ।
एतत्करणमात्रेण योगी भवति निश्चितम् ॥ ५ ॥

कोटिकोटिमन्त्रजालं[7] तदर्थकोटयः स्मृताः ।
एतन्मध्ये सारभागं कथयामि कुलार्णव ॥ ६ ॥

सर्वत्र समभावेन संस्मरन्[8] मन्त्रमुत्तमम् ।
शरीरमपरिच्छिन्नं ब्रह्माण्डं सचराचरम् ॥ ७ ॥

---

१. प्राणायामैरनाहते ख० ।
२. मनु ख० ।
३. नां मनशाय क० ।
४. मनुना मन्त्रचैतन्यं विविधानि ख० ।
५. तव ज्ञाने ख० ।
६. शिवो ख० ।
७. मन्त्रजापात् तदर्थे ख० ।
८. संस्मरेत मूर्तिमुत्तमाम् ख० ।

मूलादिमणिपूरान्तं त्रिगुणं मनुरूपकम् ।
वर्णमालामुपादाय[1] मुहुर्मुहुर्जपेत् सुधीः ॥ ८ ॥
पूर्णतेजोमयीं ध्यायेत् [2]कोटिकालाग्निरूपिणीम् ।
स्वदेवतां सदा ध्यायेन्मूलादिब्रह्मरन्ध्रके ॥ ९ ॥
तन्मूर्तिमपरिच्छिन्नां [3]गूढस्थाननिवासिनीम् ।
[4]गभीरोर्ध्वगलानन्दां सुधासागरवासिनीम् ॥ १० ॥
[5]यज्ज्ञात्वा ब्रह्मतुल्यं स्याद् ब्रह्मरन्ध्रे विभावनात् ।
मूलरन्ध्रे मुदा ध्यायेत् [6]कोटिकालानलोज्ज्वलम् ॥ ११ ॥
ज्वलन्तं ध्यानमाकुर्यादूर्ध्वशिखाप्रभाकरम् ।
[7]सुधारसमोदमुग्धं हव्याग्निसदृशोज्ज्वलम् ॥ १२ ॥
ललाटं चिन्तयेत् कान्तं [8]पूर्णेन्दुकोटिसङ्कुलम् ।
विगलद्रसपुञ्जं तु [9]तद्रसप्रोज्ज्वलाननम् ॥ १३ ॥
[10]स्थिरवायुस्थिराकारं मन्त्रार्थं चेति भावयेत् ।
अथवा शुद्धसङ्काशं [11]पूर्णब्रह्ममयूखगम् ॥ १४ ॥
मूलादिब्रह्मरन्ध्रान्तं मूलं ध्यात्वा पुनः पुनः ।
विचिन्तयेत् सूक्ष्मरूपां महागुर्वीं स्वदेवताम् ॥ १५ ॥

---

१. वर्णमालानुसारेण ख० ।
२. कोटिकामग्निरूपिणीम् ख० ।
३. गृह ख० ।
४. गभीराह्लादनानन्दाम् ख० ।
५. यज्ज्ञात्वेति पुस्तके नास्ति ख० ।
६. ज्वलाम् ख० ।
७. रसामोदिमुग्धम् ख० ।
८. सङ्गमम् ख० ।
९. रसात्प्रोज्ज्वलानलम् ख० ।
१०. वायुं स्थिराकारं ख० ।
११. मयं शुभम् ख० ।

मन्त्रार्थं चेति तज्ज्ञानं तज्ज्ञानान्मोक्षमाप्नुयात् ।
[1]मन्त्रार्थज्ञानमात्रेण सिद्धिनिर्वाणमाप्नुयात् ॥ १६ ॥
न स्थूलं नातिसूक्ष्मं गुणमयवपुषं विश्वनाथं [2]स्वशक्ति
स्वानन्दानन्दचित्तं कलिफलमचलं चञ्चलं शुक्लरक्तम् ।
पीनापीनादिरूपं त्रिगुणगगमनं [3]मूलपद्मादिवक्त्रे
विश्वात्मानं कुलाख्यं मनुगुणजडितं [4]भावयेत्सिद्धलोकः ॥१७॥
चतुःषष्टिक्षेत्रे. त्रिगुणजननीं ध्याननिपुणां
( महा ) [5]मन्त्राकारां भुवनकरुणां वोधविषये ।
महाविद्यामाद्यां [6]मनुमयरसाच्छन्नतनुता-
[7]मवाप्यामन्दाब्धौ कुलपथि भजन्तीह रसिकाः ॥ १८ ॥
समस्तं शून्यार्थं रजतघटनारायणमयं
विसर्गं विन्दुस्थं रविशशिकलावह्निकिरणम् ।
[8]जगद्व्यापाराङ्गं भवविरहितं भावजडितं
[9]विकाराधाराहं दशदलबिले स्थापयति धीः ॥ १९ ॥
सुरासुरभयप्रदं तरुणरूपशोभाकरं
मनोहरकलेवरं सकलदेहसंज्ञा[10]पनम् ।
भजन्ति मुनयो नृपा [11]यतय इन्द्रदेवादयो
दशच्छदनिकेतने प्रकृतिदेहमध्यस्थितम् ॥ २० ॥

---

१. मन्त्रार्कज्ञानेति पुस्तकेनास्ति ख० ।
२. सानन्दा······सकलं शुक्लवक्त्रं विशुद्धम् ख० ।
३. रन्ध्रे ख० ।
४. सिद्धिहेतोः ख० ।
५. महामन्त्राकारं भुवनकरजां वेशविषये ख० ।
६. तनुगा ख० ।
७. मवाप्यानन्दाब्धौ कुलपथिजम् ख० ।
८. व्यापारादिम् ख० ।
९. विकाराधाराहं दशलयुतं स्थापयतिधीः ख० ।
१०. संज्ञापकम् ख० ।
११. प्रतिदिनं तथेन्द्रादयः ख० ।

प्रचण्डवचनाश्रयं[1] ध्वनिकलापसम्मर्दनं
महोत्कटतपःप्रियं [2]भजति चाशुतोषं शिवम् ।
निधाय हृदि पङ्कजे किमपि नाभिमूलेऽपि वा
विभावगुणभावनं परिकरोति योगी महान् ॥ २१ ॥

स्वकीयगुणसत्त्वके कठिनचित्तसंज्ञार्पणं[3]
चतुर्भुजकलेवरे दशकलाधरेन्दीवरे ।
मनोहरहरं[4] परमसारमाद्याक्षरं
[5]प्रकृत्य परमेश्वरे प्रणवरूपमारोपये ॥ २२ ॥

विविक्तमतिनिर्मलं [6]कमलहासमाल्याश्रयं
शिवं [7]शतकभास्करं सकलदेहमध्येऽपि वा ।
भुजायुतधरं धराधरधरं हि मुद्राधरं
भजन्ति कुलकामिनीपतय ईश वेश्याम्पदा ॥ २३ ॥

सदा चरणपङ्कजे [8]विवहानिमुद्रासये
[9]कृपामयसलक्षणं गतिगसत्त्वसम्भावनम् ।
सदैकगुणभावनं परमदेवदेवस्य या[10]
त्रिलोकजननी पते रमणमेव कुर्याद्वशी ॥ २४ ॥

---

१. चरणाश्रयं धवलि ख० ।
२. भवति ख० ।
३. संज्ञापनम् ख० ।
४. मनोहरवरं हरं परमसारमाद्याक्षरम् ख० ।
५. प्रकृष्ट ......आरोपयेत ख० ।
६. हार ख० ।
७. सकल ......पद्ममध्ये ख० ।
८. त्रिफलहानि ख० ।
९. सुलक्षणम् ......मतिग ख० ।
१०. वै ख० ।

एवं [1]कृत्वा निरालम्बविश्वासध्यानवान्नरः ।
अकस्मान्मन्त्रचैतन्यं प्राप्नोत्यर्थविनिर्णयम् ॥ २५ ॥

[2]इति श्रीरुद्रयामले उत्तरतन्त्रे मन्त्रार्थचैतन्यविन्यासो नाम द्विपञ्चाशत्तमः पटलः ॥



१. जप्त्वा सदा मन्त्रं विश्वमध्ये परः शुचिः—ख० ।
२. इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रभेदप्रकाशे भैरवीभैरवसंवादे मन्त्रार्थचैतन्यविन्यासो नाम त्रिपञ्चाशत्तमः पटलः ।

# त्रिपञ्चाशत्तमः पटलः

श्रीआनन्दभैरवी-उवाच—[1]

आनन्दसागराम्भोजमध्यस्थ परमप्रिय ।
इदानीं कालजालादिवारणं शृणु भैरव ॥ १ ॥
सम्पूर्य सञ्चयाच्छन्नं वायुं स्वाभाविकीगतिम्[2] ।
कुम्भयित्वा स्वभावेन चिरकालं सुखी भवेत् ॥ २ ॥
शनैः शनैः रेचयित्वा सर्वदा तद्गतो भवेत् ।
कालजालवशो[3] याति तत्क्षणान्नात्र संशयः ॥ ३ ॥
विना [4]वाय्वाकुञ्चनेन न सिध्यति च को जनः ।
वायुचालनमात्रेण सूक्ष्ममार्गोद्गमेन च ॥ ४ ॥
सिध्यत्येव महायोगी कालजालवशोऽपि[5] च ।
कालवशं न करोति मोहादतिसुखायते[6] ॥ ५ ॥
कालभक्षो भवेत् सोऽपि म्रियते नात्र संशयः ।
मणिपुरे मनो दत्त्वा साधयेद् देवताः[7] सदा ॥ ६ ॥
स्तोत्रं ध्यानं नाम गुणं पठित्वा च पुनः पुनः ।
मनोयोगश्च सर्वत्र वायुना कारयेद् बुधः ॥ ७ ॥

---

१. आनन्दभैरवी उवाच ख० ।
२. पतिम् ख० ।
३. कालजोलवसं ख ।
४. कुम्भकयोगेन को हि सिध्यति भूतले ख० ।
५. भवेदिति ख० ।
६. सुखोदयात् ख० ।
७. देवताम् ख० ।

कुम्भयित्वा [1]धारयित्वा रेचयित्वा पुनः पुनः ।
सर्वकालवशं नीत्वा जितात्मा चामरो भवेत् ॥ ८ ॥
लोभमोहौ वर्जयित्वा कामक्रोधादिपातकम् ।
सर्वदा वायुपानञ्च कृत्वा रहसि [2]संवशी ॥ ९ ॥
नित्यं वायुसाधनानि षट्चक्रभेदनाय च ।
शनैः शनैर्धारयेद्वै[3] चिरजीवित्वसाधनात् ॥ १० ॥
यदि न चिरजीवी स्यात् कालात्मा वायुसेवकः ।
षट्चक्रभावसिद्ध्यन्ते ज्ञानी मृत्युवशो भवेत् ॥ ११ ॥
अतः कुर्याच्छिवज्ञानं वायुसंसिद्धकारणम् ।
तत्क्रियासाधनार्थाय [4]आदौ पश्चामराविधिम् ॥ १२ ॥
कुर्यात् साधकमुख्यश्च निजकायप्रसाधनात् ।
नेतीयोगं तदा कुर्याद् यथा भवति संवशी ॥ १३ ॥
धौतीयोगं तदा कुर्याद् यथा भवति संवशी[5] ।
नेउलीयोगमाकुर्याद्[6] यत्र लोको न विद्यते ॥ १४ ॥
[7]दन्तीयोगं तदा कुर्याद् यदा मुख्यक्रियावतः ।
तदा क्षणेन यः कुर्याद्[8] यदा तृष्णाविवर्जितः ॥ १५ ॥
तृष्णानाशो[9] भवेन्मोक्ष इति मे योगनिर्णयः ।
विशेषेण प्रवक्ष्येऽहं शृणु कैलासपावन ॥ १६ ॥

---

१. सदायोगी ख० ।
२. सद्वशी ख० ।
३. रेचयेद्वै ख० ।
४. चादौ ख० ।
५. संयमी ख० ।
६. सदा कुर्यात् ख० ।
७. दण्डी सदा मुख्यक्रियारतः ख० ।
८. यः कुर्यात यथा ख० ।
९. नाशे ख० ।

एतत्कार्यं पुरा कृत्वा[1] दिवि देवा मुनीश्वराः ।
कायसिद्धिं मुदा कृत्वा छायामायाविवर्जिताः ॥ १७ ॥
सर्वत्र गामिनः सर्वे धर्मशास्त्रार्थपण्डिताः ।
चिरजीविन एवापि [2]सकलश्रीसमन्विताः ॥ १८ ॥
तत्तद्भेदान् प्रवक्ष्यामि साधनं[3] कायरक्षणम् ।
यः करोति महादेव कायसाधनमुत्तमम् ॥ १९ ॥
स आयाति ममानन्दसदने नात्र संशयः ।
प्रभाते च समुत्थाय ब्राह्मे [4]कालफलोदये ॥ २० ।
सहस्रारे गुरोः पादपङ्कजध्यानमाचरेत् ।
विचिन्तयेत्ततः श्रीमान् गुरुरूपां सरस्वतीम् ॥ २१ ॥
स्वदेवतां परानन्दरसिको योगबुद्धिमान् ।
प्रणम्य शिरसा नित्यं शौचकार्यं[5] समाचरेत् ॥ २२ ॥
शौचक्रियाक्रमेणैव सिद्धः शुचिगुणान्वितः ।
प्रगच्छेच्छौचकार्यार्थं घटमानन्तु[6] यत्नतः ॥ २३ ॥
मृत्तिकाप्रस्थमानञ्च नीत्वा शौचं समाचरेत् ।
कुल्कुलं[7] सप्तदशकं वर्चत्यागं पुनः पुनः ॥ २४ ॥
ततस्तर्जन्या [8]चालोड्य वामहस्तस्य शङ्कर ।
गुदरन्ध्रे समायोज्य क्षालनं हि पुनः पुनः ॥ २५ ॥

---

१. पुरस्कृत्वा ख० ।
२. कमलाश्री ख० ।
३. साधनान् कायरक्षणान् ख० ।
४. कलि ख० ।
५. शौचं कार्यं समाचरेत् ख० ।
६. घटमानं जलं नयेत् ख० ।
७. कुन्थनं ख० ।
८. अल्पतैलैः ख० ।

[1]यावच्च विससंत्यागं निःशेषेण मलक्षयम् ।
तावन्मृत्पयसा क्षाल्य शोधयेदुदरं सुधीः ॥ २६ ॥
यावन्न जायते सौख्यं तावत्कालं समाचरेत् ।
तत उत्थाय विधिना मृत्तिकाशौचमाचरेत् ॥ २७ ॥
येन क्रमेण विष्ठाया गन्धनाशोऽपि जायते ।
पादद्वयं समाक्षाल्य चान्तःशौचं [2]समाश्रयेत् ॥ २८ ॥
तत्क्रियासफलं[3] वक्ष्ये शृणु योगेश्वर प्रभो ।
सूक्ष्मवस्त्रसमुद्भूतं डोरकं सूक्ष्मरन्ध्रके[4] ॥ २९ ॥
नासिकाया[5] दृढतरं कोमलं चातिनिर्मलम् ।
शनैः शनैर्नियोज्याथ जिह्वामूले निवेशयेत् ॥ ३० ॥
जिह्वामूलात् सदादाय[6] वारं द्वादशकं सुधीः ।
मन्दमन्दाघर्षणं तु कृत्वा भेदं [7]समानयेत् ॥ ३१ ॥
मायात्रयेण बीजेन देवीबीजत्रयेण च ।
रमाबीजत्रयेणापि योगिन्यै नम इत्यपि ॥ ३२ ॥
एतन्मन्त्रेण योगीन्द्रो नेतीयोगं समाचरेत् ।
शिरःस्थाङ्गं[8] समाकृत्य कण्ठशोधनमाचरेत् ॥ ३३ ॥
ततो वक्षःशोधनं तु ततो नाभेश्च शोधनम् ।
क्रमेण कुर्यात् कायार्थे[9] तत्प्रकारं शृणु प्रभो ॥ ३४ ॥

---

१. कालं भवेत् वै तु ख० ।
२. समाचरेत् ख० ।
३. सकलम् ख० ।
४. वस्त्रके ख० ।
५. नासिकायाम् ख० ।
६. समादाय ख० ।
७. समाचरेत् ख० ।
८. शिरः शुद्धि ......करशोधन......ख० ।
९. 'कार्यार्धे ख० ।

धौतीक्रियां समाकुर्यात् तप्तोदकनिसेवनम् ।
शुक्लवस्त्रं सूक्ष्मसूत्रं [1]चाष्टाङ्गुलप्रमाणकम् ॥ ३५ ॥
द्वात्रिंशद्धस्तमानं तु[2] पूर्णसंख्या उदीरिता ।
मन्त्री प्रथमतः कुर्यात्चतुरङ्गुलवस्त्रकम् ॥ ३६ ॥
दीर्घे पञ्चहस्तमानं तप्तोदकसमन्वितम् ।
भक्षयेत् शेषजिह्वाग्रे संस्थाप्य वसनं सुखम् ॥ ३७ ॥
तर्जनीमध्यमाङ्गुष्ठमुद्राभिर्भक्षयेत् सुधीः ।
क्रमेण वर्धयेन्नित्यं दीर्घे च प्रसवे तथा ॥ ३८ ॥
[3]एतन्मन्त्रेण देवेश पूर्वोक्तमनुना तथा ।
सर्वत्र पूर्वबीजेन[4] संशोध्य बीजमुच्चरेत् ॥ ३९ ॥
शक्तिबीजत्रयं पश्चात् कामबीजत्रयं तथा ।
लक्ष्मीबीजत्रयं पश्चान्महाधौतनिवासिनी ॥ ४० ॥
मेवाडीमलमन्त्रे[5] तु क्षालयद्वयमेव च ।
भार्या वहेत्ततः पश्चादुदरे सन्निवेशयेत् ॥ ४१ ॥
शनैर्निवेशमाकृत्य यावत् सर्वः[6] प्रजायते ।
[7]एतद्योगप्रसादेन वायवी सुरूपा भवेत् ॥ ४२ ॥
ततः कुर्यात् साधकेन्द्रो विग्रहक्षेमकारणात् ।
नेउलीपरमं योगं [8]गात्रदृढनिबन्धनम् ॥ ४३ ॥

---

१. चाष्टाङ्गुलि ख० ।
२. तन्तुमानन्तु ख० ।
३. एतन्मन्त्रेणेति श्लोकार्धं ख० पु० नास्ति ।
४. मन्त्रेण ख० ।
५. मलमन्त्रे ख० ।
६. बन्धे ख० ।
७. सर्वं ख० ।
८. एतदितिश्लोकार्धं ख० पुस्तके नास्ति ।
९. गात्रस्य दृढबन्धनम् ख० ।

[1]घूर्णायमानमाकुर्यादुदरं परमेश्वर ।
सर्वदा चालनं कुर्यात् प्राणवायुप्रधारणम् ।। ४४ ।।
वामे घूर्णितमाकृत्य दक्षिणे घूर्णितं चरेत् ।
एवं क्रमेण देवेश [2]पुटपाकं समाचरेत् ।। ४५ ।।
एतन्मन्त्रेण देवेश [3]शुभासने हठो भवेत् ।
ब्रह्मबीजत्रयं पश्चात् कालीबीजत्रयं ततः ।। ४६ ।।
देवीप्रणवयुग्मं तु गात्रस्थायै नमो द्विठः ।
तदन्ते नाडिकादीनां क्षालनं परमाद्भुतम् ।। ४७ ।।
वक्षः[4]स्थानं महादेव दन्तीयोगेन कारयेत् ।
गजमानं दन्तकाष्ठं निर्मलं सुन्दरं मतम्[5] ।। ४८ ।।
दन्तकाष्ठं [6]क्षालयेद्वै मनुना साधकाग्रणीः ।
[7]मायाबीजत्रयं पश्चाद् भैरवीबीजकत्रयम् ।। ४९ ।।
मर्दिनीबीजयुगलं दन्तकाष्ठनिवासिनी ।
मे हृद्ग्रन्थिं छेदय इति युगलं वह्निसुन्दरी ।। ५० ।।
क्रमेण विधिनानेन गलरन्ध्रे निवेशयेत् ।
यावन्नाभेरधो याति यावत् [8]सुखमयानि च ।। ५१ ।।
तावद्दन्तीयोगकार्यं प्रभाते सर्वकार्यकम् ।
एतदन्ते ततः कुर्यान्नाडीक्षालनमेव च ।। ५२ ।।

---

१. मान मा ख० ।
२. सवाचरेत् ख० पेटपाक क० ।
३. शुभासन ख० ।
४. स्थाने महाकाल ख०
५. नतम् क० ।
६. कारयेत् ख० ।
७. श्यामाबीजत्रयं ख० ।
८. सुखमयो न च ख० ।

तन्मन्त्रं शृणु वीरेन्द्र चामरत्वप्रदायकम् ।
आदौ प्रणवमुद्धृत्य दीर्घप्रणवयुग्मकम् ॥ ५३ ॥
भुवनेशीबीजयुग्मं चन्द्रबीजत्रयं ततः ।
कृष्णबीजत्रयं पश्चादर्कबीजत्रयं ततः ॥ ५४ ॥
[1]वाग्भवत्रयमुद्धृत्य वह्निबीजत्रयं ततः ।
श्रीबीजं मन्मथं लक्ष्मीं शीतले तदनन्तरम् ॥ ५५ ॥
[2]स्वोदरं नाडिकामूलं मलक्षालययुग्मकम् ।
स्वाहान्तमनुना नित्यं क्षालयेन्नाडिकाधमाः ॥ ५६ ॥
यावत्तृष्णानाशकः स्यात्तावत्कालं समाचरेत् ।
[3]यावदुद्गमशक्तित्वं त्रिदण्डावधि धारणा ॥ ५७ ॥
तावन्न जायते नाथ क्षालनं सुखसाधनम् ।
यदि भाग्यवशादेव त्रिदण्डवायुकुम्भकम् ॥ ५८ ॥
स्वयमेव समायाति नाडिकाक्षालनं शुभम् ।
[4]यावत्सूक्ष्मानिलालापं मधुपानं निरन्तम् ॥ ५९ ॥
पादाम्भोजनिःसृतं तु परमानन्दवर्धनम् ।
तत्सुखेनापरिच्छिन्नं [5]संज्ञाननिर्मलेन च ॥ ६० ॥
चिदानन्दस्वरूपेण [6]आनन्दाश्रुविमोचनम् ।
तदा हि [7]हृदयग्रन्थिभेदनं देहवर्धनम् ॥ ६१ ॥

---

१. वाग्भवेति श्लोकार्धं ख० पुस्तके नास्ति ।
२. शाधयन् नाडिकामूलं ख० ।
३. उद्गमशक्तिर्न ख० ।
४. मलालापं ख० ।
५. सज्ञान ख० ।
६. स्वानन्दाश्रुविलोचनम् ख० ।
७. हृदये ग्रन्थिछेदनं ख० ।

तदा हि पुलकं स्थैर्यं देहावेशस्थिरं तथा ।
तदा षट्कञ्ज[1] सिद्धान्तज्ञानं चैतन्यनिर्मलम् ॥ ६२ ॥
चिदानन्दमयो भूत्वा [2]तृष्णाज्ञानविवर्जितः ।
जीवन्मुक्तः परानन्दरसिकः [3]प्रणयप्रियः ॥ ६३ ॥
स्थिरचेता महायोगी भवत्येव न संशयः ।
[4]आस्तिको देवभक्तश्च निन्दावादविवर्जितः ॥ ६४ ॥
स एवात्मा महाज्ञानी भवत्येव न संशयः ।
पञ्चयोगं समाकृत्य नित्यादिकमनुत्तमम् ॥ ६५ ॥
स्नानं कुर्याद्विधानेन तीर्थराजनिकेतने ।
इडागङ्गाजले वापि पिङ्गलायमुनाजले ॥ ६६ ॥
सुषुम्नायां सरस्वत्यां [5]बहुपुष्करकोटिषु ।
तथापि बाह्यस्नाने तु सर्वाङ्गमस्तकं विना ॥ ६७ ॥
सप्तवारं समासिञ्चेत्[6] मस्तकं बाह्यवारिणा ।
मार्जनेनापि मनुना मूलमन्त्रेण वा पुनः ॥ ६८ ॥
ततोऽङ्गं मार्जयित्वा च सन्ध्यावन्दनमाचरेत् ।
बाह्यसन्ध्यां तु [7]मन्त्रेणैवान्तरे प्रकृतीश्वरम् ॥ ६९ ॥
ऊर्ध्वाधस्तैजसं बिन्दुं नादमण्डलसम्पुटम् ।
सन्ध्यावन्दनमाकृत्य महौषधिं प्रभक्षयेत् ॥ ७० ॥

---

१. षट्कज क० ।
२. कृष्णाज्ञान ख० ।
३. प्रलयप्रियः क० ।
४. देवदत्तश्च ख० ।
५. घुपु ख० ।
६. समासिञ्च क० ।
७. मन्त्रजालैः० ख० ।

मूलमन्त्रेणाभिमन्त्र्य पञ्चगव्यं कुलेश्वर ।
ततः कुर्यान्महापूजां स्वस्वमन्त्रोक्तसाधिताम् ॥ ७१ ॥

षट्चक्रार्थं ततो ध्यायेद् यदुक्तं विधिना प्रभो ।
[1]कुण्डलिन्या महापूजा सहस्रनाममङ्गलम् ॥ ७२ ॥

[2]देवतानां पठेद्धीमान् सर्वकाले सुसिद्धये ।
मूलाधारं मुदा भित्वा सूक्ष्मवायुद्वयेन च ॥ ७३ ॥

ततो भेदं स्वाधिष्ठानं राकिणीविष्णुसङ्गमम् ।
तयोरनुक्रमं नाथ सहस्रनाममङ्गलम् ॥ ७४ ॥

अन्यन्तगुह्यकथनं सत्त्वभक्तिप्रकारकम् ।
भित्त्वा भेदं मुदा कुर्यान्मणिपीठस्थदेवयोः ॥ ७५ ॥

ध्यानं ज्ञानं स्तवं नित्यं यजनं नामकीर्तनम् ।
चैतन्यं रुद्रलाकिन्यास्तथा मृत्युञ्जयस्य च ॥ ७६ ॥

नित्यं गुरुमयं ध्यात्वा सर्वगामिनमीश्वरम् ।
चिरजीवी महायोगी भवत्येव न संशयः ॥ ७७ ॥

[3]इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्र-
प्रकरणे भैरवभैरवीसंवादे मणिपूरभेदो नाम
त्रिपञ्चाशत्तमः पटलः ॥



१. कुण्डल्यादिमहापूजां ख० ।

२. देवतानामित्यतः मङ्गलं पर्यन्तं श्लोकद्वयं ख० पुस्तके नास्ति ।

३. इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवभैरवीसंवादे मणिपूरणभेदो नाम चतुःपञ्चाशत्तमः पटलः ।

# चतुःपञ्चाशत्तमः पटलः

श्रीआनन्दभैरवी उवाच—

परापराविभेदज्ञ निगूढज्ञानसाधनम्[1] ।
इदानीं शृणु सर्वज्ञ पञ्चद्रव्यादिसाधनम् ॥ १ ॥
षट्चक्रपद्मभेदार्थं यत्क्रमाज्जायते क्षणात् ।
अमरश्चामरा[2] चैव सर्वसिद्धिप्रदायिका ॥ २ ॥
ब्रह्मज्ञानसाधनी च ब्रह्मानन्दस्वरूपिणी[3] ।
अमरलता[4] तथा ध्येया दूर्वासंज्ञा प्रतिष्ठिता ॥ ३ ॥
सिद्धामरा च निर्गुण्डी सर्वसिद्धिप्रदायिका[5] ।
नीलामरा ततो ग्राह्या नीलतुलसीसञ्ज्ञिता ॥ ४ ॥
अमरुः[6] समयापत्रं चामरा बिल्वपत्रिका ।
शिवप्रिया सदा पूज्या [7]पूर्वोक्तावासमाश्रयेत् ॥ ५ ॥
एतद्भक्षणमन्त्राणि शृणु कैलासभूपते ।
ब्राह्मणी[8] क्षत्रिया वैश्या शूद्रा च [9]क्रमतो जया ॥ ६ ॥
तत्तन्मन्त्रेण संशोध्य भक्षयेन्मनुनामुना ।
सर्वासाममरादीनां भक्षणे समुदीरिता ॥ ७ ॥

---

१. साधन क० ।
२. "अमरश्चामरश्चैव.................प्रदायकः" ख० ।
३. ब्रह्मज्ञानप्रकाशिनी ख० ।
४. अमलता ख० ।
५. सर्वसिद्धिप्रदायिनी ख० ।
६. अमरा ख० ।
७. पूर्वोक्ताम् ख० ।
८. ब्रह्माणि क० ।
९. क्रमशो ख० ।

प्रणवं दीर्घप्रणवं कपिले ज्ञानसाधनि ।
[1]मम योगं साधयेति युगं स्वरेण सम्पुटम् ॥ ८ ॥

[2]शाखासमूहसम्पूर्णे महौषधिनिवासिनि ।
मामेकममरं [3]देहि कुरु युग्मं ततो द्विठः ॥ ९ ॥

अमराशनमन्त्राणि शृणुष्व पार्वतीश्वर ।
यस्य स्मरणमात्रेण नरो नारायणो भवेत् ॥ १० ॥

शिववद् विहरेल्लोके विल्वपत्रस्य भक्षणात् ।
श्रीबीजत्रयमुद्धृत्य वाग्देवीत्रितयं ततः ॥ ११ ॥

लक्ष्मीकामेश्वरीबीजं[4] रमाकामत्रयं त्रयम् ।
सिद्धविश्वेशि[5] परमे निगूढतरुवासिनि ॥ १२ ॥

मामेकं ज्ञानतत्त्वेऽन्ते[6] नियोजय युगं द्विठः ।
एतन्मन्त्रेण वीरेन्द्रो विधितत्त्वाख्यमुद्रया ॥ १३ ॥

शोधयित्वा पुनर्नाथ चामरां[7] शोधयेत्ततः ।
[8]दूर्वा देवी त्रिभुवने अमृतत्वप्रदायिनि ॥ १४ ॥

ग्रन्थिच्छेदभेदकारी प्रणवाद्ये परे रमा[9] ।
ततो हि विष्णुबीजञ्च किङ्किणी[10]बीजमुद्धरेत् ॥ १५ ॥

---

१. समयोगम् ख० ।
२. प्रशाखा ख० ।
३. देव ख० ।
४. बीज क० ।
५. विल्वेशि ख० ।
६. तु ख० ।
७. चामरतां तु शोधयेत् ख० ।
८. पूर्वा ख० ।
९. पुरेव सा ख० ।
१०. किं किं बीजसमुद्धरेत् क० ।

राजराजेश्वरीबीजं श्रीबीजं त्रीणि तत्परम्[1] ।
सुधाखण्डे मामिहान्ते सिद्धामरपदं लिखेत् ॥ १६ ॥
देहि देहि नमः स्वाहा शब्दमुच्चार्य शोधयेत् ।
[2]एतद्भक्षणमात्रेण चिरकालं सुखी भवेत् ॥ १७ ॥
सर्वसंयोगमात्रेण सिद्धो भवति साधकः ।
सिद्धामराशोधनं तु शृणु श्रीचन्द्रशेखर ॥ १८ ॥
सिद्धामरा च निर्गुण्डी त्रिषु लोकेषु गोपिता ।
एतत्प्रधानं मूलञ्च पत्रं वा [3]चालयेत् सुधीः ॥ १९ ॥
मूलाभावे दलं [4]ग्राह्यं दलाभावे न मूलकम् ।
आनयेत् साधकश्रेष्ठः शोभनेन दिनेन तु ॥ २० ॥
तदा भवति सिद्धिश्च कौलानां नियमो नहि ।
कौलिके सर्वसिद्धिश्च कौलिके योगसाधनम् ॥ २१ ॥
कुलाचारविहीनानां [5]योगभोगादिकं कथम् ।
विना योगेन भोगादिसञ्चयो जायते कथम् ॥ २२ ॥
[6]योगसाधनमात्रेण भोगसाधनमालभेत ।
तद्भोगं परमं ज्ञानं [7]कालामृतनिसेवनम् ॥ २३ ॥
विषयाह्लादभोगादिरनायासेन वर्धते ।
[8]शरीरिणामादिकार्यं शरीरस्य प्रभो प्रियम् ॥ २४ ॥

---

१. निर्वैरिसम् क० ।
२. स्मरणमात्रेण ख० ।
३. भक्षयेत् ख० ।
४. भोज्यं पत्राभावे च ख० ।
५. योगं योगादिकम् ख० ।
६. योगसञ्चयमात्रेण ख० ।
७. ज्ञानामृतनिषेवणम् ख० ।
८. शरीराणाम् ख० ।

शीतलामृतरूपाढ्यं व्यक्ताव्यक्तप्रकारकम् ।
आदिसाधनमेवं हि कथितं स्नेहहेतुना ॥ २५ ॥
वल्लभ प्राणरक्षार्थे [1]शोकार्तिवारणाय च ।
पुनस्तु कथये [2]तुभ्यं निर्गुण्डीशोधनं मनुम् ॥ २६ ॥
ॐ निर्गुण्डि महामाये [3]महायवनिवासिनि ।
आयुरारोग्यजननि ब्रह्मशब्दनिवासिनि ॥ २७ ॥
मदीयं सकलं कायं शुद्धं[4] कुरु युगं ततः ।
नान्तयुग्मं बिन्दुनादभूषितं चारुतेजसम् ॥ २८ ॥
चतुर्दशस्वरव्याप्तं (ठ युगं)[5] बिन्दुभूषितम् ।
लक्ष्मीबीजत्रयं [6]पश्चाद् रमाबीजमयं लिखेत् ॥ २९ ॥
वज्रकायं देहि देहि शब्दान्ते वह्निसुन्दरी ।
एतन्मन्त्रेण संशोध्य भक्षयेत् साधकोत्तमः ॥ ३० ॥
ततोऽमरो भवेत् क्षिप्रं नात्र कार्या विचारणा ।
तुलसीशोधनं वक्ष्ये शृणुष्व परमेश्वर ॥ ३१ ॥
यत्कृत्वा च निरोगी स्याद्बलवान् विजितेन्द्रियः ।
प्रणवं वैष्णवी देवी सत्त्वज्ञाननिवासिनि ॥ ३२ ॥
कामबीजत्रयान्ते तु मां रक्ष युगलं द्विठः ।
एतच्छोधनमाकृत्य भक्षणं यः करोति च[7] ॥ ३३ ॥

---

१. शोकाश्रु ख० ।
२. तेऽहं ख० ।
३. महासत्त्व ख० ।
४. गुह्यं ख० ।
५. धायुगं ख० ।
६. उमा ख० ।
७. हि ख० ।

कायसिद्धिर्भवेत्तस्य ध्यानधारणयोगिनः ॥ ३४ ॥

[1]इति श्रीरुद्रयामले उत्तरतन्त्रे सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे
भैरवीभैरवसंवादे पञ्चसिद्धद्रव्यशोधनं
नाम चतुःपञ्चाशत्तमः पटलः ॥



१. इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे पञ्चद्रव्यशोधनं नाम पञ्चपञ्चाशत्तमः पटलः ।

# पञ्चपञ्चाशत्तमः पटलः

श्रीआनन्दभैरवी उवाच —

कथयामि तव स्नेहात् कायवश्यविशेषणात् ।
हठयोगं प्रकथितमिदानीं शृणुत क्रमम् ॥ १ ॥
मणिपूरस्थितं रुद्रं त्रैलोक्ये [1]पवनाक्षयम् ।
कथयामि शिवानन्द शिवशङ्कर मङ्गल[2] ॥ २ ॥
स्वाधिष्ठानोर्ध्वदेशे च परमानन्दसागरम् ।
नाभिमूलं मेघजालमध्यविद्युच्छताकुलम् ॥ ३ ॥
रहस्यातिरहस्यं च योगिनामतिसारगम् ।
तन्नाभिमूलदेशे च नीलपद्मं महाप्रभम् ॥ ४ ॥
तद्दलाग्रे सदा भान्ति डादि[3]फान्ताक्षराणि च ।
तद्बाह्ये शोभितं रूपं त्रिकोणमनलस्य च ॥ ५ ॥
प्रभातसूर्यसंकाशं शिखाकारं[4] निरञ्जनम् ।
तत्राग्निबीजरूपं च रूपातीतं गुणान्तरम्[5] ॥ ६ ॥
विचिन्तयेन्मेषपृष्ठवाहनं चारुणाकृतिम् ।
चतुर्बाहुं त्रिनयनं चारुदेहधरं परम् ॥ ७ ॥
तत्क्रोडे भाति रुद्रेशः सिन्दूरारुणविग्रहः ।
[6]ब्रह्मरूपी त्रिनयनः सृष्टिसंहारकारकः ॥ ८ ॥

---

१. परमाक्षरम् ख० ।
२. मङ्गलम् ख० ।
३. भादिकान्ताक्षराणि ख० ।
४. शिखाकारम् ख० ।
५. निरञ्जनम् क० ।
६. वृद्धरूपी त्रिनेत्रश्च ख० ।

विभूतिभूषिताङ्गस्तु लोकानामिष्टदो विभुः ।
[1]तस्य वामे सदा भाति लाकिनी परदेवता ॥ ९ ॥
चतुर्भुजा महादेवी त्रिनेत्रा सौख्यदायिनी ।
श्यामाङ्गी पीतवसना विचित्रालङ्कृतामरा[2] ॥ १० ॥
सर्वसिद्धिप्रदा माता सर्वत्र सर्वपालिका ।
सदा रक्षतु मां देवी विद्याभिः कुलपालिका[3] ॥ ११ ॥
एवं ध्यात्वा पूजयित्वा जपयागस्तवादिभिः ।
ततः सिद्धो भवेन्मन्त्री मणिपूरप्रसादतः ॥ १२ ॥
मणिपूरफलं वक्ष्ये समासेन शृणुष्व [4]तत् ।
कोटिवर्षशतेनापि फलं वक्तुं न शक्यते ॥ १३ ॥
मणिपूरानन्तरं हि प्रवक्तव्यमनाहतम्[5] ।
स्तोत्रं ध्यानं नामधेयं[6] सहस्रगुणशङ्करम् ॥ १४ ॥
फलमत्यन्तगुह्यं च [7]सुहृत्पद्मोपसिद्धिदम् ।
आत्मज्ञानं मोक्षसिद्धिं प्रेमभक्त्यादिलाभकम् ॥ १५ ॥
संहर्ता जनसङ्घानां पालकः कमलाकरः[8] ।
अकस्माज्ज्ञानसन्दोहलक्ष्मीं प्राप्नोति योगिराट् ॥ १६ ॥

[9]इति श्रीरुद्रयामले मणिपूरभेदोनाम
पञ्चपञ्चाशत्तमः पटलः ॥



---

१. तस्या क० ।
२. मलङ्कृताम्बरा ख० ।
३. कालिका ख० ।
४. शृणु प्रभो ख० ।
५. अनाहतः ख० ।
६. समाधेयम् ख० ।
७. सुहृत्पद्मोपलब्धिगम् ख० ।
८. कमलापतिः ख० ।
९. इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे मणिपूरभेदोनाम षट्पञ्चाशत्तमः पटलः ।

# षट्पञ्चाशत्तमः पटलः

आनन्दभैरव उवाच—

वद कामिनि कौमारि सुरानन्दे कुलेश्वरि ।
हृदयाम्भोजविन्यासमधुना वक्तुमर्हसि ॥ १ ॥

यस्य विज्ञानमात्रेण नरो योगेश्वरो भवेत् ।
सर्वसिद्धिक्रियास्थानं योगिनामतिदुर्लभम् ॥ २ ॥

सर्वतत्त्वस्वरूपं च सिद्धिमार्गप्रकाशकम् ।
[1]हृदयाम्भोजविज्ञानान्मार्तण्डभैरवो भवेत् ॥ ३ ॥

श्रोतुमिच्छामि तत्सर्वं [2]षट्चक्रसारमङ्गलम् ।
[3]स्नेहाद् दृष्टिक्रमेणैव भक्तियोगोद्भवेन च ॥ ४ ॥

भेदनं भावनं ज्ञानं चित्तदर्शनमेव च ।
मन्त्रोद्धारश्च सङ्केतं सर्वज्ञादिगुणोदयम् ॥ ५ ॥

यजनं काकिनीदेव्या ईश्वरस्य गुणात्मनः ।
स्तवनं कवचं सर्वं सहस्रनाममङ्गलम् ॥ ६ ॥

वायूनां मण्डलज्ञानं समासेन वदस्व मे ।
त्वमेव शरणं देवि त्राहि मां दुःखसङ्कटात् ॥ ७ ॥

---

१. हृदयाम्भोध क० ।

२. षट्सु चक्रेषु मङ्गमम् ख० ।

३. स्नेह ख० ।

श्रीआनन्दभैरवी उवाच—

महाकाल [1]भयाभाव भक्तिभावपरायण ।
[2]ममानन्दभैरवेश शृणु वक्ष्यामि तत्त्वतः ॥ ८ ॥

यदुक्तं भवता चात्र चाश्रुतं [3]चाद्भुतं मतम् ।
नोक्तं कुत्रापि सर्वेश तव स्नेहात् प्रकाशितम् ॥ ९ ॥

अप्रकाश्यमिदं रत्नं दुःखजालनिवारणम् ।
सावधानेन सर्वेश कुरु त्वं योगसाधनम् ॥ १० ॥

मयि योगं महादेव कृत्वा कालवशं नय[4] ।
मयि योगं न [5]करोति सिद्धिभक्तिक्रियादिकम् ॥ ११ ॥

अकस्मान्मरणं तस्य कालभक्षो न संशयः ।
केवलं मां हृदम्भोजे परिपूर्णफलोदये ॥ १२ ॥

सर्वाकारे[6] मनोराज्ये नानाकौतुकसंकुले ।
पूजयित्वा सदा ध्यायेत् काकिनीं मां न संशयः ॥ १३ ॥

स[7] योगी जायते नाथ हृदम्बुजप्रसादतः ।
हृत्पङ्केरुहमध्यस्थाः सर्वे देवाः सवासवाः ॥ १४ ॥

मामर्चयन्ति ते नित्यं भक्तिभावपरायणाः ।
ये ध्यायन्ति महावीर[8] ते पश्यन्ति सवासवान् ॥ १५ ॥

---

१. महाभाग ख० ।
२. महानन्द ख० ।
३. परमाद्भुतम् ख० ।
४. हर ख० ।
५. करोषि ख० ।
६. सर्वकाममनोबाह्ये········सङ्कुलः ख० ।
७. संयोगी·······हृदम्भोज ख० ।
८. महावीरास्तपस्यन्ति च वासवान् ख० ।

क्रमेण प्राणसंयोगान् मां पश्यन्ति न संशयः ।
[1]आमेकं काकिनीध्यानं स्थिरवायुं प्रचण्डकम् ॥ १६ ॥
पश्यन्ति योगिनः काये अष्टैश्वर्यं महाप्रभम् ।
केवलं भक्तियोगेन नित्ययोगे[2] स्युरुत्तमाः ॥ १७ ॥
पद्मध्यानं प्रथमतः कृत्वा सिद्धो [3]भवेन्नरः ।
तद्ध्यानं शृणु वीरेश योगिनामिह दुर्लभम् ॥ १८ ॥
[4]हृत्पद्मं कुलपालितं सुललितं हंसेन संशोधितं
[5]बन्धूकामलदीप्तिकोटिजडितं सम्भावितं साधकैः ।
अत्युत्कृष्टमयूखपुञ्जमिलितं सिन्दूरपूरारुणं[6]
ध्यात्वा पश्यति यो नरः प्रतिदिनं काद्यारुणैरावृतम् ॥ १९ ॥
स स्यात्कोटिधनेश्वरो नरवरो भूयात्स्वभावार्णवे[7]
यो नित्यं लिपिभावनं प्रकुरुते नित्येश्वरालोकनात् ।
तद्ध्यानं क्रमतो वदामि सकलं येन प्रसिद्धो[8] भवे-
दानन्दार्णवमध्यपद्मकलितं [9]काद्यर्कवर्णोज्ज्वलम् ॥ २० ॥
दले पूर्वे ध्यायेदतिविमलवर्णं कमिति वा
प्रभातार्कच्छायारुणकिरणयोगं युगमयम् ।
[10]चतुर्बाहुं नित्यं त्रिनयनमनन्तं रविगतं
भवाद्याशक्तिस्थं[11] स्वभवनघटाशोभिततनुम् ॥२१कँ॥

---

१. मामेकम् क० ।
२. नित्ययोगेन चोत्तमम् ख० ।
३. न संशयः ख० ।
४. हृत्पद्मे ख० ।
५. वल्गु कोमल ख० ।
६. वर्णारुणम् ख० ।
७. भूयस्त्वत्यं वक्षसि ख० ।
८. प्रसिद्धे ख० ।
९. काद्यार्क ख० ।
१०. चतुर्धाङ्ग ख० ।
११. शक्तिस्त्वं ख० ।

[1]द्वितीये पत्रेऽस्मिन् खमरुणसमूहाश्रयपदं
पदं श्रीतारिण्या अनिलगगनयोः प्रियकरम् ।
मुदा ध्यायेदेवं परममनिलं देवभुजगं
सुवर्णालङ्कारं त्रिनयनममौल्यं सुखमयम् ॥२२खँ॥

तृतीये[2] पत्रेऽस्मिन् विधुयुतकपालं त्रिनयनं
[3]स्वसिन्दूराकारं द्वियुगभुजशोभाभवमहम् ।
सदा ध्यायेदेवं परमपुरुषं श्रीगणपतिं
[4]स्फुरद्रक्ताकारं तरुणमणिमालं जितमदम् ॥२३गँ॥

चतुःपत्रे ध्यायेद्यमरुणशतं[5] घोरनिनदं
क्रियादक्षं मूर्तिं त्रिनयनसरोजं युगभुजम् ।
वराभीतिप्रोच्छत्स्फटिकजपमालादिसहितं
[6]फणालङ्कारा‌ङ्गं शिव शिव मुखेशोत्तममहम् ॥२४घँ॥

डंबीजं सिन्दूरारुणममखिलनाथं त्रिनयनं
महामोक्षस्थानं [7]मणिकनकरत्नाद्यभरणम् ।
[8]चतुर्बाहुं रुद्रं जगति भवमेकं गुणविभुं
[9]कपालं श्रीमालं वरमभयकं बिभ्रतमहम् ॥२५ङं॥

---

१. द्वितीये...सुखमयमिति श्लोकमिदं ख० पुस्तके नास्ति ।
२. द्वितीयं पत्रस्थं ख० ।
३. ससिन्दूराकारं...त्रिगुणभुज ख० ।
४. सुरत्नाकारं वै ... मालं ख० ।
५. अमलमरुणम् ख० ।
६. कलाऽलङ्कारा‌ङ्ग शिरसिह मुखेशोत्तममहम् क० ।
७. शशि ख० ।
८. चतुर्धा‌ङ्गं.........पतितजननाथं ख० ।
९. क्रियानाथं देवं ख० ।

[1]चतुर्बाहूल्लासं कमलवरमालासिसहितं
विभुं तं ध्यायेऽहं विधुशतमुखं तं त्रिनयनम् ।
प्रभातार्कप्रायं सकलमणिरत्नाभरणकं
महाज्योत्स्नाजालं परमरसबिन्दूद्भवतनुम् ॥२६चँ॥

तमेकं नेत्रस्थं [2]छममलकरं नूतनरविं
चतुर्बाहुं[3] ध्याये वरतनुकपालेषु सहितम् ।
सुधाधारापानं कनकजपमालाऽऽवृततनुं
त्रिनेत्रं योगेन्द्रं वसुदलगतं चारुवदनम् ॥छँ २७॥

चतुर्वक्त्रं ध्याये [4]जमजममरं सारुणतनुं
विशालाक्षं सूक्ष्मं [5]समरसमयं ब्रह्मवपुषम् ।
[6]चतुर्बाहुं देवं त्रिभुवनपदं सारघटितं
महाशङ्खं [7]रुद्रं वरमभयकं बिभ्रतबलम् ॥जँ २८॥

महाकायं तेजोमयमपि चरुं बीजमखिलं
[8]मुदा ध्याये कामापहमतिमुखं चाष्टमदले ।
महासिन्दूराद्रिं दिनकरकलाकोटिविमलं
त्रिनेत्रं पञ्चास्यं दशभुजयुतं सर्ववपुषम् ॥झँ २९॥

---

१. चतुर्धाङ्गः ध्याये ख० ।

२. छल ख० ।

३. चतुर्धाङ्गः ...... कपालेष्वष्ट सहितम् ख० ।

४. अथ च मनसा चारुणतनुम् ख० ।

५. समयमनिशं चक्रवपुषम् ख० ।

६. चतुर्धाङ्गः ख० ।

७. रुण्डं क० ।

८. सदा ख० ।

[1]ञबीजं [2]सार्धेन्दूद्भवशिखमखेशं त्रिनयनं
[3]चतुर्बाहुं ध्याये सुकमलगदाचक्रनियुतम् ।
महामालाव्याक्षं [4]सुकनकशुभाऽलङ्कृतगुरुं
[5]प्रभातार्कं विश्वार्चितजडिलरूपं रविदले ॥ञँ ३०॥

मनोरूपाच्छन्नं त्रिनयनमधीशारुणदले[6]
टबीजं बिन्द्विन्द्वं[7] जपवटिवराभीत्यसिधरम् ।
तमेकं सोमेशं [8]मणिमयचलत्कुण्डलधरं
मुदा ध्याये शम्भुं हृदि शिवदले सिद्धकमले ॥टँ ३१॥

त्रिनेत्रं कामाख्यं शिशुकरुणया सिद्धिफलदं
सुरत्नाऽलङ्कारच्छविरुचितनूनां समनघम् ।
ठकारं [9]बिन्द्विन्द्वं नवरविघटाकोटिकिरणं
दले चार्के ध्याये कमलवरमालाशिशुधरम् ॥ठँ ३२॥

एतच्छुद्धमनोलयस्य भवनं[10] चैतन्यसंसिद्धये
वर्णानां जपभावनं यदि सदा चिन्तामणेर्मण्डलम् ।
योगीन्द्रः कुरुते वशिष्ठसदृशो वाचां पतिर्भूतले
वाक्सिद्धिं चिरकालवासमखिले देवो हि नो मानुषः॥ ३३ ॥

---

१. ञं ख० ।
२. सार्धचन्द्रोद्भव ख० ।
३. चतुर्धाङ्गं स्वकमल…निविडम् ।
४. मालाङ्कित गुरुम् ख० ।
५. प्रभातार्कम् ख० ।
६. अधीशं दशदले ख० ।
७. टकारं विन्द्वाढ्यम् ख० ।
८. कनकलसत्कुण्डलधरम् ख० ।
९. विन्द्वाख्यम्…… विकलम् ख० ।
१०. भुवने ख० ।

वाञ्छाचिन्तामणिगृहं[1] हृदयाम्भोजमण्डलम् ।
तन्मध्ये पवनस्थानं मण्डलाकारमुज्ज्वलम् ॥ ३४ ॥
बुद्धिप्रतिभया व्याप्तं तन्मध्ये पवनाक्षरम् ।
आच्छन्नधूम्रसङ्काशं प्रसिद्धस्थानमुत्तमम् ॥ ३५ ॥
तन्मध्ये देवतापीठं षट्कोणं मण्डलं परम् ।
तन्मध्ये भावयेदिष्टं स्वस्वकल्पोक्तसाधितम् ॥ ३६ ॥
वायोर्ध्यानं तत्र कुर्यादत्यन्तसूक्ष्मरूपिणम् ।
निराकारं परंब्रह्म साकारं शब्दरूपिणम् ॥ ३७ ॥
निरक्षरं स्वाक्षराढ्यं महोग्रं [2]स्थिररूपिणम् ।
[3]चतुर्बाहुं जगद्व्याप्तं कृष्णसारासनं यवम् ॥ ३८ ॥
लोकत्रयाणां वरदं करुणासिन्धुरूपिणम् ।
पञ्चभूतात्मकं रौद्रं प्राणसञ्ज्ञं किरीटिनम् ॥ ३९ ॥
संबिभ्रतं [4]वराभीतिघण्टाडमरुसेवकान् ।
[5]ईशनाम्ना परिचितं [6]परहंसं कुलेश्वरम् ॥ ४० ॥
सर्वाऽलङ्कारशोभाङ्गं [7]विवेकोदयकारणम् ।
विचिन्तयेत् साधकेन्द्रः परिवारगणावृतम् ॥ ४१ ॥
तत्र पङ्केरुहे ध्यायेदीश्वरं वर्णरूपिणम् ।
त्रैलोक्यमङ्गलं नाथं[8] चतुर्बाहुं[9] किरीटिनम् ॥ ४२ ॥

---

१. मणेर्गेहं ख० ।
२. महोग्रग्रन्थिरूपिणम् ख० ।
३. चतुर्भाङ्गं ··· वरम् ख० ।
४. डामर ख० ।
५. ईशा ख० ।
६. परं हंसं ख० ।
७. रविकोदयकारणम् ख० ।
८. नाथ क० ।
९. चतुर्भाङ्गम् ख० ।

रत्नमालाशोभिताङ्गं शुक्लवर्णं महाप्रभम् ।
ईश्वरं योगिनामीशं [1]वरदं परमेश्वरम् ॥ ४३ ॥

[2]वराभीतिशङ्खपद्मश्रिया जुष्टं पुरातनम् ।
रत्नाभरणभूषाङ्गं हृदयाम्भोजवासिनम् ॥ ४४ ॥

वाञ्छातिरिक्तफलदं भावसिद्धिप्रकाशकम् ।
परमहंसमीशानं ध्यायेद् हृत्पद्ममण्डले ॥ ४५ ॥

तत्पार्श्वे ध्यानमाकुर्यात् काकिनीं परमेश्वरीम् ।
त्रैलोक्यपूजितां देवीं काकचञ्चुप्रकाशिनीम् ॥ ४६ ॥

चतुर्भुजां पीतवर्णां[3] पीतवस्त्रोपशोभिताम् ।
नवविद्युत्कोटिरूपां विलोलनेत्रपङ्कजाम् ॥ ४७ ॥

कपालशशिशूलास्त्रवरदानसमाकुलाम् ।
विचित्ररत्ननिर्माण[4]स्वर्णाऽलङ्कारभूषिताम् ॥ ४८ ॥

[5]त्रैलोक्यललितां सूक्ष्मां वराभयकराम्बुजाम् ।
सुधापानरतां मत्तां पूर्णरूपां कुलेश्वरीम् ॥ ४९ ॥

रत्नकङ्कणमालाढ्यां परमानन्दभैरवीम् ।
हृदयाम्भोजमध्यस्थां ध्यायेऽहं हंसगामिनीम् ॥ ५० ॥

तत्पीठमध्यनिकरे[6] त्रिकोणं परिचिन्तयेत् ।
पीठशक्तिं सुवर्णाढ्यां विद्युत्कोटिसमोदयाम् ॥ ५१ ॥

---

१. ध्यायेद् हृत्पद्ममण्डले ख० ।
२. वराभीतीत्यत आरभ्य पद्ममण्डले पर्यन्तं ख० नास्ति ।
३. महादेवीं ख० ।
४. निर्माणाम् ख० ।
५. त्रैगुण्य ख० ।
६. ध्याननिकटे त्रिकोणाम् ख० ।

काकिनीसदृशीं मत्तां पूर्णान्तः[1]करणोद्यताम् ।
सर्वाऽलङ्कारभूषाढ्यां परिवारगणावृताम् ॥ ५२ ॥
तद्दक्षिणे पार्श्वभागे [2]चिन्तयेत्त्वामलिङ्गकम् ।
सुवर्णशुद्धसंकाशं निर्मलं चारुतेजसम् ॥ ५३ ॥
महालक्ष्मीप्रियानन्दं सर्वाकारं निरञ्जनम् ।
ज्ञानयोगोदयं ब्रह्मरूपिणं बहुरूपिणम् ॥ ५४ ॥
प्रदीपकलिकाकारं चिन्तयेदीश्वरं शिवम् ।
एतेषां ज्ञानमाकृत्य[3] वाग्मीशो भवति क्षणात् ॥ ५५ ॥
वाक्यसिद्धिं[4] तत्र नाथ चिन्तयेत्तत्प्रसिद्धये ।
तत्र भानोर्मण्डलञ्च चिन्तयेत् साधकाग्रणीः ॥ ५६ ॥
पद्मकिञ्जल्कमध्ये तु चिन्तयेदरुणायुतम् ।
मासैकसाधनादेव योगी स्याच्छीतलाङ्गधृक् ॥ ५७ ॥
द्विमासे ग्रन्थिभेदः [5]स्यादनन्तगुणवान् भवेत् ।
[6]त्रिमासे योगयोग्यः स्यात् सर्पादिविषनाशकृत् ॥ ५८ ॥
चतुर्मासे निर्मलात्मा भावकः स्थिरमानसः ।
पञ्चमे मासि सम्प्राप्ते वायवी कृपयान्विता ॥ ५९ ॥
स्थिरवायुः स्थिरा [7]दृष्टिरतीव सुखसम्पदः ।
ततो दिने दिने वृद्धिर्वायूनामनुकम्पया ॥ ६० ॥

---

१. पूर्वान्तः ख० ।
२. बाण ख० ।
३. ध्यानम् ख० ।
४. राज्यसिद्धिम् .........नाथम् ख० ।
५. अत्यन्तगुणवान् ख० ।
६. साधको ख० सर्वादि इति क० ।
७. स्वतीव सुखसम्पदाम् ख० ।

षण्मासात् पापसंत्यक्तो मुक्तवद् भ्रमते चिरम् ।
जले चाग्नौ च भूगर्त्ते कदाचिन्न म्रियेत हि ॥ ६१ ॥
ईश्वरात्मा महाज्ञानी निःशङ्को [1]निरुपद्रुतः ।
[2]महाविवेकसिद्धान्तज्ञानी भेदविवर्जितः ॥ ६२ ॥
स भूत्वा चिरजीवी च [3]भुक्तिभागी दिने दिने ।
सप्तमे कल्पसन्त्यक्तो मदनो [4]दोषविग्रहः ॥ ६३ ॥
नित्यानन्दगुणप्राप्तिर्भूमित्यागो दिने दिने ।
अष्टमे सर्वशत्रुघ्नो [5]रामनामांबवर्जितः ॥ ६४ ॥
अणिमादिदर्शनञ्च ब्रह्मगोविन्दुदर्शनम् ।
नवमे क्षालना सिद्धिर्भूमित्यागस्त्रिहस्तकः[6] ॥ ६५ ॥
[7]दशमे योगसिद्धिश्च षट्चक्रादिप्रदर्शनम् ।
ब्रह्मरन्ध्रभेदनज्ञो महाआनन्दविग्रहः ॥ ६६ ॥
एकादशे सर्वसिद्धिः पञ्चभूतमयाङ्गधृक् ।
सप्तस्वर्गालोकनञ्च षट्शिवप्रियदर्शनम् ॥ ६७ ॥
द्वादशे देवसन्मानं देवतापाददर्शनम् ।
अत्यन्तं सुखसन्तानं मायाजालनिवारणम् ॥ ६८ ॥
सर्वविद्यासर्वसिद्धिर्दिव्यभक्तिः शुभोदया ।
ते वीरास्ते च योगीन्द्रास्ते दिव्यास्ते च भैरवाः ॥ ६९ ॥

---

१. निरुपद्रवः ख० ।
२. सिद्धिस्तु ख० ।
३. मुक्तिभागी क० ।
४. मदनोपम ख० ।
५. वाञ्छानाशविवर्जितः ख० ।
६. पञ्चभूतमयाङ्गधृक् ख० ।
७. दशमे इत्यतो मयाङ्गधृगिति पर्यन्तं ख० पु० नास्ति ।

ते [1]सर्वे मृत्युजेतारस्ते भक्ता मुक्तिभागिनः ।
ये तिष्ठन्ति महारण्ये निर्जने पर्वते चिरम् ॥ ७० ॥

धारयन्ति साधयन्ति योगमेतत् कुलेश्वर ।
योगे[2] योगाद् भवेन्मोक्ष इति मे तत्त्वनिर्णयः ॥ ७१ ॥

संसारोत्तारणे[3] मुक्तिर्योगशब्देन कथ्यते ।
लोके हि दुर्लभं योगं योगात्परतरं नहि ॥ ७२ ॥

योगं पञ्चविधं प्रोक्तमेकं विषयसम्मतम् ।
द्वितीयश्च द्विभेदश्च पूजायोगं तृतीयकम् ॥ ७३ ॥

भक्तियोगं परं ब्रह्मयोगसारं कुलेश्वर ।
सर्वत्रापि मनोयोगाद्बद्धो मुक्तो भवेद् ध्रुवम् ॥ ७४ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवभैरवीसंवादेऽनाहतपद्म-विन्यासो नाम [4]षट्पञ्चाशत्तमः पटलः ।



---

१. मृत्युगोप्तार ख० ।

२. योगयोगाद्......तत्त्वस्य निर्गमः ख० ।

३. संसारोत्तारणात् ख० ।

४. इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्र ....सप्तपञ्चाशत्तमः पटलः ।

# सप्तपञ्चाशत्तमः पटलः

श्रीआनन्दभैरवी उवाच—

अथातः सम्प्रवक्ष्यामि विवेकगुणलक्षणम् ।
वर्णध्यानानन्तरं हि पूजनं तन्महाफलम्[1] ॥ १ ॥

पूजया लभते पूजां विवेकं भावसम्भवम् ।
काकिनीश्वरसंयोगं भावं परमदुर्लभम् ॥ २ ॥

यजनं काकिनीदेव्या ईश्वरस्यापि भावनम् ।
पूजाभावे महासिद्धिर्जायते तत्क्षणाच्छिव ॥ ३ ॥

भावेन लभ्यते पूजा विवेकं पूजया लभेत् ।
विवेकं[2] ब्रह्मभावन्तु प्राप्नोति कोटिजन्मनि ॥ ४ ॥

अथवा लभ्यते शीघ्रं तवापि मदनुग्रहैः ।
तत्प्रकारं शृणु प्राणवल्लभ त्रिपुरेश्वर ॥ ५ ॥

यस्य विज्ञानमात्रेण भवेत् परमभावकः ।
विचिन्तयेद्वर्णपार्श्वे चतुर्दिक्षु क्रमेण तु ॥ ६ ॥

सिद्धेश्वरान् योगयुक्तान् महापुरुषसंश्रितान्[3] ।
ब्रह्माणं परमं हंसं रुद्रं विश्वेश्वरं प्रभुम् ॥ ७ ॥

मृत्युञ्जयं महाकालं नीलकण्ठं सुरेश्वरम् ।
श्रीविष्णुं कमलानाथं पञ्चचूडं कुमारकम् ॥ ८ ॥

---

१. महत्फलम् ख० ।
२. विवेकब्रह्मभावस्तु ख० ।
३. संज्ञितान् ख० ।

चन्द्रं सूर्यं [1]प्रजानाथं दक्षं मुनीन्द्रमेव च ।
[2]प्रचेतसं मरीचिश्च कश्यपं पुलहं तथा ॥ ९ ॥
वशिष्ठश्च भृगुश्चैव गौतमं कपिलं मुनिम् ।
पुलस्त्यश्च क्रतुश्चैव प्रह्लादं कर्दमं तथा ॥ १० ॥
अथर्वाङ्गिरसर्षिश्च[3] वालखिल्यान् मरीचिपान् ।
[4]मलसश्चान्तरीक्षश्च विद्याश्च पवनं विभुम् ॥ ११ ॥
तेजसश्च जलश्चैव महीस्पर्शश्च शब्दकम् ।
तथा रूपं रसं गन्धं प्रकृतिश्च विकारकम् ॥ १२ ॥
यच्चान्यत् कारणं सर्वं [5]भुवाक्षयं चराचरम ।
तत्पार्श्वगामिनो देवा सेन्द्रा [6]भ्रमन्ति नित्यशः ॥ १३ ॥
अगस्त्यश्च महातेजा मार्कण्डेयश्च वीर्यवान् ।
यमदग्निर्भरद्वाजः [7]संवर्तश्च्यवनस्तथा ॥ १४ ॥
दुर्वासाश्च महाभाग ऋष्यश्रृङ्गश्च धार्मिकः ।
सनत्कुमारो भगवान् योगाचार्यो महातपाः ॥ १५ ॥
असितो देवलश्चैव जैगीषव्यश्च तत्त्ववित् ।
ऋषभाजितशक्रश्च[8] महावीर्यस्तथा मणिः ॥ १६ ॥
[9]आयुर्वेदं तथाष्टाङ्गमेते भान्ति स्वमूर्तयः ।
चन्द्रमाः सह नक्षत्रैरादित्यैश्च गभस्तिभिः ॥ १७ ॥

---

१. प्रभानाथम् ख० ।
२. प्रचेतारम् क० ।
३. अंगिरसञ्चैव ख० ।
४. मानसाश्चान्तरीक्षाश्च ख० ।
५. भवाक्षय ख० ।
६. सम्भान्ति क० ।
७. सर्वाम्यः क० ।
८. शत्रुश्च ख० ।
९. आयुर्वेदमित्यतः परायणः पर्यन्तं ख० पुस्तके नास्ति ।

वायव ऋतवश्चैव सङ्कल्पः प्राण एव च ।
मूर्तिमन्तो महात्मानो महाव्रतपरायणाः ॥ १८ ॥
एते चान्ये च बहव ईश्वरं समुपासते ।
एते पार्श्वे चिन्तनीया वर्णानां साधकोत्तमैः ॥ १९ ॥
तत्पार्श्वस्थः प्रभाकोटिधारकः प्रतिभाति च ।
[1]अर्थो धर्मश्च कामश्च हर्षो द्वेषस्तथा दमः ॥ २० ॥
तत्र गन्धर्वमुख्याश्च सहिताप्सरसस्तथा ।
विंशतिः सप्त चैवान्ये लोकपालाश्च सर्वशः ॥ २१ ॥
शुक्रो बृहस्पतिश्चैव बुधोऽङ्गारक एव च ।
शनैश्चरश्च राहुश्च ग्रहाः सर्वे तथैव च ॥ २२ ॥
मन्त्रो रथन्तरश्चैव [2]हविष्मान् वसुमानपि ।
आदित्याः साधिराजानो नानावृन्दैरुपासिताः[3] ॥ २३ ॥
मरुतो विश्वकर्मा च वसवश्च कपालिनः ।
तथा पितृगणाः सर्वे सर्वाणि च हवींष्यथ ॥ २४ ॥
ऋग्वेदः सामवेदश्च यजुर्वेदस्तथा विधिः[4] ।
अथर्ववेदश्च तथा सर्वशास्त्राणि चैव हि ॥ २५ ॥
इतिहासोपदेशश्च वेदाङ्गानि च सर्वशः ।
ग्रहा यज्ञाश्च[5] सोमाश्च दैवतानि च सर्वशः ॥ २६ ॥
सावित्री तारिणी[6] दुर्गा वाणी सप्तविधा तथा ।
मेधा धृतिः स्मृतिश्चैव प्रज्ञा बुद्धिर्यशः क्षमा ॥ २७ ॥

---

१. अर्थो धर्मश्चेत्यत एव चेति पर्यन्तं श्लोकद्वयं ख० पुस्तके नास्ति ।
२. हविमान क० ।
३. उपागताः ख० ।
४. निधिः क० ।
५. ग्रहा यज्ञश्च क० ।
६. सावित्री दुर्गतरिणी क० ।

सामानि श्रुतिशास्त्राणि गाथास्तु विविधास्तथा ।
भाष्याणि तर्कयुक्तानि देहवन्ति विभान्ति च ॥ २८ ॥
नाटिका विविधाः कार्याः[1] कथाख्यायिककारिकाः ।
अत्र तिष्ठन्ति ये पुण्या ये पुण्या गुरुपूजकाः ॥ २९ ॥
क्षणालवा मुहुर्ताश्च दिवारात्रिश्च सर्वतः ।
अर्धमासास्तथामासाः ऋतवः षट् च शङ्कर ॥ ३० ॥
सम्वत्सराः [2]पञ्चयुगं मासारात्रिश्चतुर्विधा ।
कालचक्रश्च यद्दिव्यं नित्यमव्ययम् ॥ ३१ ॥
धर्मचक्रस्तथा चापि नित्यमास्ते महेश्वर ।
[3]अदितिश्च दितिश्चैव रुद्रश्च विनता तथा ॥ ३२ ॥
कालिका [4]युवती देवी सुरसा चाथ गौतमी ।
[5]आधा कद्रुश्च वै देव्यो देवतानाञ्च मातरः ॥ ३३ ॥
रुद्राणी श्रीश्च लक्ष्मीश्च भद्रा षष्ठी तथा परा ।
पृथिवीसञ्ज्ञिता देवी ह्रीः स्वाहा कीर्तिरेव च ॥ ३४ ॥
सुरा देवी शची चैव तथा पुष्टिररुन्धती ।
[6]संसिद्धि सिद्धिदा विद्या महादेवी रतिस्तथा ॥ ३५ ॥
एताश्चान्याश्च वै देव्य उपतस्थुरलङ्कृताः ।
आदित्यावसवो रुद्रा मरुतश्चाश्विनावपि ॥ ३६ ॥
विश्वेदेवाश्च साध्याश्च पितरश्च महर्षयः ।
राजर्षयस्तत्र भान्ति हरिश्चन्द्रादयः प्रभो ॥ ३७ ॥

---

१. नाटका विविधा काव्या कथाख्यायिककारिकाः क० ।
२. पञ्चयुग्मं ख० ।
३. अदितिर्दितिर्दनुश्चैव सुरसा विनता इवा क० ।
४. सुरभी देवी शर्मा ख० ।
५. एताश्चान्याश्च ख० ।
६. संसिद्धिर्वासा नियतिर्विडीदेवीरतिस्तथा क० ।

सर्वे हेमकुण्डलिनः सर्वाऽलङ्कारभूषिताः ।
भावुका गीतवाद्यादि [1]निस्वनैर्मग्नदेहिनः ॥ ३८ ॥

भावयन्ति महेशानीं काकिनीं परमेश्वरीम् ।
वर्णरूपां नित्यकलां महेश्वरपतिव्रताम् ॥ ३९ ॥

ईश्वरं भावयन्त्येते पूजयन्ति निरन्तरम् ।
वेष्टिताः सुन्दरकाराः[2] अष्टसिद्धिसमृद्धिदाः[3] ॥ ४० ॥

एताः पूज्या महाकालवर्णपार्श्वचराः प्रभाः[4] ।
प्रसीद नाथ स्वामीति नाम्ना मनसि पूजयेत् ॥ ४१ ॥

वर्णेश्वरप्रियानन्दां काकिनीं पूजयाम्यहम् ।
इति मन्त्रेणैव[5] पूज्या वर्णरूपा सरस्वती ॥ ४२ ॥
तदा प्रसन्नाः सिद्ध्यन्ति श्रीकाकिन्याः कलौ युगे ॥ ४३ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवभैरवीसम्वादे काकिनीश्वरपर्णपार्श्वचरयजनं नामसप्तपञ्चाशत्तमः[6] पटलः ॥

---

१. विश्व क० :
२. सुन्दरकराः क० ।
३. समृद्धिदा क० ।
४. प्रभो ख० ।
५. वै पूज्या ख० ।
६. अष्टपञ्चाशत्तमः पटलः ख० ।

# अष्टपञ्चाशत्तमः पटलः

श्रीआनन्दभैरवी-उवाच—

अथाष्टसिद्धिमाहात्म्यं शृणु श्रीचन्द्रशेखर ।
मन्त्रोद्धारं तथान्यासं कवचाङ्गं तव प्रियम् ॥ १ ॥
स्तोत्रं सहस्रनामाख्यं साष्टोत्तरमनुप्रियम् ।
साकारध्यानमखिलं सालोक्यादिपदप्रदम् ॥ २ ॥
यस्य [1]करणमात्रेण [2]सुरो भवति मानुषः ।
वृक्षबीजाद् भवेद्वृक्षः श्रद्धयाश्च फलोदयः ॥ ३ ॥
यथा तथैव मन्त्राणामुदयो बीज योगतः ।
बीजन्तु परमं ज्ञानं बीजाधीनं चराचरम् ॥ ४ ॥
बीजमाश्रित्य सर्वेन्द्राः प्रतिभान्ति महौजसः ।
कोटिसूर्यप्रतीकाशाः प्राणस्थाननिवासिनः ॥ ५ ॥
केचाप्ययुतसूर्याभाः शतसूर्यसमप्रभाः ।
केचिद् द्वादशसूर्याभाः को [3]जनश्चैकभासुराः ॥ ६ ॥
कोपि [4]नासमुनिर्दीप्तः कोपि चन्द्रसमप्रभः ।
कोपि श्रीकान्तिकिरणः शङ्खचक्रगदाधरः ॥ ७ ॥
एते बीजसमुद्भूता [5]निर्बीजाश्च पञ्चदेवताः ।
ब्रह्मविष्णुशिवानन्दभैरवाः[6] प्राणदेवताः ॥ ८ ॥

---

१. स्मरण ख० ।
२. शिवो ख० ।
३, केऽपि ज्वलत्प्रभाकराः ख० ।
४. नानामनोर्दीप्तिः ख० ।
५. बीजाश्च क० ।
६. भैरव इति समस्तपदात्मकः पाठः ख० पुस्तके ।

ब्रह्माब्रह्मस्वरूपेण श्वासमार्गप्रवेशकः ।
[1]विष्णुर्वैष्णवतत्त्वेन कुम्भकान्तर्गतः प्रभुः ॥ ९ ॥

शिवः संहाररूपेण महाप्रलयगः प्रभुः ।
आनन्दभैरव श्रीमान् मूलज्ञानीपरात्परः ॥ १० ॥

मूलाम्भोजाद् ब्रह्मरन्ध्रं यावत्तत्र[2] प्रवेशिका ।
प्राणविद्यास्वरूपेण बीजरूपा सनातनी ॥ ११ ॥

सा भाव्या योगिभिर्नित्यं योगाङ्गैरतिभाव्यते ।
योगशास्त्रं विना नाथ के जानन्ति महर्षयः ॥ १२ ॥

[3]अत्यन्तदुःखसाध्या सा योगिज्ञेया मनोयवा ।
नानारूपा बृहद्रूपा श्वासोच्छ्वासप्रकाशिनी ॥ १३ ॥

हृदयाम्भोजमध्यस्था ईश्वरस्थानवासिनी ।
[4]कालचञ्चुप्रकाशा सा सर्वभूतहृदिस्थिता ॥ १४ ॥

सर्वेषां ज्ञानकर्त्री च सर्वानन्दकरी हृदि ।
सा देवी काकिनी [5]विद्या ईश्वरी परमा कला ॥ १५ ॥

विभाव्या कोटिसूर्याभा कोटिचन्द्रसमानना ।
तस्या मन्त्रं महामन्त्रं ब्रह्ममन्त्रं हि योगिनाम् ॥ १६ ॥

श्रृणुनाथ कुलानन्द भैरव्यादिमनुं मुदा ।
एतन्त्रप्रभावेण[6] परात्मानं वशं नयेत् ॥ १७ ॥

---

१. विष्णुर्वैष्णवतन्त्रेणेति ख० ।
२. प्रवेशकः ख० ।
३. अनन्तसुख ख० ।
४. काकचञ्चुप्रकाशा ख० ।
५. देवीति ख० ।
६. प्रसादेन ख० ।

दीर्घप्रणवमुच्चार्य वामनेत्रं समुद्धरेत् ।
[1]मायान्ते वाग्भवं बीजं कामबीजं समुद्धरेत् ॥ १८ ॥

कामबीजं तथैश्वर्ये नमोऽन्ते[2] वह्निकामिनी ।
एतन्मन्त्रप्रसादेन भवेत् कालवशः क्षणात् ॥ १९ ॥

[3]अत्यन्तसुखमाप्नोति भयाज्ञानापहो भवेत् ।
कामेन पुटितं मन्त्रं वाग्भवेनापि वा प्रभो ॥ २० ॥

स्वमन्त्रपुटितं कृत्वा सिद्धिःस्यादचिरादिह ।
अथान्यमन्त्रं वक्ष्यामि [4]सावधानोऽवधारय ॥ २१ ॥

भद्रकालीं समुद्धृत्य किङ्किणीबीजमुद्धरेत् ।
[5]बालाबीजं समुद्धृत्य माहेश्वर्यै नमोद्विठः ॥ २२ ॥

केवलं मूलमन्त्रेण पुटितं मूलमन्त्रकैः ।
पूजयेत् परया भक्त्या हृदयाम्भोजमण्डले ॥ २३ ॥

अप्रकाश्यमिमं मन्त्रं सर्वतन्त्रेषु गोपितम् ।
लक्षजपेन सिद्धिः स्याद् हृदयाब्जे [6]स्थिरो भवेत् ॥ २४ ॥

अकस्माद्दीपकलिकाकारं जीवं[7] प्रपश्यति ।
ततो भवेन्महायोगी ईश्वरीमन्त्रसाधनात् ॥ २५ ॥

ध्यानं वक्ष्यामि पूजाया गुह्याद्गुह्यतरं परम् ।
ध्यात्त्वा पाद्यादिभिर्नाथमनःकल्पितपुष्पकैः ॥ २६ ॥

---

१. मायानामिति क० ।
२. नमोन्तवह्नि ख० ।
३. अनन्तेति ख० ।
४. सावधानावधारयेति क० ख० ।
५. कलाबीजमिति ख० ।
६. शिवो ख० ।
७. बीजमिति ख० ।

पूजयेत्परया भक्त्या मन्त्रध्यानपरायणः ॥ २७ ॥

शशधरशतकोटिश्रीमयूखप्रभायाः
सुरतरुगुणशोभा निर्मलावेदहस्ता ।
अरुणकिरणभालाहारमाला विलोला
हृदयकमलमध्ये श्रीश्वरीं तां भजामि ॥ २८ ॥

एवं [1]सर्वस्वरूपां तां विभाव्य हृदयाम्बुजे ।
पुनः पुनःपूजयेद्वै त्रैलोक्योद्भवपुष्पकैः ॥ २९ ॥

अवश्यं सिद्धिमाप्नोति पूजायोगप्रभावतः ।
आयुरारोग्यजननं[2] पूजनं सुमहाफलम् ॥ ३० ॥

ततो जपेन्महामन्त्रं वर्णमालाक्रमेण तु ।
प्राणायामं ततः कृत्वा न्यसेत् सर्वाङ्गमध्यके ॥ ३१ ॥

मातृकाग्रन्थिनिकरे न्यसेत् पूर्वोक्तनामभिः ।
यदुक्तं पूर्वपटले तेषां नामभिरेव च ॥ ३२ ॥

विन्यस्य मन्त्रपुटितं मन्त्रन्यासं ततश्चरेत् ।
काकिन्या अष्टशक्तीनां न्यासं कुर्यात्ततः परम् ॥ ३३ ॥

काकजिह्वाद्विकाण्डेशी[3] कामाख्या[4] काकिनी ध्वजा ।
काकिनी काकमाला च काकचञ्चुप्रकाशिनी ॥ ३४ ॥

कोकिलाचाष्टशक्तीनां नाम्ना विन्यस्य मस्तके ।
कण्ठकूपे न्यसेत्पश्चात् षोडशस्वरसम्पुटम् ॥ ३५ ॥

हृदये विन्यसेन्नाथ कादिद्वादशसम्पुटम् ।
मन्त्रं विन्यस्य विधिना नाभौ मन्त्रेण सम्पुटम् ॥ ३६ ॥

---

१. सर्वात्मरूपामिति ख० ।
२. जननीं सुमहत्फलसम्भवाम् ख० ।
३. द्विकाकेशीति ख० ।
४. काकाक्षा ख० ।

डादिफान्तन्तु[1] विन्यस्य बादिलान्तं स्वलिङ्गके ।
मूलाधारे मूलमन्त्रपुटितं वादिसान्तकम्[2] ॥ ३७ ॥
विन्यस्य व्यापकं न्यासं कृत्वाङ्गानि [3]च बन्धयेत् ।
ततः प्राणायाममेकं[4] कृत्वा प्राणान् समाश्रयेत् ॥ ३८ ॥
ततः स्तोत्रं पठेद्धीमान् तत्सर्वं शृणु शङ्कर ।
हविष्याशी वशीभूत्वा साधयेदिह सिद्धये ॥ ३९ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे काकिनीसिद्धिसाधन-
[5]नामाष्टपञ्चाशत्तमः पटलः ॥



१. फान्तं प्रविन्यस्येति ख० ।
२. बादिमान्तकमिति ख० ।
३. वर्धयेदिति ख० ।
४. प्राणायामत्रिकं कृत्वा प्राणायामसमाश्रयेत् ख० ।
५. ऊनषष्टितमः पटल ख० ।

## ऊनषष्टितमः पटलः

श्रीआनन्द भैरवीउवाचः[1]

ज्ञानेश्वरी शुभकरी परिभावनीया
योगेश्वरैर्हरिहरैर्गुरुभिर्महेन्द्रैः ।
तां काकिनीं परशिवां[2] परमेशपत्नीं
संस्तौमि[3] चारुहृदयाम्बुजपीठमध्ये[4] ॥ १ ॥

एकाकिनी त्रिजगतामतिनाशकाले
त्वां काकिनीं [5]समरकार्णा(ण्ड)ककाकपत्नीम् ।
त्वं[6] साक्षिणी भुवनभङ्गविधौ सकास्ते
भूषण्डकाकमहिषीव वयं भजामः ॥ २ ॥

एकाकिनीं सकलधारणकालयोगे
आधार्य देहसमये सति काकिनीं त्वाम् ।
वाय्वासने मनस आशु विकारनाशे
काकेन्द्रचञ्चुचलितामहमेवमीडे ॥ ३ ॥

भावोदये प्रणयिनीमगतौ[7] च भावा
आह्लादयोगविभवे भुवनेश्वरीं त्वाम् ।

---

१. ख पुस्तके नास्ति ।
२. प्रसविनीमिति ख० ।
३. तामिति ख० ।
४. राजिमध्ये ख० ।
५. कालिक ख० ।
६. त्वां साक्षिणीं भुवनभङ्गविधौ सकान्ते ······महिषीं सततं भजामीति ख० ।
७. विभवे ख० ।

[1]मन्दारहाररुचिरे परमेश्वरि त्वं
रक्षां कुरु प्रथमतो मतिमाश्रयामि ॥ ४ ॥

चन्द्रोदये[2] सुखमयी द्युतिकोटिदीप्ता
गोप्यागमे [3]सुमतिभिः स्वमनांसि शुद्धा ।
सा त्वं सुखात्त्वं[4] भवभावविपूजनीये
रक्षां कुरु प्रथमभास्करमङ्घ्रिमीडे ॥ ५ ॥

ते पादपङ्कजमजस्रमहं भजामि
सानन्दविन्दुविमलासनभावपुञ्जे[5] ।
गुञ्जावटी[6]विमलमाल्यसुशोभिताङ्गे
[7]श्यामेव मे चरमभावसमूहदात्री ॥ ६ ॥

पञ्चानने दशभुजे सकलास्त्रयुक्ते
विद्ये भये नरहरे नरहारभूषे ।
[8]प्रेतासने त्रिनयने जननीत्वमेव
[9]रक्षे शुभे चरणपङ्कजमाश्रयामि ॥ ७ ॥

---

१. तृतीयचरणं मन्दारहारादि ख पु० नास्ति ।
२. चन्द्रोदये इत्यादि प्रथमचरणं ख० पु० नास्ति ।
३. सुखकरी शुभदाय शुद्धा ख० ।
४. सुखानुभवकारिणि पूजनीये ख० ।
५. ननहासपुञ्जे ख० ।
६. गुञ्जात्कटी विमलमाल सुशोभिताङ्गे ।
७. श्यामे च मे······धात्री ख० ।
८. श्वेतासने ख० ।
९. दीनोऽस्मि ते ख० ।

श्रीसुन्दरि प्रणतरक्षिणि वेदमात-
स्तारेश्वरी[1] त्वमपि रक्ष विनाशकाले ।
यद्येकभक्त[2]इतिहासपुराणवक्ता
नित्यानुरक्तहरपादसरोजमीडे ॥ ८ ॥

ते श्रीपदं भुवनसारमनन्तसेव्यं
योगास्पदं कृतिभिराश्रयमेकयोगम् ।
सर्वे भजन्ति निजमोक्षफलाय नित्यं
दीनोऽहमम्ब[3] भुवनेशि मुदा [4]भजामि ॥ ९ ॥

त्रैलोक्यपूजितपदं हृदयाम्बुजस्थं
चित्तप्रकाशकमले[5] स्वसुखानुभूतम् ।
मायाश्रयं सकलसिद्धिनिदानरूपं
मञ्जीरहारविनतं वरमाश्रयामि ॥ १० ॥

[6]कौटीरहारकमलप्रियमाल्यशोभे
शोभाकरे स्थिरतरा भव मे हृदब्जे ।
भूमण्डले हि बलवान्कृतकृत्य एव
त्वामीश्वरीं हृदि मुदा सुखमाश्रयामि ॥ ११ ॥

[7]नित्ये पुरा भजति योगसुसिद्धयेऽसौ
शम्भुर्गिरीश इति चेश्वरपार्श्वगामि ।
सायुज्यनाथपदवीं गत ईश कान्ते
एकाकिनी कुलवताङ्घ्रियुगं किमन्यैः ॥ १२ ॥

---

१. तारेश्वरीति क० ।
२. यद्येक एव इतिहास पुराणरूपे नित्यं तवैव खलु पादसरोजमीडे ख० ।
३. मद्य ख० ।
४. मुदाश्रयामि ख० ।
५. चित्तप्रकाशकमशेषसुखानुभूतमिति ख० ।
६. चन्द्रोदये सुखमयं द्युतिकोटिदीप्तमिति ख० ।
७. नित्यं पुराभवति वै खलु योगसिद्ध्यै ।

ध्यायन्ति योगिन [1]इहाघसमूहशैलं
[2]संहारहेतुकसदाघविनाशनाय ।
चित्तोत्सवाय विभवाय जयाय भूमेः
दीनोऽहमाशु विभजामि पदं श्रिये ते ॥ १३ ॥

कृष्णेसिते [3]विमलपीतनिभे सुरक्ते
वर्णाश्रये त्वमव [4]मामतिदीनमेकम् ।
पुत्रं तवैव चरणाम्बुजमेव[5] कान्तं
नीलाम्बुजे स्थिरतरं कुरु कामदात्रि ॥ १४ ॥

सर्वेश्वरी प्रियकरि[6] भवभावहन्त्रि
[7]नानाध्वनिप्रणतकामदुघे विचित्रे ।
रत्नाकरे सुखपदं यदि देहि दास्यं
[8]त्वं चारुवर्णगलिते[9] पदमाश्रयामि ॥ १५ ॥

रत्नाकरे सकरुणेऽरुणकोटिवर्णे
[10]स्वर्णादिनिर्मितस्रजापविशोभिताङ्गी ।
त्वं काकिनी यदि कटाक्षनिपातमेकं
[11]सर्वं कुरुष्व सुखमोक्षपथप्रमोदी ॥ १६ ॥

---

१. इहैव तवाङ्घ्रियुग्मं ।
२. हेतु वडपाघविनाशनाय ख० ।
३. विमलपङ्कजकोशसंस्थे ख० ।
४. मामिह ख० ।
५. संभृतं माम् ख० ।
६. प्रियकरी ख० ।
७. नानात्मिके सकलकामहरे विचित्रे ख० ।
८. तच्चारु ख० ।
९. गणितम् ख० ।
१०. स्वार्थादि ख० ।
११. शर्वे कुरुष्व खलुमोक्षपदानुभेदी ख० ।

आद्ये प्रवालविमलेऽमलमाल्यशोभे
सूक्ष्मेऽतिसूक्ष्मनिकरे[1] करुणानिधाने ।
[2]वाले वले प्रचले चपले प्रलापे
योगेशि पादकमलं कुलमाश्रयामि ॥ १७ ॥

त्वं षोडशी खरतरा खरखड्गहस्ते
खड्गेश्वरी प्रखरवाक्यमाथाढ्यवक्त्रे ।
खर्जूरहाररुचिरे खलहन्त्रि तुभ्यं
नित्यं नमो नम उपेन्द्रगिरीन्द्रसेव्ये ॥ १८ ॥

गीतानते तरुतरे प्रणमामि नित्यं
गात्रेश्वरी गतिहरे गणनाथसेव्ये ।
गायन्ति ते चरणपङ्कजसारगीतं
रक्षाप्रचण्डकलुषादनुपेक्षणीयम् ॥ १९ ॥

दीर्घस्वरे घनवरे घनघोरनादे
घोरानने नवघने घटनाघनानाम् ।
घोरास्पदे घटगते घटशून्यकर्त्रि
त्वं काकिनी समवतुक्षितिदोषजालात् ॥ २० ॥

आनुस्वरे स्मरहरे ननुरूपविद्ये
संयोगिनीप्रबलशत्रुविनाशभूते ।
रक्षेऽतिरक्ष करुणां कुरु देहि मोक्षं
चण्डि प्रचण्डनयने चरणं भजे ते ॥ २१ ॥

छत्रप्रदे छलहरे छदवासिनी त्वं
छद्मस्थिते हृदयपङ्कजदक्षयोगे ।

---

१. तनु देहि पदाब्जयुग्मम् ख० ।
२. त्वं षोडशी इत्यारभ्य पटलान्तं श्लोक—
कदम्बकं ख पुस्तके नास्ति ।

त्वां पूजये जयधरे यदुनाथ जन्यो
जाये जयं यदिह देहि पदं भजामि ॥ २२ ॥

झङ्के झनज्वलयतीह रिपुं पिबन्ति
त्वं कौशिकी सकलदेहविशोधनी त्वम् ।
नित्येऽनुनासिक पदे सकलार्थदे त्वं
रक्षां कुरुष्व विपदे कुलपुञ्जगुञ्जे ॥ २३ ॥

टङ्कारगेऽट्टहसने टललेऽट्टहासे
ठाक्कारिणी सठहरापरिनिष्ठिता त्वम् ।
सिंहेष्टपृष्ठनिलयेऽस्थिरयोगभावं-
हृत्पद्मके कुरु सदा सकलार्थदात्रि ॥ २४ ॥

एतत्स्तोत्रं पठेद्धीमान् ध्यानन्यासपरायणः ।
विभाव्य स्तौति यो योगी स योगी मोक्षभाग्भवेत् ॥ २५ ॥

हृत्पङ्करुहमध्यस्थं स पश्यति जगत्त्रयम् ।
अष्टसिद्धियुतः शीघ्रं जीवन्मुक्तो भवेन्नरः ॥ २६ ॥

इति श्रीरुद्रयामले महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे काकिनीस्तोत्र-
विन्यासो नामोनषष्टितमः पटलः ॥



# षष्टितमः पटलः

आनन्दभैरव उवाच—

वद कान्ते परानन्दे रहस्यं कुलसुन्दरि ।
यस्य विज्ञानमात्रेण भवेद्गङ्गाधरो हरिः ॥ १ ॥
ईश्वरस्य स्तवब्रह्मपरं निर्वाणसाधनम् ।
[1]शोभाकोटियोगपतेर्योगेन्द्रस्य परापतेः ॥ २ ॥
ईश्वरं के न मानन्ति ब्रह्मविष्णुशिवादयः ।
तस्य स्मरणमात्रेण महावाग्ग्मी च मृत्युजित् ॥ ३ ॥
[2]मन्त्री वेदान्तसिद्धान्तं तं भजन्ति महर्षयः ।
देवा मनुष्या गन्धर्वास्तं भजन्ति महेश्वरम् ॥ ४ ॥
अकालमृत्युहरणं सर्वदा सर्वतोमुखम् ।
सदा तस्य स्तवं दिव्यं श्रोतुमिच्छामि शाङ्करि[3] ॥ ५ ॥

श्री आनन्दभैरवी उवाच—

कौल त्वं शृणु शङ्करप्रियकरं स्तोत्रं तदीशस्य च
श्रीनाथाय नमः कुलेश [5]परमप्राणेश तुभ्यं मुदा ।
सानन्दाय नमो भवाय पतये लोकेश्वरायों नमो
भूतेशाय गणाधिपाय यतये[6] श्रीशूलिने ते नमः ॥ ६ ॥

---

१. शोभा कोटियोंगपते……परागतिः ख० ।
२. सर्ववेदान्त सिद्धान्तैस्तमु ख० ।
३. शङ्करो ख० ।
४. मदीशस्य च ख०
५. सततमु ख० ।
६. सततमु ख० ।

कान्ताय प्रणवाय[1] योगपतये योगेश्वरायों नमो
[2]महारायाक्षरेश्वराय महते नित्याय नित्यं नमः।
स्वाधिष्ठानविभेदकाय हरये मूलाब्जसम्भेदिने
[3]नाभेरम्बुजभेदिने हृदयाम्भोद्भिदकायों नमः ॥ ७ ॥

कालाय प्रणवाय मायवशिने नित्यं नमो भास्वते
मोक्षाय प्रथमेश्वराय कवये खट्वाङ्गहस्ताय ते।
भक्ति श्रीनिधये[4] महेन्द्रखचराय[5] मायाश्रयायों नमो
विज्ञानाय शिवाय सूक्ष्मगतये गूढाय भूयो नमः ॥ ८ ॥

सर्वज्ञाय जयाय भूतिपतये[6] भूतेश्वराय प्रभो
पञ्चास्याय हराय देवपतये गौरीश्वराय श्रिये।
[7]भोगायान्तरगामिने हरिहरायानन्दचिद्रूपिणे
कल्याणाय भगाय शुद्धमतिभिर्नित्यं नमस्ते नमः ॥ ९ ॥

गोविन्दप्रियवल्लभाय विधये ब्रह्मादिकोत्पत्तये
उत्पत्तिस्थितिसंहृतिप्रकृतये [8]बाह्याय विश्वेश्वर।
तुभ्यं काल नमो नमः प्रलययोगोल्लासिने भूभृते
[9]विज्ञाताय गिरीन्द्रपूजित विभो भूताधिपायानिशम् ॥ १० ॥

---

१. प्रभवाय ख०।
२. ओङ्काराय, कवीश्वराय ख०।
३. ओम्नमोऽम्बुजभेदिने हृत्पद्मोद्भेदकाय ओं नमः ख०।
४. निलये ख०।
५. खचरैर्माया...... ख०।
६. भूतपतये ख०।
७. ओंभोगान्तरगामिने ख०।
८. बाम्यायेति क०।
९. विख्याताय ख०।

गौरीशाय गणार्चिताय मनसे[1] मान्याय[2] भूवासिने
भूतोत्साहमहीशनाथशशिचूडाय प्रधानाय ते ।
नित्यं नित्यकलाकुलाय फणिचूडाय[3] प्रबुद्धाय ते
तेजः शान्तिपते सतां[4] पतिपते निर्वासिसे ते नमः ॥ ११ ॥

शोभा कोटियुताय चन्द्रकिरणाह्लादाय सूक्ष्माय ते
तुभ्यं नाथ नमो नमः प्रणमतामानन्दसिन्धूत्सवा ।
हेरम्ब[5] श्रयकार्तिकेयजनकानन्दप्रियाय प्रभो
पित्रे सर्वसुखाय सर्वपतये श्रीनीलकण्ठेश्वर ॥ १२ ॥

त्रिब्रह्मार्पितभूतये सुरतये[6] श्रीभास्वते योगिना-
मानन्दोदयकारिणे कुलपते ते[7] नाथ तुभ्यं नमः ।
ब्रह्मानन्दकुलाय रौप्यगिरये सौन्दर्यसंसिद्धये
सर्वानन्दकराय संपरतरायाढयाय सत्यं[8] नमः ॥ १३ ॥

काशीशं कौशिकीशं सुरतरुकिरणं कारणाख्यं सुखाख्यं[9]
गौरीशं [10]गंगिरीशं गुरुमगुरुगिरिश्रेणिलिप्ताङ्गवङ्गम् ।
घोषाख्यं मञ्जुघोषं घनगणघटितं घोरसङ्घट्टनादं-
[11]चार्वीशं राघवेशं घनहृदिघटमामीश्वरंघौटकेशम् ॥ १४ ॥

---

१. मनवे ख० ।
२. मन्याय क० ।
३. बुद्धायेति ख० ।
४. संजलपतिनिर्वासिशे नम क० ।
५. हरेम्बाश्रयकार्तिकेशजनका······ख० ।
६. सुरपते ख० ।
७. हे ख० ।
८. सत्यमिति क० ।
९. सुधाख्यमिति ख० ।
१०. सर्वमीशं गुरु गिरिनमितं श्रोणिलिप्ताङ्गभस्ममिति ख० ।
११. अर्वीशं······जन घटनया चेश्वरमिति······ख० ।

[1]लाक्षाभाण्डं विशालो वसति तव करे स्थावरो जङ्गमो वा
भूताध्यक्षो[2] वशिष्टः स्वपरिजनकुले सर्वदा पाहि शम्भो ।
भक्तिज्ञानं [3]न दातुं चपलमलमणिश्रेणिमाला विलोला
लोकाभीतो[4]कलङ्की विधिशतमुकुटश्रीपदाम्भोरुहं ते ॥ १५ ॥
धूर्तः शौरिः प्रशान्तो विमलमधुरसामोदमानोऽप्रमत्तो[5]
मायामोहापदेवी[6] सुरमदमदनो दानसम्मानदाता ।
[7]त्वं नाथं श्रीपदाम्भोरुहविमलतले[8] ते कथं ना सुरक्षे
पूर्वास्यो दक्षिणास्यो धनपतिवदनः पश्चिमास्यो [9]मुनिस्त्वम् ॥१६॥
[10]भेदी [11]सिद्धान्तविद्याधरनिधिकिरणः कारणोऽनन्तशक्ति-
र्यः साक्षात् कामधेनुः स च धनपतिपः सर्वभोगानुरागी ।
पादाम्भोजे हि नित्यं [12]कलगिरिसुतानाथ ते योगिपत्वं
चित्तं मे चञ्चलाख्यं शशिधरकिरणो वाक्पते[13] योगसिद्धिः ॥१७॥
[14]कपर्दी श्रीखड्गासिवरगदया वेदभुजया
घनच्छायासंकोचरचरवशच्छन्न[15]विजयः ।

---

१. नित्यं वैत्वं विशालो वसति तवकरे...... ख० ।
२. भूताध्यक्षं वाशिष्ठमिति ख० ।
३. नदत्तमिति ख...चपलसितमणि...विलोलो...ख० ।
४. लोकातीतः कलङ्कीविधुशत...अम्भोरुहस्ते ख० ।
५. मोदमानः प्रमत्तो ख०
६. प्रणाशो......सर्वसम्मानदाता ख० ।
७. ते नाथ ।
८. तलेऽहं कथं चाशुवक्ष्ये ख० ।
९. मुनीन्द्र ख० ।
१०. भेदे ख० ।
११. विधु ।
१२. समरगिरि...योगपत्नमिति क० ।
१३. वाक्पतेर्योगसिन्धो ख० ।
१४. कापर्दी श्री खङ्गासिवरगदयावेदभुज गो
घनच्छायां संकोचय मम सदा कयानिचये ।
जयीजेता जातेजं......ख० ।
१५. स्थूलविजयः ख० ।

जयी जेता जायेर्जयमनुकरोतु श्रियतमो
ज्वलज्झंझावाते क्षणधर इह क्रोध इति मे ॥१८॥
[1]अथाऽऽज्ञाचक्रान्तर्गतविवरमाच्छन्नजटिलः
प्रतिज्ञाभङ्गस्थकटकशतकोटिप्रकटितः ।
कुठारस्ते[2] क्रोधी कमठकटवासी[3] कठिनहा
ककाराद्यं[4] नत्वा दशकिरणमानोऽवतु सदा ॥१९॥
[5]सुधाखण्डादेव्याः स्तवनपठनेन प्रियकरं
पदाम्भोजं चेति प्रचयति[6] स्वभाग्यं कुलपते[7] ।
[8]प्रधाने भूखण्डे जयति यदि मृत्युञ्जयपदं
विनोदं भूयोगं पचति[9] सहसा [10]प्रेमतरलः ॥२०॥
यद्येवं प्रपठेदिदमनियतं[11] कौलावली[12]संयुतं
[13]स्तोत्रं साररहस्यभारपरमानन्दैकचित्तस्थलम् ।
योगीन्द्रावगतित्वमुक्तफलदं[14] सर्वेश्वरत्वं पदं
चन्द्रादित्यसमागतं परपदाह्लादैकमात्रं लभेत् ॥ २१ ॥

---

१. सदाज्ञाचक्रान्तर्गतविषधरमाच्छन्नजटिलः ख० ।
२. कुठारास्त्रः ख० ।
३. तट ख० ।
४. ककाराद्यर्णोद्वादशकिरणयुक्तोऽवतु सदा ख० ।
५. सुधाखण्डं हुत्वा स्तवनपठने न प्रिय…… ख० ।
६. प्रचरति ख० ।
७. कुलपतेः ख० ।
८. प्रधाने ख० ।
९. पठति ख० ।
१०. तरणः ख० ।
११. न्तु ख० ।
१२. सम्मतमिति ख० ।
१३. संसारे सरहस्यकं भवभयानन्दैकचित्तस्थलमिति ख० ।
१४. मुक्तिफलदमिति ख० ।

ते शम्भो यदि पादाम्भोरुहमङ्गलवल्लिका ।
[1]पूज्यते सर्वदा योगी निर्वाणगुणसिद्धये ॥
किन्न सिद्ध्यति भ्रूमध्ये शिवभक्तिप्रसादतः ॥ २३ ॥

[2]इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने
अनाहतपद्मे सुरस्तवनं नाम
षष्टितमः पटलः ॥



---

१. स्तौति वै सर्वदा·······ख० ।
२. अत्र क ख पुस्तकयोः पटलसंख्या समाना जाता ।

# एकषष्टितमः पटलः

श्रीआनन्दभैरव उवाच—

वद कल्याणि कामेशि त्रैलोक्यपरिपूजिते ।
ब्रह्माण्डानन्तनिलये[1] कैलासशिखरोज्ज्वले ॥ १ ॥
कालिके कालरात्रिस्थे महाकालनिषेविते ।
शब्दब्रह्मस्वरूपे त्वं वक्तुमर्हसि सादरात् ॥ २ ॥
[2]सहस्रनामयोगाख्यम् अष्टोत्तरमनन्तरम् ।
अनन्तकोटिब्रह्माण्डं सारं परममङ्गलम् ॥ ३ ॥
ज्ञानसिद्धिकरं साक्षाद् अत्यन्तानन्दवर्धनम् ।
[3]सङ्केतशब्दमोक्षार्थं काकिनीस्वरसंयुतम् ॥ ४ ॥
परानन्दकरं ब्रह्म निर्वाणपदलालितम्[4] ।
[5]स्नेहादभिसुखानन्दादादौ ब्रह्म वरानने ॥ ५ ॥
इच्छामि सर्वदा मातर्जगतां सुरसुन्दरि ।
स्नेहानन्दरसोद्रेकसम्बन्धान्[6] कथय द्रुतम् ॥ ६ ॥

श्रीआनन्दभैरवी उवाच—

ईश्वर श्रीनीलकण्ठ नागमालाविभूषित ।
नागेन्द्रचित्रमालाढ्य नागाधिपरमेश्वर ॥ ७ ॥

---

१. आनन्द ख० ।
२. इदं पद्यार्धं ख० पु० नास्ति
३. शङ्केत क० ।
४. मावितमिति क० ।
५. स्नेहादति सुखा······श्रोतुं वरानने ख० ।
६. सम्बन्धात्कवचं द्रुतमिति ख० ।

काकिनीश्वरयोगाढ्यं सहस्रनाममङ्गलम् ।
[1]अष्टोत्तरं वृताकारं कोटिसौदामिनीप्रभम् ॥ ८ ॥

आयुरारोग्यजननं शृणुष्वावहितो मम ।
अनन्तकोटिब्रह्माण्डसारं नित्यं परात्परम् ॥ ९ ॥

साधनं ब्रह्मणो ज्ञानं [2]योगानां योगसाधनम् ।
सार्वज्ञगुह्यसंस्कारं संस्कारादिफलप्रदम् ॥ १० ॥

वाञ्छासिद्धिकरं साक्षान्महापातकनाशनम् ।
महादारिद्र्यशमनं महैश्वर्यप्रदायकम् ॥ ११ ॥

[3]जपेद्यः प्रातरि प्रीतो मध्याह्नेऽस्तमिते रवौ ।
नमस्कृत्य जपेन्नाम ध्यानयोगपरायणः ॥ १२ ॥

काकिनीश्वरसंयोगं ध्यानं ध्यानगुणोदयम् ।
आदौ ध्यानं समाचर्य निर्मलोऽमलचेतसा ॥ १३ ॥

ध्यायेद्देवीं महाकालीं काकिनीं कालरूपिणीम् ।
परानन्दरसोन्मत्तां श्यामां कामदुघां पराम् ॥ १४ ॥

चतुर्भुजां खड्गचर्मवरपद्मधरां [4]हराम् ।
शत्रुक्षयकरीं रत्नाऽलङ्कारकोटिमण्डिताम् ॥ १५ ॥

तरुणानन्दरसिकां पीतवस्त्रां मनोरमाम् ।
केयूरहारललितां ताटङ्कद्वयशोभिताम् ॥ १६ ॥

ईश्वरीं कामरत्नाख्यां काकचञ्चुपुटाननाम् ।
सुन्दरीं वनमालाढ्यां चारुसिंहासनस्थिताम् ॥ १७ ॥

---

१. अष्टोत्तरं विभाकरमिति क० ।
२. योगिनामिति ख० ।
३. पठेद्य प्रातरुत्याय······मध्याह्ने वा तथा विधः ख० ।
४. परामिति ख० ।

[1]हृत्पद्मकर्णिकामध्याकाशसौदामिनीप्रभाम् ।
एवं ध्यात्वा पठेन्नाममङ्गलानि पुनः पुनः ॥ १८ ॥
ईश्वरं कोटिसूर्याभं [2]ध्यायेद्धृदयमण्डले ।
चतुर्भुजं वीररूपं लावण्यं भावसम्भवम् ॥ १९ ॥
श्यामं हिरण्यभूषाङ्गं चन्द्रकोटिसुशीतलम् ।
अभयं वरदं पद्मं[3] महाखड्गधरं विभुम् ॥ २० ॥
किरीटिनं महाकायं स्मितहास्यं[4] प्रकाशकम् ।
हृदयाम्बुजमध्यस्थं नूपुरैरुपशोभितम् ॥ २१ ॥
कोटिकालानलं दीप्तं काकिनीदक्षिणस्थितम्[5] ।
एवं विचिन्त्य मनसा योगिनं[6] परमेश्वरम् ॥ २२ ॥
ततः पठेत् सहस्राख्यं वदामि शृणु तत्प्रभो ॥ २३ ॥

अस्य श्री काकिनीश्वरसहस्रनामस्तोत्रस्य
ब्रह्मऋषिर्गायत्रीच्छन्दो जगदीश्वरकाकिनी देवता
निर्वाणयोगार्थसिद्ध्यर्थे [8]जपे विनियोगः ।
ॐ [9]ईश्वरः काकिनीशान ईशान कमलेश्वरी ।
ईशः काकेश्वरीशानी ईश्वरीशः कुलेश्वरी ॥ २४ ॥

---

१. हृत्पद्मकर्णिकामध्यकोटि सौदामिनि प्रभामिति ख० ।
२. हृन्मण्डलं परम् ख० ।
३. पद्ममहा······ ख० ।
४. स्मितहास्यप्रकाशकम् ख० ।
५. दक्षिणे ख० ।
६. योगिनाम् ख० ।
७. सहस्रास्यम् ख० ।
८. जपे ख० पु० नास्ति ।
९. ॐ ॐ ईश्वरः काकिनीशा ईशानः कुलेश्वरी । ईशः साक्षी कामधेनुः कपर्दिन्नाक-पद्मिनो । ख० ।

[1]ईशमोक्षः कामधेनुः कपर्दीशः कपर्दिनो ।
कौलः कुलीनान्तरगा कविः [2]काव्यप्रकाशिनी ॥ २५ ॥
कलादेशः सुकविता कारणः[3] करुणामयी ।
कञ्जपत्रेक्षणः काली कामः [4]कोलावलीश्वरी ॥ २६ ॥
किरातरूपी कैवल्याकिरणः[5] कामनाशना ।
[6]कार्णाटेशः सकर्णाटी कलिकः कालिकापुटा ॥ २७ ॥
किशोरः कीशनमिता[7] केशवेशः कुलेश्वरी ।
केशकिञ्जल्ककुटिलः[8] कामराजकुतूहला[9] ॥ २८ ॥
करकोटिधरः कूटा क्रियाक्रूरः क्रियावती ।
[10]कुम्भहा कुम्भहन्त्री च कटकच्छकलावती ॥ २९ ॥
[11]कञ्जवक्त्रः कालमुखी कोटिसूर्यकरानना ।
कम्रः कलपः समृद्धिस्था कुपोऽन्तस्थः कुलाचला ॥ ३० ॥
[12]कुणपः कौलपाकाशा स्वकान्तः कामवासिनी[13] ।
सुकृतिः शाङ्करी विद्या [14]कलकः कलनाश्रया ॥ ३१ ॥

---

१. इदं पद्यार्थं ख० पुस्तके न दृश्यते ।
२. कवि काव्य ···· ख० ।
३. कारणा ख० ।
४. कौलावली ख० ।
५. केवलं कमलासना ख० ।
६. किन्नटेशः सुकेशाक्षी कपिलः कलिप्रस्फुटः ख० ।
७. कीशरसिका कौलकेशः ख० ।
८. केश किञ्जल्को जटिलः ख० ।
९. बीज ख० ।
१०. कण्ठहा कुण्ठहन्त्रीच कटकस्थः कलावती ख० ।
११. कम्रवक्त्रः कामसुखी कोटिसूर्य वरानना ख० ।
कम्पः कम्पसुबुद्धिस्थः कल्पान्तस्थः ख० ।
१२. कुलपः ख० ।
१३. काञ्ची ख० ।
१४. कामहा कुल पण्डिता ख० ।

[1]कर्कन्धुस्थः कौलकन्या कुलीनः कन्यकाकुला ।
कुमारः केशरी विद्या कामहा कुलपण्डिता ॥ ३२ ॥
[2]कल्कीशः कमनीयाङ्गो कुशलः कुशलावती ।
केतकीपुष्पमालाढ्यः केतकीकुसुमान्विता ॥ ३३ ॥
कुसुमानन्दमालाढ्यः कुसुमामलमालिका ।
कवीन्द्रः काव्यसम्भूतः काममञ्जीररञ्जिनी ॥ ३४ ॥
कुशासनस्थः कौशल्याकुलपः कल्पपादपा ।
कल्पवृक्षः कल्पलता विकल्पः कल्पगामिनी ॥ ३५ ॥
कठोरस्थः[3] काचनिभा करालः कालवासिनी ।
कालकूटाश्रयानन्दः कर्कशाकाशवाहिनी ॥ ३६ ॥
कटधूमाकृतिच्छायो[4] विकटासनसंस्थिता ।
[5]कायधारी कूपकरी करवीरागतः[6] कृषी ॥ ३७ ॥
कालगम्भीरनादान्ता[7] विकलालापमानसा[8] ।
[9]प्रकृतीशः सत्प्रकृतिः प्रकृष्टः कर्षिणीश्वरी ॥ ३८ ॥
भगवान् वारुणीवर्णा विवर्णो [10]वर्णरूपिणी ।
सुवर्णवर्णो हेमाभो महान्[11] महेन्द्रपूजिता ॥ ३९ ॥

---

१. अयं श्लोकः ख० पु० नास्ति ।
२. कंकेशः ख० ।
३. कठिनमा ख० ।
४. छाया ख० ।
५. काल ख० ।
६. भगः कृषा ख० ।
७. नादन्तो ख० ।
८. मानुषा ख० ।
९. प्रकृति स्थः ख० ।
१०. वर्णोवर्णस्वरूपिणी ख० ।
११. महामहेन्द्र ख० ।

महात्मा महतीशानी महेशो मत्तगामिनी ।
महावीरो महावेगा महालक्ष्मीश्वरो मतिः ॥ ४० ॥
महादेवो महादेवी महानन्दो महाकला ।
महाकालो महाकाली महाबलो महाबला ॥ ४१ ॥
महामान्यो महामान्या महाधन्यो[1] महाधनी ।
महामालो महामाला महाकाशो महाकशा[2] ॥ ४२ ॥
महायशो[3] महायज्ञा महाराजो [4]महारजा ।
महाविद्यो महाविद्या महामुख्यो महामखी[5] ॥ ४३ ॥
महारात्रो महारात्रिर्महाधीरो[6] महाशया ।
महाक्षेत्रो महाक्षेत्रा कुरुक्षेत्रः कुरुप्रिया ॥ ४४ ॥
महाचण्डो महोग्रा च महासत्तो महामतिः ।
महावेदो महावेदा महोत्साहो महोत्सवा ॥ ४५ ॥
महाकल्पो महाकल्पा महायोगो[7] महागतिः ।
महाभद्रो महाभद्रा महासूक्ष्मो महाचला ॥ ४६ ॥
महावाक्यो महावाणी महायज्वा[8] महाजवा ।
महामूर्तिर्महाकान्ता[9] महाधर्मो महाधना[10] ॥ ४७ ॥

---

१. महाधन्या ख० ।
२. महावियत् ख० ।
३. महायज्ञो ख० ।
४. महेश्वरी ख० ।
५. महामुखी ख० ।
६. महारात्री क० ।
७. महायोगी ख० ।
८. महाजल्पा महाज्वली ख० ।
९. महामूर्ति महाकान्तो ख० ।
१०. महाधमा क० ।

महामहोग्रो महिषी महाभोग्यो[1] महाप्रभा ।
[2]महाक्षेमो महामाया महामाया महारसा ॥ ४८ ॥
महेन्द्रपूजिता माता विभालो[3] मण्डलेश्वरी ।
[4]महाविकालो विकला [5]प्रतलस्थललाभगा ॥ ४९ ॥
कैवल्यदाता कैवल्या कौतुकस्थो विकर्षिणी[6] ।
[7]वालाप्रतिर्वालपत्नी वलरामो वलाङ्गजा ॥ ५० ॥
[8]अवलेशः कामवीरा प्राणेशः प्राणरक्षिणी ।
पञ्चमाचारगः पञ्चापञ्चमः[9] पञ्चमीश्वरी ॥ ५१ ॥
प्रपञ्चः पञ्चरसगा[10] निष्प्रपञ्चः कृपामयी ।
कामरूपी कामरूपा कामक्रोधविवर्जिता ॥ ५२ ॥
कामात्मा कामनिलया कामाख्या[11] कामचञ्चला ।
कामपुष्पधरः कामा कामेशः[12] कामपुष्पिणी ॥ ५३ ॥
महामुद्राधरो मुद्रा सन्मुद्रः [13]काममुद्रिका ।
चन्द्रार्धकृतभालाभो विधुकोटिमुखाम्बुजा ॥ ५४ ॥

१. महाभाग्यो ख० ।
२. महाक्षोमो क० ।
३. विभाण्डो ख० ।
४. महाविकारो ख० ।
५. प्रवलस्यः स्यलायता ख० ।
६. विकल्पिनी ख० ।
७. बाला पति बाला पानी पत्नी बालो ख० ।
८. अवनीशः कालवीरा ख० ।
९. प्रपञ्चः ख० ।
१०. रसना ख० ।
११. कामाख्यः ख० ।
१२. कटकस्यः कलावती ख० ।
१३. कम्रवक्रः काममुखो कोटि सूर्य करानना ।
कुनपः कील पाकाशासुकान्तः काञ्चवासिनी ॥
सुकृतिः शाङ्करी विद्या कामहा कुलपलिता ख० ।

चन्द्रकोटिप्रभाधारी चन्द्रज्योतिः स्वरूपिणी ।
सूर्याभो वीरकिरणा[1] सूर्यकोटिविभाविता[2] ॥ ५५ ॥
मिहिरेशो[3] मानवका अन्तर्ग्गामी[4] निराश्रया ।
प्रजापतीशः कन्याणी[5] दक्षेशः कुलरोहिणी ॥ ५६ ॥
अप्रचेताः[6] प्रचेतस्था व्यासेशो व्यासपूजिता ।
काश्यपेशः काश्यपेशी भृग्वीशो[7] भार्गवेश्वरी ॥ ५७ ॥
वशिष्ठः प्रियभावस्थो वशिष्ठवाधितापरा ।
पुलस्त्यपूजितो देवः पुलस्त्यचित्तसंस्थिता ॥ ५८ ॥
अगस्त्याच्योऽगस्त्यमाता प्रह्लादेशो वलीश्वरी ।
कर्दमेशः कर्दमाद्या वालको वालपूजिता ॥ ५९ ॥
मनस्थश्चान्तरीक्षस्था शब्दज्ञानी सरस्वती ।
रूपातीता[8] रूपशून्या विरूपो रूपमोहिनी ॥ ६० ॥
विद्याधरेशो विद्येशी वृषस्थो [9]वृषवाहिनी ।
रसज्ञो रसिकानन्दा विरसो रसवर्जिता ॥ ६१ ॥
सौनः सनत्कुमारेशी योगचर्येश्वरः प्रिया ।
[10]दुर्वाशाः प्राणनिलयः साङ्ख्ययोगसमुद्भवा ॥ ६२ ॥

---

१. सूर्याभः सूर्यकिरणा ख० ।
२. विभासिता ख० ।
३. महेन्द्रेणो मीनवक्रा ख० ।
४. अन्तर्यामी ख० ।
५. श्रीकन्या ख० ।
६. स्वचेतः स्यःस्वचेतः स्था ख० ।
७. भृगुपः ख० ।
८. वाहना ख० ।
९. मीनः ...... योगाचार्य ख० ।
१०. दुर्वासा ख० ।

असङ्ख्येयो[1] मांसभक्षा सुमांसाशी मनोरमा ।
नरमांसविभोक्ता च नरमांसविनोदिनी ॥ ६३ ॥
[2]मीनवक्त्रप्रियो मीना मीनभुङ्मीनभक्षिणी ।
रोहिताशी मत्स्यगन्धा [3]मत्स्यनाथो रसापहा ॥ ६४ ॥
[4]पार्वतीप्रेमनिकरो विधिदेवाधिपूजिता ।
विधातृवरदो वेद्या वेदो वेदकुमारिका ॥ ६५ ॥
श्यामेशो शितवर्णा च चासितोऽसितरूपिणी ।
महामत्ताऽऽसवाशी च महामत्ताऽऽसवप्रिया ॥ ६६ ॥
[5]आसवाढ्योऽमनादेवी निर्मलासवपामरा[6] ।
विसत्तो[7] मदिरामत्ता मत्तकुञ्जरगामिनी ॥ ६७ ॥
मणिमालाधरो मालामातृकेशः[8] प्रसन्नधीः ।
जरामृत्युहरो गौरी गायनस्थो जरामरा ॥ ६८ ॥
सुचञ्चलोऽतिदुर्धर्षा कण्ठस्थो [9]हृद्गता सती ।
अशोकः शोकरहिता मन्दरस्थो[10] हि मन्त्रिणी ॥ ६९ ॥
मन्त्रमालाधरानन्दो मन्त्रयन्त्रप्रकाशिनी ।
मन्त्रार्थचैतन्यकरो मन्त्रसिद्धिप्रकाशिनी ॥ ७० ॥

---

१. असङ्ख्यामांसभक्षाचेति ख० ।
२. मत्स्यमत्तासवप्रिया ख० ।
३. पद्यार्धं ख० पु० नास्ति ।
४. पार्वती प्रेमनिकर इत्यारभ्य महामत्तासवप्रियान्तं—श्लोकयुगलं ख० पु० नास्ति ।
५. अमला ख० ।
६. सुप्रिया ख० ।
७. विमुक्तो ख० ।
८. महाकेशः ख० ।
९. कण्ठस्य हृद्गता ख० ।
१०. मन्त्रस्थो यति मन्त्रिणी ख० ।

मन्त्रज्ञो मन्त्रनिलया [1]मन्त्रार्थामन्त्रमन्त्रिणी ।
बीजध्यानसमन्तस्था मन्त्रमालेऽतिसिद्धिदा ॥ ७१ ॥

मन्त्रवेत्ता मन्त्रसिद्धिर्मन्त्रस्थो मान्त्रिकान्तरा ।
बीजस्वरूपो बीजेशी बीजमालेऽति[2] बीजिका ॥ ७२ ॥

बीजात्मा बीजनिलया बीजाढ्या[3] बीजमालिनी ।
बीजध्याना बीजयज्ञा बीजाढ्या बीजमालिनी[4] ॥ ७३ ॥

[5]महाबीजधरो बीजा बीजाढ्या बीजवल्लभा ।
मेघमाला मेघमालो वनमाली हलायुधा ॥ ७४ ॥

कृष्णाजिनधरो रौद्रा रौद्रा[6] रौद्रगणाश्रया ।
रौद्रप्रियो रौद्रकर्ती [7]रौद्रलोकप्रदः प्रभा ॥ ७५ ॥

विनाशी सर्वगाना[8] च सर्वाणी सर्वसम्पदा ।
नारदेशः प्रधानेशी वारणेशो[9] वनेश्वरी ॥ ७६ ॥

कृष्णेश्वरः केशवेशी [10]कृष्णवर्णास्त्रिलोचना ।
[11]कामेश्वरो राघवेशी बालेशी वा बाणपूजितः ॥ ७७ ॥

भवानीशो भवानी च भवेन्द्रो भववल्लभा ।
भवानन्दोऽति सूक्ष्माख्या भवमूर्तिर्भवेश्वरी ॥ ७८ ॥

---

१. मन्त्रार्था क० ।
२. बीजमालातिवीजिका ख० ।
३. बीजगो ख० ।
४. बीजसुन्दरी ख० ।
५. बीजतातो बीजमाता बीजज्ञो बीजमालिनी । ख० पु० नास्ति ।
६. रुद्रो रुद्रगणप्रिया ख० ।
७. रुद्रलोकप्रदः प्रभो ख० ।
८. सर्वतागानां शर्वाणी सर्वसम्पदाम् ख० ।
९. रावणेशो रणेश्वरी ख० ।
१०. कृष्णवर्णोऽति चचलः ख० ।
११. रामेश्वरो रामवेशी वाणेशो वाणपूजिता ख० ।

भवच्छायो भवानन्दो भवभीतिहरो वला ।
भाषाज्ञानीभाषमाला[1] महाजीवोऽतिवासना ॥ ७९ ॥

लोमापम्दो लोभकर्ता प्रलोभो लोभवर्धिनी ।
मोहातीतो मोहमाता मोहजालो महावती[2] ॥ ८० ॥

मोहमुद्गरधारी[3] च मोहमुद्गरधारिणी ।
[4]मोहान्वितो मोहमुग्धा कामेशः कामिनीश्वरी ॥ ८१ ॥

[5]कामलापकरोऽकामा सत्कामो कामनाशिनी ।
[6]बृहन्मुखो बृहन्नेत्रा पद्माभोऽम्बुजलोचना ॥ ८२ ॥

पद्ममालः पद्ममाला श्रीदेवो देवरक्षिणी ।
असितोऽप्यसिता चैव आह्लादौ[7] देवमातृका ॥ ८३ ॥

नागेश्वरः शैलमाता नागेन्द्रो वै नगात्मजा ।
नारायणेश्वरः कीर्तिः सत्कीर्तिः कीर्तिवर्धिनी ॥ ८४ ॥

[8]कार्तिकेशः कार्तिकी च विकर्ता गहनाश्रया ।
[9]विरक्तो गरुडारूढा गरुडस्थो हि गारुडी ॥ ८५ ॥

गरुडेशो गुरुमयी गुरुदेवो गुरुप्रदा ।
गौराङ्गेशो गौरकन्या गङ्गेशः प्राङ्गणेश्वरी ॥ ८६ ॥

---

१. भाषमाना महाजिह्वोऽतिवामना ख० ।
२. अमरावती ख० ।
३. मोहमुद्गरक्षो बीजा ख० ।
४. महान्वितो महामुक्ता ख० ।
५. कामलोपकरो……सत्कामा ख० ।
६. बृहन्मख क० ।
७. साल्हादो नाशमातृका ख० ।
८. कृत्तिवेशः……कलहा कलहप्रिया ख० ।
९. विराम इत्यारम्य प्राङ्गणेश्वरी इत्यन्तं ख० पु० नास्ति ।

[1]प्रतिकेशो विशाला च निरालोको निरीन्द्रिया ।
प्रेतबीजस्वरूपश्च प्रेताऽलङ्कारभूषिता ॥ ८७ ॥

प्रेमगेहः[2] प्रेमहन्त्री हरीन्द्रो हरिणेक्षणा ।
कालेशः कालिकेशानी कौलिकेशश्च काकिनी ॥ ८८ ॥

कलमञ्जीरधारी च कलमञ्जीरमोहिनी ।
करालवदनः काली कैवल्यदानदः कथा[3] ॥ ८९ ॥

कमलापालकः कुन्ती कैकेयीशः सुतः[4] कला ।
[5]कालानलः कुलज्ञा च कुलगामी कुलाश्रया ॥ ९० ॥

कुलधर्मस्थितः कौला कुलमार्गः कुलातुरा[6] ।
[7]कुलजिह्वः [8]कुलानन्दा कृष्णः कृष्णसमुद्भवा[9] ॥ ९१ ॥

[10]कृष्णेशः कृष्णमहिषी काकस्थः काकचञ्चुका ।
कालधर्मः कालरूपा कालः कालप्रकाशिनी ॥ ९२ ॥

कालजः कालकन्या[11] च कालेशः कालसुन्दरी ।
खड्गहस्तः खर्पराढ्या खरगः खरखड्गिनी[12] ॥ ९३ ॥

---

१. प्रतिष्ठेश ख० ।
२. प्रेमगह ख० ।
३. सदा ख० ।
४. ककेयेशः सुतः क० ।
५. कलाननहू ख० ।
६. कुलान्तरा ख० ।
७. कुलजिह्वा ख० ।
८. कुलानन्दा क० ।
९. तनद्भुवा इति ख० ।
१०. कालानलः कृष्णकेशा काकुत्स्थ ख० ।
११. कालजन्या ख० ।
१२. खञ्जनी ख० ।

[1]खलबुद्धिहरः खेला खञ्जनेशः सुखाञ्जनी ।
गीतप्रियो गायनस्था गणपालो [2]गृहाश्रया ॥ ९४ ॥
[3]गर्गप्रियो गयाप्राप्तिर्गर्गस्थो हि गभीरिणा ।
[4]गारुडीशो हि गान्धर्वी गतीशो गार्हवह्निजा ॥ ९५ ॥
गणगन्धर्वगोपालो गणगन्धर्वगो गता ।
गभीरमानी[5] सम्भेदो गभीरकोटिसागरा ॥ ९६ ॥
गतिस्थो गाणपत्यस्था[6] गणनाद्यो गवा तनुः ।
गन्धद्वारो गन्धमाला गन्धाढ्यो गन्धनिर्गमा ॥ ९७ ॥
गन्धमोहितसर्वाङ्गो गन्धचञ्चलमोहिनी[7] ।
गन्धपुष्पधूपदीपनैवेद्यादिप्रपूजिता ॥ ९८ ॥
[8]गन्धागुरुसुकस्तूरी कुङ्कुमादिविमण्डिता[9] ।
गोकुला मधुरानन्दा पुष्पगन्धान्तरस्थिता[10] ॥ ९९ ॥
गन्धमादनसम्भूतपुष्पमाल्यविभूषितः[11] ।
[12]रत्नाद्यशेषालङ्कारमालामण्डितविग्रहः ॥ १०० ॥

---

१. खरबुद्धि ख० ।
२. गणाधीशो गुहप्रिया ख० ।
३. गमप्राप्ति ··· गकीरिणी ख० ।
४. गारुडेशोहि गन्धर्वपती ख० ।
५. नाद ······ ख० ।
६. गाणपत्यस्थो ख० ।
७. चन्दन ख० ।
८. चन्दनागुरु ख० ।
९. सुमण्डिता ख० ।
१०. स्थित ख० ।
११. विभूषिता ख० ।
१२. मणि ख० ।

स्वर्णाद्यशेषालङ्कारहारमालाविमण्डिता ।
[1]करवीरायुतप्रख्यरक्तलोचनपङ्कजः ॥ १०१ ॥
जवाकोटिकोटिशत चारुलोचनपङ्कजा ।
घनकोटिमहानास्य[2] पङ्कजालोलविग्रहा ॥ १०२ ॥
घर्घरध्वनिमानन्दकाव्याम्बुधिमुखाम्बुजा ।
घोरचित्रसर्पराज मालाकोटिशताङ्कभृत् ॥ १०३ ॥
घनघोरमहानाग[3] चित्रमालाविभूषिता ।
घण्टाकोटिमहानादमानन्दलोलविग्रहः ॥ १०४ ॥
घण्टाडमरुमन्त्रादिध्यानानन्दकराम्बुजा ।
[4]घटकोटिकोटिशतसहस्रमङ्गलासना ॥ १०५ ॥
घण्टाशङ्खपद्मचक्रवराभयकराम्बुजा ।
घातको रिपुकोटीनां शुम्भादीनां[6] तथा सताम् ॥ १०६ ॥
घातिनीदैत्यघोराश्च[7] शत्रूणां सततं तथा ।
चार्वाकमतसङ्घातचतुराननपङ्कजः ॥ १०७ ॥
चञ्चलानन्दसर्वार्थसारवाग्वादिनीश्वरी ।
चन्द्रकोटिसुनिर्मल[8] मालालम्बितकण्ठभृत् ॥ १०८ ॥
चन्द्रकोटिसमानस्य पङ्केरुहमनोहरा ।
चन्द्रज्योत्स्नायुतप्रख्यहारभूषितमस्तकः ॥ १०९ ॥

---

१. कुसुमप्रख्या ख० ।
२. समानास्य ख० ।
३. ख० पु० नास्ति ।
४. यन्त्रादि ख० ।
५. पद्यार्धं ख० नास्ति ।
६. कुम्भादीना तथा सती ख० ।
७. घोरात्मभयानां नाशिनी तथा सर्वशत्रुविनाशाय…… ख० ।
८. निर्माण क० ।

[1]चन्द्रविम्बसहस्राभायुतभूषितमस्तकः[2] ।
चारुचन्द्रकान्तमणिमणिहारायुताङ्गभृत् ॥ ११० ॥

चन्दनागुरुकस्तूरी कुङ्कुमासक्तमालिनी ।
चण्डमुण्डमहामुण्डायुतनिर्मलमाल्यभृत्[3] ॥ १११ ॥

[4]चण्डमुण्डघोरमुण्डनिर्माणकुलमालिनी[5] ।
चण्डाट्टहासघोराढ्यवदनाम्भोजचञ्चलः ॥ ११२ ॥

चलत्खञ्जननेत्राम्भोरुहमोहितशङ्करा[6] ।
चलदम्भोजनयनानन्दपुष्करमोहितः ॥ ११३ ॥

चलदिन्दुभाषमाणविग्रहखेदचन्द्रिका[7] ।
चन्द्रार्धकोटिकिरण चूडामण्डलमण्डितः ॥ ११४ ॥

चन्द्रचूडाम्भोजमाला उत्तमाङ्गविमण्डितः[8] ।
[9]चलदर्कसहस्रान्तरत्नहारविभूषितः ॥ ११५ ॥

चलदर्ककोटिशतमुखाम्भोजतपोज्वला[10] ।
चारुरत्नासनाम्भोजचन्द्रिकामध्यसंस्थितः ॥ ११६ ॥

---

१. चन्द्र ख० ।
२. मस्तका ख० ।
३. निर्माल्य ख० ।
४. महामुण्ड ख० ।
५. निर्माल्य ख० ।
६. शङ्करः ख० ।
७. स्वेद ख० ।
८. विमण्डिता ख० ।
९. सहस्राभ ख० ।
१०. भयोज्वला ख० ।

चारुद्वादश[1] पत्रादि कर्णिकासुप्रकाशिका ।
[2]चमत्कारगटङ्कारधनुर्बाणकराम्बुजः ॥ ११७ ॥

चतुर्थवेदगाथादि स्तुतिकोटिसुसिद्धिदा ।
चलदम्बुजनेत्रार्कवह्निचन्द्रत्रयान्वितः ॥ ११८ ॥

चलत्सहस्रसङ्ख्यात[3] पङ्कजादिप्रकाशिका ।
चमत्काराट्टहासास्य स्मितपङ्कजराजयः ॥ ११९ ॥

चमत्कारमहाघोरसाट्टाट्टहासशोभिता ।
छायासहस्रसंसारशीतलानिलशीतलः ॥ १२० ॥

छदपद्मप्रभामानसिंहासनसमास्थिता ।
छलत्कोटिदैत्यराजमुण्डमालाविभूषितः ॥ १२१ ॥

छिन्नादिकोटिमन्त्रार्थज्ञानचैतन्यकारिणी ।
चित्रमार्गमहाध्वान्तग्रन्थिसम्भेदकारकः ॥ १२२ ॥

अस्त्रकास्त्रादिब्रह्मास्त्र सहस्र कोटिधारिणी ।
अजामांसादिसङ्क्षरसामोदप्रवाहगः ॥ १२३ ॥

छेदनादि महोग्रस्त्रे भुजवामप्रकाशिनी ।
जयाख्यादिमहासाम ज्ञानार्थस्य प्रकाशकः ॥ १२४ ॥

जायागणहृदम्भोज बुद्धिज्ञानप्रकाशिनी ।
जनार्दनप्रेमभाव महाधनसुखप्रदः ॥ १२५ ॥

जगदीशकुलानन्दसिन्धुपङ्कजवासिनी ।
जीवनास्थादिजनकः परमानन्दयोगिनाम् ॥ १२६ ॥

जननी योगशास्त्राणां भक्तानां पादपद्मयोः ।
रूक्षपवननिर्वातमहोल्कापातकारुणः ॥ १२७ ॥

---

१. पुत्रादि ख० ।
२. चमत्कारघटाङ्कारवधूर्बालकराम्बुजः ख० ।
३. चलत्त्रदलपङ्केरुहादिप्रकाशिका ख० ।

झर्झरीमधुरी वीणा वेणुशङ्खप्रवादिनी ।
झनत्कारौघसंहारकरदण्डविशानधृक् ॥ १२८ ॥

झर्झरीनायिकाय्र्यादिकराम्भोजनिषेविता ।
टङ्कारभावसंहारमहाजागरवेशधृक् ॥ १२९ ॥

टङ्कासिपाशुपातास्त्र चर्मकार्मुकधारिणी ।
टलनानलसङ्घट्टपट्टाम्बरविभूषितः ॥ १३० ॥

टुन्टुनी किङ्किणी कोटि विचित्रध्वनिगामिनी ।
ठं ठं ठं मनुमूलान्तः स्वप्रकाशप्रबोधकः ॥ १३१ ॥

ठं ठं ठं प्रखराह्लादनादसम्वादवादिनी ।
ठं ठं ठं कूर्मपृष्ठस्थः कामचाकारभासनः ॥ १३२ ॥

ठं ठं ठं बीजवह्निस्थ हातुकभ्रूविभूषिता ।
डामरप्रखराह्लादसिद्धिविद्याप्रकाशकः ॥ १३३ ॥

डिण्डिमध्वानमधुरवाणीसम्मुखपङ्कजा ।
डं डं डं खरकृत्यादि मारणान्तः प्रकाशिका ॥ १३४ ॥

ढक्कारवाद्यभूपूरतारसप्तस्वराश्रयः ।
ढौं ढौं ढौं ढौकढक्कलं वह्निजायामनुप्रियः ॥ १३५ ॥

ढं ढं ढं ढौं ढ ढं ढ कृत्येत्थाहेति वासिनी ।
तारकब्रह्ममन्त्रस्थः श्रीपादपद्मभावकः ॥ १३६ ॥

तारिण्यादिमहामन्त्र सिद्धिसर्वार्थसिद्धिदा ।
तन्त्रमन्त्रमहायन्त्र वेदयोगसुसारवित् ॥ १३७ ॥

तालवेतालदैतालश्रीतालादिसुसिद्धदा ।
तरुकल्पलतापुष्पफलबीजप्रकाशकः ॥ १३८ ॥

तिन्तिडीतालहिन्तालतुलसीकुलवृक्षजा ।
अकारकूटविन्द्विन्दुमालामण्डितविग्रहः ॥ १३९ ॥

स्थातुप्रस्थप्रथागाथास्थूलस्थित्यन्तसंहरा ।
दरीकुञ्जहेममालावनमालादिभूपितः ॥ १४० ॥

दारिद्र्दुखदहनकालानलशतोपमः ।
दशसाहस्रवक्त्राम्भोरुहशोभितविग्रहः ॥ १४१ ॥

पाशाभःवराह्लादधनधर्मादिवर्धिनी ।
धर्मकोटिशतोल्लाससिद्धिऋद्धिसमृद्धिदा ॥ १४२ ॥

ध्यानयोगज्ञानयोगमन्त्रयोगफलप्रदा ।
नामकोटिशतानन्तसुकीर्तिगुणमोहनः ॥ १४३ ॥

निमित्तफलसद्भावभावाभावविवर्जिता ।
परमानन्दपदवी दानलोलपदाम्बुजः ॥ १४४ ॥

प्रतिष्ठासुनिवृत्तादि समाधिफलसाधिनी ।
फेरवीगणसन्मानवसुसिद्धिप्रदायकः ॥ १४५ ॥

फेत्कारीकुलतन्त्रादि फलसिद्धिस्वरूपिणी ।
वराङ्गनाकोटिकोटिकराम्भोज निसेविता ॥ १४६ ॥

वरदानज्ञानदान मोक्षदातिचञ्चला ।
भैरवानन्दनाथाख्य शतकोटिमुदान्वितः ॥ १४७ ॥

भावसिद्धिक्रियासिद्धि साध्यङ्गसिद्धिदायिनी ।
मकारपञ्चकाह्लादमहामोदशरीरधृक् ॥ १४८ ॥

मदिरादिपञ्चतत्त्वनिर्वाणज्ञानदायिनी ।
यजमानक्रियायोगविभागफलदायकः ॥ १४९ ॥

यशःसहस्रकोटिस्थ गुणगायनतत्परा ।
रणमध्यस्थकालाग्नि क्रोधधारसुविग्रहः ॥ १५० ॥

काकिनीशाकिनीशक्तियोगादि काकिनीकला ।
लक्षणायुतकोटीन्दुललाटतिलकान्वितः ॥ १५१ ॥

लाक्षाबन्धूकसिन्दूरवर्णलावण्यलालिता ।
वातायुतसहस्राङ्गघूर्णायमानभूधरः ॥ १५२ ॥

विवस्वत्प्रेमभक्तिस्थ चरणद्वन्द्वनिर्मला ।
श्रीशीतापतिशुद्धाङ्ग व्यासेन्द्रनीलसन्निभः ॥ १५३ ॥

शीतनीलाशतानन्दसागरप्रेमभक्तिदा ।
षट्पङ्केरुहदेवादिस्वप्रकाशप्रबोधिनी ॥ १५४ ॥

महोर्मिस्थषडाधारप्रसन्नहृदयाम्बुजा ।
श्यामप्रेमकलाबन्धसर्वाङ्गकुलनायकः ॥ १५५ ॥

संसारसारशास्त्रादि सम्बन्धसुन्दराश्रया ।
हसौः प्रेतमहाबीजमालाचित्रितकण्ठधृक् ॥ १५६ ॥

हकारवामकर्णाढ्य चन्द्रबिन्दुविभूषिता ।
लयसृष्टिस्थितिक्षेत्रपानपालकनामधृक् ॥ १५७ ॥

लक्ष्मीलक्षजपानन्दसिद्धिसिद्धान्तवर्णिनी ।
क्षुन्निवृत्तिक्षपारक्षा क्षुधाक्षोभनिवारकः ॥ १५८ ॥

क्षत्रियादिकुरुक्षेत्ररुणाक्षिप्तत्रिलोचना ।
अनन्त इतिहासस्थ आज्ञागामी च ईश्वरी ॥ १५९ ॥

उमेश उटकन्येशी ऋद्धिस्थहस्थगोमुखी ।
गकारेश्वरसंयुक्त तृकुण्डदेवतारिणी ॥ १६० ॥

एणाचीशप्रियानन्द ऐरावतकुलेश्वरी ।
ओढ्रपुष्पानन्तदीप्त ओढ्रपुष्पानखाग्रका ॥ १६१ ॥

ऐहृत्यशतकोटिस्थ औ दीर्घप्रणवाश्रया ।
अङ्गस्थाङ्गदेवस्था अर्यस्थश्चार्यमेश्वरी ॥ १६२ ॥

मातृकावर्णनिलयः सर्वमातृकलान्विता ।
मातृकामन्त्रजालस्थः प्रसन्नगुणदायिनी ॥ १६३ ॥

अत्युत्कटपथिप्रज्ञा गुणमातृपदेस्थिता ।
स्थावरानन्ददेवेशो विसर्गान्तरगामिनी ॥ १६४ ॥

अकलङ्को निष्कलङ्को निराधारो निराश्रया ।
निराश्रयो निराधारो निर्बीजो बीजयोगिनी ॥ १६५ ॥

निःशङ्को निस्पृहानन्दो सिन्धूरत्नावलिप्रभा ।
आकाशस्थः खेचरी च स्वर्गदाता शिवेश्वरी ॥ १६६ ॥

सूक्ष्मातिसूक्ष्मात्वैर्ज्ञेया दारापदुःखहारिणी ।
नानादेशसमुद्भूतो नानालङ्कारलङ्कृता ॥ १६७ ॥

नवीनाख्यो नूतनस्थ नयनाब्जनिवासिनी ।
विषयाख्यविषानन्दा विषयाशी विषापहा ॥ १६८ ॥

विषयातातीतभावस्थो विषयानन्दघातिनी ।
विषयच्छेदनास्त्रस्थो विषयज्ञाननाशिनी ॥ १६९ ॥

संसारछेदकच्छायोभवछायो भवान्तका ।
संसारार्थप्रवर्तश्च संसारपरिवर्तिका ॥ १७० ॥

संसारमोहहन्ता च संसारार्णवतारिणी ।
संसारघट्टकश्रीदासंसारध्वान्तमोहिनी ॥ १७१ ॥

पञ्चतत्वस्वरूपश्च पञ्चतत्वप्रबोधिनी ।
पार्थिवः पृथिवीशानी पृथुपूज्यः पुरातनी ॥ १७२ ॥

वरुणेशो वारुणा च वारिदेशो जलोद्यमा ।
मरुस्थो जीवनस्था च जलभुग्जलवाहना ॥ १७३ ॥

तेजः कान्तः प्रोज्वलस्था तेजोराशेस्तु तेजसी ।
तेजस्थस्तेजसो माला तेजः कीर्तिः स्वरस्मिगा ॥ १७४ ॥

पवनेशश्चानिलस्था परमात्मा निनान्तरा ।
वायुपूरककारी च वायुकुम्भकवर्धिनी ॥ १७५ ॥

वायुच्छिद्रकरो वाता वायुनिर्गममुद्रिका ।
कुम्भकस्थो रेचकस्था पूरकस्थातिपूरिणी ॥ १७६ ॥
वाय्वाकाशाधाररूपी वायुसञ्चारकारिणी ।
वायुसिद्धिकरो दात्री वायुयोगी च वायुगा ॥ १७७ ॥
आकाशप्रकरो ब्राह्मी आकाशान्तर्गतद्विगा ।
आकाश कुम्भकानन्दो गगणाह्लादवर्धिनी ॥ १७८ ॥
गगनाच्छन्नदेहस्थो गगनाभेदकारिणी ।
गगनादिमहासिद्धो गगनग्रन्थिभेदिनी ॥ १७९ ॥
कलकर्मा महाकाली कालयोगी च कालिका ।
कालछत्रः कालहत्या कालदेवो हि कालिका ॥ १८० ॥
कालब्रह्मस्वरूपश्च कालितत्त्वार्थरक्षिणी ।
दिगम्बरो दिकपतिस्था दिगात्मा दिगिभास्वरा ॥ १८१ ॥
दिक्पालस्थो दिक्प्रसन्ना दिग्बलो दिक्कुलेश्वरी ।
दिगधोरो दिग्वसना दिग्वीरा दिक्पतीश्वरी ॥ १८२ ॥
आत्मार्थो व्यापीतत्त्वज्ञ आत्मज्ञानी च सात्मिका ।
आत्मीयश्चात्मबीजस्था चान्तरात्मात्ममोहिनी॥ १८३ ॥
आत्मसञ्ज्ञानकारी च आत्मानन्दस्वरूपिणी ।
आत्मयज्ञो महात्मज्ञा महात्मात्मप्रकाशिनी ॥ १८४ ॥
[1]आत्मविकारहन्ता च विद्यात्मीयादिदेवता ।
मनोयोगकरो दुर्गा मनः [2]प्रत्यक्षईश्वरी ॥ १८५ ॥
मनोभवनिहन्ता च मनोभवविवर्धिनी ।
[3]मनश्चान्तरीक्षयोगो निराकारगुणोदया ॥ १८६ ॥

---

१. चमत्काराट्टहासेत्यारभ्य विद्यात्मीयादि देवतान्तं श्लोकजातं ख पुस्तके नास्ति ।
२. प्रत्यक्षकेश्वरी ख० ।
३. मनसान्तरिक्ष……ख० ।

[1]मनोनिराकारयोगी मनोयोगेन्द्रसाक्षिणी ।
[2]मनःप्रतिष्ठो मनसा मानशङ्का मनोगतिः ॥ १८७ ॥

नवद्रव्यनिगूढार्थो नरेन्द्रविनिवारिणी[3] ।
नवीनगुणकर्मादिसाकारः खगगामिनी ॥ १८८ ॥

अत्युन्मत्ता महावाणी वायवीशो महानिला ।
सर्वपापापहन्ता च सर्वव्याधिनिवारिणी ॥ १८९ ॥

द्वारदेवीश्वरी प्रीतिः प्रलयाग्निः करालिनी ।
[4]भूषण्डगणतातश्च भूःषण्डरुधिरप्रदा ॥ १९० ॥

[5]काकावलीशः सर्वेशी काकपुच्छधरो जया ।
[6]अजितेशो जितानन्दा वीरभद्रः प्रभावती ॥ १९१ ॥

अन्तर्नाडीगतप्राणो वैशेषिकगुणोदया ।
[7]रत्ननिर्मितपीठस्थः सिंहस्था रथगामिनी ॥ १९२ ॥

कुलकोटीश्वराचार्यो वासुदेवनिषेविता ।
आधारविरहज्ञानी सर्वाधारस्वरूपिणी ॥ १९३ ॥

सर्वज्ञः सर्वविज्ञाना मार्तण्डो[8] यश इल्वला ।
[9]इन्द्रेशो विन्ध्यशैलेशी वारणेशः प्रकाशिनी ॥ १९४ ॥

---

१. मनोविकारयोगी ख० ।
२. मनःपूर्तिर्मनोज्योतिर्मीनसेशो······ख० ।
३. मणिवासिनी ख० ।
४. भुषण्ड ख० ।
५. ककारादीशः ख० ।
६. अजितेशा जितानन्दो ख० ।
७. रत्ननिर्माणभाकोटिसिंहस्थोरथगामिनी ख० ।
८. मार्तण्डेयेन्दुवन्दिता ख० ।
९. उत्केशी विल्वशैलेशी चारुनेत्रप्रकाशिनी ख० ।

[1]अनन्तभुजराजेन्द्रो अनन्ताक्षरनाशिनी ।
[2]आशीर्वादस्तु वरदोऽनुग्रहोऽनुग्रहक्रिया ॥ १९५ ॥

प्रेतासनसमासीनो मेरुकुञ्जनिवासिनी ।
मणिमन्दिरमध्यस्थो मणिपीठनिवासिनी ॥ १९६ ॥

सर्वप्रहरणः[3] प्रेतो विधिविद्याप्रकाशिनी ।
प्रचण्डनयनानन्दो [4]मञ्जीरकलरञ्जिनी ॥ १९७ ॥

कलमञ्जीरपादाब्जो [5]चलमृत्युपरायणा ।
कुलमालाव्यापिताङ्गः[6] कुलेन्द्रः कुलपण्डिता ॥ १९८ ॥

बालिकेशो रुद्रचण्डा बालेन्द्रः प्राणबालिका ।
कुमारीशः काममाता मन्दिरेशः स्वमन्दिरा ॥ १९९ ॥

अकालजननीनाथो [7]विदग्धात्मा प्रियङ्करी ।
वेदाद्यो वेदजननी वैराग्यस्थो[8] विरागदा ॥ २०० ॥

स्मितहास्यास्यकमलः स्मितहास्यविमोहिनी ।
दन्तुरेशो दन्तुरु च दन्तीशो दशनप्रभा ॥ २०१ ॥

दिग्दन्तो हि दिग्दशना भ्रष्टभुक् चर्वणप्रिया ।
मांसप्रधाना[9] भोक्ता च प्रधानमांसभक्षिणी ॥ २०२ ॥

---

१. अनन्तराजराजेन्द्रो ज्वालानगसुरनाशिनी ।
२. आशीर्वादरता देवी भक्तानुग्रहकातरा ख० ।
३. सर्वप्रहरणोपेतो ख० ।
४. कनकाञ्जलिः ख० ।
५. सर्वत्यागपरायणा ख० ।
६. व्यापिताङ्गी ख० ।
७. विश्वात्मा सुप्रियङ्करी ख० ।
८. वैराग्यस्थो ख० ।
९. ......प्रधाननोक्ता च ख० ।

[1]मत्स्यमांसमहामुद्रा [2]रजोरुधिरशुक्रप्रिया ।
सुरामांसमहामीनमुद्रामैथुनसुप्रिया ॥ २०३ ॥
कुलद्रव्यप्रियानन्दो [3]मद्यादिकुलसिद्धिदा ।
हृत्कण्ठभ्रूसहस्रारभेदनोऽन्ते[4]विभेदिनी ॥ २०४ ॥
प्रसन्नहृदयाम्भोजः प्रसन्नहृदयाम्बुजा ।
प्रसन्नवरदानाढ्यः [5]प्रसन्नवरदायिनी ॥ २०५ ॥
प्रेमभक्तिप्रकाशाढ्यः प्रेमानन्दप्रकाशिनी ॥ २०६ ॥
प्रभाकरफलोदयः[6] परमसूक्ष्मपुरप्रिया
[7]प्रभातरविरश्मिगः प्रथमभानुशोभान्विता ।
प्रचण्डरिपुमन्मथः[8] प्रचलितेन्दुदेहोद्गतः
[9]प्रभापटलपाटलप्रचयधर्मपुञ्जार्चिता ॥ २०७ ॥
सुरेन्द्रगणपूजितः [10]सुरवरेशसम्पूजिता
सुरेन्द्रकुल[11]सेवितो नरपतीन्द्रसंसेविता ।
[12]गणेन्द्रगणनायको गणपतीन्द्रदेवात्मजा
भवार्णवगतारको जलधिकर्णधारप्रिया ॥ २०८ ॥

---

१. मद्य ख० ।
२. रुधिर सुप्रिया ख० ।
३. प्रियानन्दा ख० ।
४. भूरिभेदिनी ख० ।
५. प्रेमानन्द प्रकाशिनी ख० ।
६. फलोदारः ख० ।
७. प्रकाररश्मिरूपः प्रथमोभानुशोभिता ख० ।
८. विपुलोन्मत्तः चलितेन्दु प्रभावहः ख० ।
९. जटिलः प्रभूतधर्मपूजिता ख० ।
१०. सुरेन्द्रवेशपूजिता ख० ।
११. नरेन्द्रकुलसेविता ख० ।
१२. नगेन्द्र गणनायको नगपतीन्द्र देवात्मजा ।

सुरासुरकुलोद्भवः सुररिपुप्रसिद्धिस्थिता
सुरारिगणघातकः सुरगणेन्द्रसंसिद्धिदा ।
[1]अभीप्सितफलप्रदः सुरवरादिसिद्धिप्रदा
[2]प्रियाङ्गजकुलार्थदः सुतधनापवर्गप्रदा ॥ २०९ ॥

[3]शिवस्वशिवकाकिनी हरहरा च भीमस्वना[4]
क्षितीशइषुरक्षका [5]समनदर्पहन्तोदया ।
गुणेश्वर उमापती[6] हृदयपद्मभेदी[7] गतिः
क्षपाकरललाटधृक् [8]स्वसुखमार्गसंन्दायिनी ॥ २१० ॥

श्मशानतटनिष्पट[9]प्रचटहासकालङ्कृता
हठत्शठमनस्तटे सुरकपाटसंछेदकः ।
[10]स्मराननविवर्धनः [11]प्रियवसन्तसम्वायवी
विराजितमुखाम्बुजः [12]कमलमञ्जसिंहासना ॥ २११ ॥

भवो भवपतिप्रभाभव कविश्च भाव्यासुरैः[13]
क्रियेश्वर ईलावती [14]तरुणगाहितारावती ।

---

१. बलिच्छलनतत्परः ख० ।
२. प्रियद्विज ख० ।
३. शिवश्च शिवकामिनी ख० ।
४. सभा ख० ।
५. मदनदर्पहन्त्रादयः ख० ।
६. उमावती ।
७. भेदे ख० ।
८. विकट हासविस्फारिता ख० ।
९. निष्पटः स्मरकपाटसञ्छेदकः ख० ।
१०. स्मरानलविमर्दन ख० ।
११. स द्रायवी ख० ।
१२. मञ्ज क० ।
१३. भव्याभवः ख०
१४. तरुणगो ख० ।

